# श्री गोपाल चरितं काव्यम्

## ( राज भाषा भूषितम् )



श्री वैष्णव वेदान्ताचार्य स्वामी रामदासेन रचितम्



18 जुलाई, 1970

ऋषिपाणि नभोनेत्र, संख्येऽब्दे वैक्रमे वरे

गोपाल चरितं नाम काव्यमेतत्प्रकाशितम्

# श्री गोपाल चरितं काव्यम्

( राज भाषा भूषितम् )

---

श्री वैष्णव वेदान्ताचार्य स्वामि रामदासेन रचितम्

---

ऋषिपाणि नभोनेत्र, संख्येऽब्दे वैक्रमे वरे

गोपाल चरितं नाम काव्यमेत प्रकाशितम्

परमहंस श्री १०८ स्वामी रामदास जी द्वारा लिखित 'श्री गोपाल चरितम्' नामक काव्य को पढ़ने का सौभाग्य मुझे प्राप्त हुआ पढ़ कर चित्त अत्यन्त प्रमुदित हुआ। मेरे विचार में प्रत्येक पाठक पढ़ कर आनन्द विभोर हुए बिना नहीं रहेगा क्योंकि काव्य कला के रसमय चमत्कार के साथ इस काव्य में रचयिता के हृदय और मस्तिष्क की उच्च विभूतियां भी पाठक को सत्प्रेरणा दिये बिना नहीं रहतीं।

प्रथम तो इसके चरित नायक का चरित ही इतना समुज्ज्वल और उदात्त है कि पाठक आनन्द सिंधु में तरंगित होने लगता है और फिर ऊपर से लेखक की शैली इतनी समृद्ध सरल एवं स्वाभाविक है कि—स्वर्ण में गंध का योग हो जाता है। संस्कृतज्ञ पाठ समग्र को पढ़े बिना छोड़ नहीं सकता। अवश्य ही इसके दर्शन से स्वतः भान होता है कि संस्कृत में कवियों महाकवियों की परम्परा कभी समाप्त नहीं हो सकती ऐसे ही कवियों की तपश्चर्या के कारण मां अमर भारती सदैव अमर रहेगी और उसके रत्न कोष की भी समृद्धि निरन्तर वृद्धिगत होती रहेगी।

काव्य की उपयोगिता सन्देह से ऊपर है साहित्य, कला, समाज, धर्म एवं राजनीति के दृष्टि कोण से उक्त रचना सर्वथा अपना विशेष मूल्य रखती है इसमें जहां वेदान्त गीता आदि के निगूढ़ तत्व काव्य की रसमय पद्धति में सर्व सुलभ किये गए हैं वहां इसमें समाज एवं राजनीति की भी आधुनिक अनेक समस्याओं के हल की ओर भी संकेत किया गया है।

हमारा विचार है कि ऐसी उदात्त एवं हितकर रचना का जितना प्रचार हो उतना थोड़ा। हिन्दी आदि भाषाओं में भी यदि इसका उल्था करके संस्कृत ज्ञान से रहित लोगों को भी इसके अध्ययन का सौभाग्य दिया जाए तो और भी वाञ्छनीय है। हमारे विचार में इस काव्य का कोई कोई भाग यदि संस्कृत की विभिन्न परीक्षाओं के कोर्स में रखा जाए तो और भी समुचित होगा।

मैं लेखक को इस अनुपम सफलता पर बधाई देने के साथ साथ संस्कृत प्रेमी सज्जनों से अनुरोध करूंगा कि वे इस काव्य रत्न के प्रचार एवं प्रसार के यत्न में लेखक को पूर्ण सहयोग प्रदान करें।

सरकार के भाषा विभागों की भी ऐसी बहूमूल्य रचनाओं के लेखकों का उचित सम्मान करके अपने कर्त्तव्य का पालन करना चाहिये।

विदुषामनुचरः—

दुर्गादत्त वाग्मी व्याकरणाचार्य

प्रिंसिपल श्री सनातन धर्म

२८—६—७० संस्कृत महाविद्यालय, अम्बाला शहर।

श्री गोपाल चरितं काव्यं श्री स्वामी रामदास वेदान्ता चार्य लिखितं दृष्ट्वा महान् हर्षो बभूव स्थल प्रान्तीय वैष्णव संप्रदाय मुकुट मणि कृतिरियं देश हिताय जनलाभाय च सुकृतिकरा भविष्यतीति मे मतिः ।

भीमसेन शर्मा प्रतिवादी भयंकरः
नूरपुर थल वास्तव्यः संप्रति लाजपत
नगर न्यू दिल्ली स्टोकस्ट १५०/१५५
२१—५—७०

वेदान्ताचार्योपाधिमतां श्री वैष्णव संप्रदायानुगत गति मतां श्री स्वामि रामदास महानुभावानां विरचित मेतत् श्री गोपाल चरितं नाम काव्यं मयावलोकित माद्योपान्तम् ।

प्रबन्धेऽस्मिन् कवि कुलालं काराणां श्री कालिदासा दीनां स्व स्व काव्येषु प्रदर्शिताः सर्वा अपि छन्दोऽलंकार गुण रीत्यादि सत्काव्योचित विशिष्टा विभूतयः समुपलभ्यन्ते ।

विषय विवेचनं त्वत्र सानुकूलं चातिशयते किल पूर्वं पूर्वेषां बहूनां केषांचित् कवि प्राख्यानां कविता सम्बन्धिनीं दिव्यानुभूतिम् ।

यद्यपि काव्यमिदं शांत रस प्रधानं धीर प्रशान्तश्चात्र वर्णनीय विषयीभूतो वीतरागादि दुर्वृत्तिकः परम वैष्णवः श्री गोपालदास इति ख्यातो यतिवर्योऽस्त ।

तथापि सरसतोपपादन दृष्टया प्रस्तुत प्रबन्धे क्वचित् क्वचित् शृङ्गार रसस्यापीषद्बिन्दु पातोऽनुभव पथ मायास्यति पठतां जनानां इत्यहं मन्ये ।

तच्चाप्युचित मेवा भाति यतो न ह्यद्यत्वे कोऽपि ज्वराक्रान्तो गुडूच्यादि कट्वौषधं पातु मीहते तदेव चेन्माक्षिक मिश्रितं स्यात् तदा यथा कथंचिद् पातुमुत्सहेतेति निर्विवादम् ।

श्रूयते यत् महात्मनः श्री गोपाल दासस्याशेष जीवनं प्राणि मात्र स्योपकार कर्म स्वेव व्यतीतमासीत् इति तदुपजीव्यैव ग्रन्थ कृताऽस्य महा-पुरुषस्य जीवन कालिक चरित्र चित्रण मकारि ।

ग्रन्थ श्चैष संस्कृत भाषानभिज्ञाना मपि साधारण प्राणिनामिष्ट फल प्रदो भवे दित्याकलप्य नृगिरानुवादितो लेखक महोदयेन ।

अथापि चेदेष ग्रन्थः शिक्षा विभागस्योच्चाधिकारि वर्गस्यादरस्थानं प्राप्नुयात्तदोत्तम श्रेणिकानां छात्र छात्रिकाणां महानुपकारः स्यादिति किं बहुना विज्ञेषु ।

अनु मोदक :—
शास्त्री गोतम शर्मा
ऐंग्लो संस्कृत महाविद्यालयात् प्राप्तावकाशोऽम्बाला नगरे ।

मयैतत् श्री गोपाल चरितं नाम काव्यं सम्यगवलोकितम् येन ग्रन्थ-कर्तुर्वेदान्ताचार्य वैष्णवधर्मधुरीण श्री रामदास महात्मनोऽपूर्वं कवित्वाव-बोधस्य परिचयो जायते ।

काव्येऽस्मिन् निबन्ध रूपेण विविध विषयाणां समावेशो वर्ततेतराम् वर्णन शैली चास्य लौकिकालौकिक ज्ञानस्य चर्म सीमान मति क्रम्य पठतां शृण्वतां च विदुषां जनानां मनोदीर्घिकां सुतरा मुल्लासयति इति प्रत्यक्ष गोचर मेतद् ।

स्थाने स्थाने च काव्य कृतां सर्वेऽपि गुणा कवितात्व पद्धति मनु सरन्त्यस्मिन् लघु काव्ये यद्यपि नाद्यत्वे सर्वासां भाषाणां जन्मदात्रीति प्रसिद्धायाः संस्कृत भाषायाः क्वचिद् गौरवं दृश्यतेजीर्णं शीर्णं कलेवराया जनन्या इव ।

तथाप्येषा केषांचिद् भक्ति भाव परि प्लुतात्मनां सत्पुत्राणा मौदार्याति रेकादुच्छ्व सन्तीव विलोक्यते श्री रामदास विधानां निष्काम सेवा परायणानाम् ।

"नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ।
कवित्वं दुर्लभं सद्भिर्वर्णितं नात्र संशयः ।

इत्युक्त दिशा नाहं वक्तुं जिह्रेमि यदेवं विधं काव्य रचनात्मकं महत्कार्यं पूर्व जन्मार्जित पुण्यैर्विना सर्व साधारणो जनः कर्तुं नशक्नोतीति किमु वक्तव्यम् ।

अथापिचेत् चैतत्काव्यं राजकीय शिक्षा विभागाधिष्ठातृ वर्गः शिक्षणालयेषूच्चोच्च श्रेणिकाना मध्येतृवराणां पाठ्यक्रमे सुनियोजयेत्तदा न केवलं ग्रन्थ लेखकस्य हर्ष विषयः स्याच्छात्राणा मपि महानुपकारः स्यादि त्यहं मन्ये इतिशम् ।

संमति प्रदः

श्री देवकी नन्दनः शास्त्री विद्यालंकारः
मुख्य हिन्दी संस्कृताध्यापकः
श्री गं० रा० स० ध० हाई स्कूल अम्बाला शहर ।

विज्ञायैतद् यत्तत्र भवतां श्री गोपाल चरितं काव्यं प्रकाश मान मस्ति तदेतच्च चिरलुप्त काव्यकला कौशलं भारतं संस्कृतवाङ्मये पुनः प्रकाशोन्मुखं करिष्यतीति अहं मन्ये ।

भवन्मुखारविन्दादेतत् श्रवण सौभाग्य गर्वितोऽहं शक्नोमि वक्तुं यदस्मिन् प्रबन्धे कवि कुल भूषण श्री कालिदासस्य काव्य कलायाः श्री मद्भगवद्गीताया वेदान्त शास्त्रस्य चान्तस्तत्वं निगूढ मप्यत्र निर्मल निर्झरनिलीन मीन लीला लास्य मिव सुललितं विलोक्यते ।

प्रस्तुत काव्यस्गोपमादीना मलंकाराणा प्राचुर्येणोत्तम काव्यता तु निष्पन्नैवाभाति शान्त रसस्य प्रकर्षतया माधुर्यादि गुणैश्चाप्येतत् काव्यं सर्वथा परमोत्तम काव्येषु गणनीयं भष्यितीति मे दृढ़ प्रत्ययः ।

मदीयोऽयमभिलाष श्चेदेतत्काव्यं नागरिक भाषाया मनूदितं भवेन्नाम तदा नून मदः काव्यं सव साधारणजनस्योपयोगि सिध्येत् घुणाक्षर न्यायेन च यत् किञ्चित् पठतां शृण्वतां चाबाल वृद्धानां समेषामपि स्त्री पुरुषाणां मनो विनोदस्य हेतु भूतमपि स्यादिति मे प्रत्ययः ।

किंच सत्येव संस्कृत भाषां प्रति सर्वेषां भारतीयानां विशेषाभि-रुचि श्चिर सुप्तापि जागृति मीयात् इत्यतः संस्कृताभिज्ञानां पुरतो मेऽभ्यर्थना ऽस्ति यदभिनव काव्यमिद हृदयेन समादरिष्यन्ति तत्र श्रीमन्तो विद्वत्कोटिका महानुभावा इति शम् ।

अनुमोदको विनीत :—
शास्त्री चन्द्रदत्तः
हर्ष कुटी सोलन हिमाचल प्रदेशाद् ।

# भूमिका

सुविदित मेवैतद् विद्यावतां धीमतां यदस्मिन् मायामये काम क्रोधादि विकार व्याप्ते पंचात्मके विश्वस्मिन् विश्वे वसतां जीवानां आपातरमणीय शब्दादि वर्गं मेव सुख हेतुत्वेनाभि भजतां परमार्थरूपवास्तविक हानिः स्पष्टैव । प्राय: कुलाल चक्रवत् सततं भ्रमतां तेषां विश्राम पदं तु दुर्लभ-मेवास्ति सत्यां चैतस्यां दशायां कथं जन्मपरंपरागत सुख कामना सिद्धि रस्त्विति विचारे प्रस्तुते सतां ब्रह्मविदां स्मृति: पुरतोऽभ्येति । संसार सागर मज्जतो जनान् तारयितुं सन्त एव सन्ति समर्थाः पुण्य पुञ्जलभ्य सत्संगति बिना न कश्चिदप्युपायस्ततुं भवाम्भोधिम् भगवत्प्रणीताया मस्यां धरायां यदा कदाचित् प्रभुप्रेरिताः केऽपि विरला: परमार्थिनो महात्मानो माया जाल वद्ध जीवानुद्धर्तु मवत रन्तीति । एतेन प्रासंगिक निर्दिष्ट क्रमेण पुरा सरस सुन्दर पंचाबु प्रांतस्य पश्चिमे भागे सरगोधामण्डलान्तर्गतनूरपुर थलाख्य पुरे परमहंसो वीतरागः तपोनिधिः सर्वगुणगणागारः परोपकारै कलक्ष्यः ब्रह्मनिष्ठ: श्री विरक्त वैष्णव संप्रदायालंकार भूत: सच्चिदानन्द भगवद्राम-मूलकांनंत श्री विभूषित श्री रामानंदाचार्य परिवर्द्धित श्री सप्रदायान्तर्गत: परम पूज्य: श्री स्वामि गोपालदासो नाम महात्मा प्रादुर्बभूवयश्चिर मुषित्-वेह लोके समाहितेन मनसा वाचा कर्मणा च व्यापिका मुपकृतिं विधायाथ महतोद्योगेन च भारतीय संस्कृति प्रसार्य कालक्रमानुसारं द्व्यधिकद्विसहस्र संख्यात्मके वैक्रमेऽब्दे साकेत लोकं प्रययौ । सांप्रतं तं स्मरतामपि जनानां केनचिदपि सांसारिक विशेष हेतुना न चलति चेतो लक्ष्यात् मनागपि सच स्व प्रसारित सिद्धांताखण्ड धारा संचालनार्थ मुतराधिकारिता मपि जीवन काल एवाकरोत् सौभाग्य योगतो मयापि किंचित् कालाय तत्समीपता लब्धेति पूर्वकालिक तद्विशेष कृति संस्मरण संस्कृते मन्मनसि तद्विषयक किंचिल्लेखन भावना समुद्भूता यद्यपि लघुबुद्धि रहं नार्होऽस्मि सर्वथाऽस्यानंत गुणगणागारस्य विरक्तवर्ग शिरोमणेः करामलकवदशेष विश्व दर्शिनः प्रस्तुत महापुरुषस्य गम्भीर चरित लेखन मये महत्कार्येऽस्मिन् तथापि मनस्तु स्वेष्ट भावं प्रति धावमानं न केनापि रोद्धुं शक्यम् इत्येवं विवशस्यापि मे प्रवृत्तिरिह तल्लेखन विषयेऽजायत पञ्च विंशति सर्गात्मकं श्री गोपाल चरितं नामैतत् काव्यं विरचय्य बाल लीलायित मेव, इत्यतो नैष मे प्रयासः स्वान्तर्गत काचिद्विशेषता प्रदर्शनार्थ मिति बुधैर्विज्ञेयम्, आशासे यदिमां कृतिं स्वदृष्टि गतां कुर्वन्तो गुणग्राहिणो नीर क्षीर विवेकिन: हंसा इव महानु भावा अनुग्रहीष्यन्ति मामिति प्रमाद हैतुकं शब्दादिक स्खलितं च स्वयं समाधास्यन्ति परमोदाराः तात्पर्य्यैलक्ष्या सज्जना इत्यलम् ।

विद्वत्कृपाकांक्षी :—

श्री वैष्णव रामदासः ।

# समर्पणम्

परम पूज्य परमहंस वृद्धगुरु श्री स्वामि गोपालदासाचार्याणां तच्छिष्य पूज्यपाद श्री गुरुवर्य्य स्वामि भवभंजनदासाचार्याणां च चरण कमलेषु सादरं काव्यमेतत् समर्प्यते ।

# "आभार प्रदर्शनम्"

यैर्महानुभावै र्मुद्रणात्पूर्व मेतत्काव्य विषये स्वीय संमति प्रदानं कृतं यैश्च मुद्रण समयेऽभूतपूर्व इवात्मीय सहयोगः प्रदर्शितः तथा यैः श्रद्धामूलार्थिक सहानुभूतिः कृतास्ति इत्येतेषां सर्वेषांमपि हार्दिक धन्यवादः क्रियते :

नाहं कविर्नापि कुले कवीनां लेभे सुशिक्षां कविता कलायाम् ।
श्री शारदायास्तु वर प्रसादात् शक्तोऽभवं काव्य कृतौ कृतीव ॥१॥
विद्या गुरुणा मति चाशिषोऽपि सम्प्रेरयामासुरुपार्जिता माम् ।
सत्सेवयाऽसीम फलानुरुपं ग्रन्थस्य निर्माणविधावमुष्य ॥२॥

---

# "सर्ग सूचिका"



---

# शुद्धि पत्र

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २ | १ | सोद्ययं | सोद्यमं |
| ३ | ११ | नमश्च | नभश्च |
| ३ | १८ | तझे | तक्के |
| ८ | १ | द्वाभ्यां | द्वाभ्यां |
| १२ | २८ | अगन्द | अमन्द |
| १६ | ५ | रभ्य | रम्य |
| २१ | १ | पूणौ | पूर्णौ |
| २३ | ५ | रागां | रागा |
| २४ | ६ | समझने | समझाने |
| ३० | २६ | वालिशात्वं | वालिशत्वं |
| ३५ | १ | मौश्वर | मीश्वरं |
| ४० | १ | दशन | दर्शन |
| ४३ | २ | यंम् | यम् |
| ४५ | ५ | ततऽन्य | ततोन्य |
| ४६ | ६ | यबना॥ | यंवना: |
| ६२ | १० | नैव | नैंव |
| ७५ | १४ | गाया | गोपी |
| ७६ | ५ | ददंश | ददर्श |
| ७८ | १७ | लता | लंता |
| ७६ | १ | तास्तु | ततस्तु |
| ७६ | १७ | निर्णाय | निर्णयं |
| ८१ | १ | तोष्य | संतोष्य |
| ८४ | २ | प्रसादेनं | प्रसादेन |
| ८५ | ३० | यतो | मतो |
| ८७ | १ | वे | वै |
| ८७ | २७ | मात्र | मात्र |
| ६३ | १३ | पूवै | पूर्वं |
| ६३ | २० | सवै | सर्वस्तु |
| १०० | १७ | विथोगेन | वियोगेन |
| १०० | २८ | कष्ट | कष्टं |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १०३ | २० | ईद् | ईद्द |
| १०३ | २९ | प्रजर्नन्ते | प्रवर्तन्ते |
| १०५ | ११ | ध्याय | ध्यान |
| १०५ | २२ | वय्यौ | वय्यौं |
| १०७ | ७ | दव | देव |
| १०८ | ३१ | द्वितीयेः | द्वितीये |
| १११ | १६ | हर्तिार | हर्तार |
| ११३ | ३२ | श्र्यसे | श्रेयसे |
| ११८ | २१ | वर्तमानां, | वर्तमानानां |
| १२० | २८ | भर्क्ति | भक्ति |
| १२४ | २८ | स्वमाधो | स्वभावो |
| १२५ | ४ | स्घितिकं | स्थितिकं |
| १२६ | १० | वक्रा | वक्त्रा |
| १२६ | १६ | रूरूदुः | रूरूदुः |
| १२७ | २४ | माथ्या | मय्या |
| १२८ | २ | भवत्ति | भवन्ति |
| १३१ | ६४ | कुशल | कुशलं |
| १३८ | २४ | जात | जातः |
| १३५ | २९ | ससारिणां | संसारिणां |
| १४३ | २६ | मंहिष्ठं | महिष्ठं |
| १४४ | १४ | तरगै | तरंगः |
| १४५ | ९ | तत्रव | तत्रैव |
| १४५ | २८ | व | वा |
| १४७ | १९ | परत | परत्र |
| १४८ | ७ | याम्वे | याम्ये |
| १४८ | २२ | मुदता | मुद्धृता |
| १५० | ४ | काष्ठात्द्य | काष्ठाद्य |
| १५२ | १९ | प्रतिच्छ | प्रतिगच्छ |
| १५४ | २९ | तेय | तेयं |
| १५४ | ३० | तोऽम | तोऽयं |
| १५७ | २९ | रम्याण | रम्याणि |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १५७ | ३० | नव | नवं |
| १५६ | ६ | रूम् | रूपम् |
| १६१ | ३ | जनारं | जनाशं |
| १६४ | ८ | भक्त्या | भक्त्या |
| १६४ | ६ | पछं | पक्वं |
| १६५ | १२ | मक | नैक |
| १६६ | २० | चेतू | चेत् |
| १६८ | १ | गृहेतिं | गृहीत |
| १६८ | २१ | त्वाया | त्वया |
| १७६ | २१ | विस्मा | विस्मिता |
| १७८ | २७ | पूर्वं | पूर्वा |
| १८१ | १ | आस | भार |
| १८१ | २७ | ज्याय | आप |
| १६१ | ७ | वरं | परं |
| १६२ | १३ | गन्तम् | गन्तम् |
| १६५ | १५ | श्रोत्राः | श्रोत्रान्त |
| १६७ | २७ | कार्यन्य | कार्पण्य |
| १६८ | २२ | स्मृताता | स्मृता |
| २०२ | ७ | कारुन्ब | कारुण्य |
| २०२ | ८ | मायु | मापु |
| २०५ | ६ | वाल | बलि |
| २१३ | ११ | विद | चिद |
| २१५ | ५ | खरीर | शरीर |
| २१६ | १० | जागत्यां | जगत्यां |

---

लिङ्गमशिष्यं-लोकाश्रयत्वात् लिङ्गस्य इस भाष्य वाक्य के अनुसार तथा शेषं पुंवत् इस भाष्य उदाहरण के अनुसार हिन्दी में प्रयुक्त स्त्रीलिङ्ग अभिलाषा शब्द यहां भी स्त्रीलिङ्ग ही प्रयुक्त कर दिया है।



श्री वैष्णवो जगत्पूज्यो ब्रह्मनिष्ठो जितेन्द्रियः ।
स्वामी गोपालदासोऽयं, श्रेयसेऽस्तु सदा सताम् ॥





स्वामी गोपालदासस्य शिष्य: परम भक्तिमान् । वेदान्ताचार्य आख्यातो वैष्णवाचार्य एववा ।
भव भंजन दासोयं राजते भक्त भावनः ॥ रामदासोऽय मेतस्य काव्यस्य जन्मदायकः ॥

# * श्री गोपाल चरितम् काव्यम् *

## वरप्रदानो नाम प्रथमः सर्गः

व्याप्यस्थितायापि जगत्समग्रं साकेतवीथीकृत रिङ्गणाय ॥
अपि स्वतन्त्राय नमोऽस्तु तस्मै रामाय भक्तैकवशंवदाय ॥ १ ॥

निर्गुण रूप से सम्पूर्ण जगत् को अभिव्याप्त करके स्थित रहते हुए भी सगुण रूप से अयोध्या की गलियों में घुटनों के बल चलने वाले, सर्वथा स्वतन्त्र होते हुए भी भक्तों के वश में रहने वाले उस विश्वविदित राम के लिए नमस्कार हो।

यन्नाम मात्रम् मनसा विचिन्त्य मानुष्य तत्त्वात्म फलं मनुष्याः ॥
प्रकाशरूपं सुतरां लभन्ते नमोऽस्तु तस्यै किल शारदायै ॥ २ ॥

जिस देवी के माननीय नाम का मन से चिन्तन करके मनुष्य मनुष्य-जन्म के वास्तविक फल, प्रकाश रूप आत्मा के ज्ञान को अनायास प्राप्त कर लेते हैं, उस सरस्वती देवी को नमस्कार हो।

वेदानां परपारगो, हितकरः श्रेयोऽभिलाषावताम्,
सम्मान्यः खलु यत्र तत्र जगतां मान्यैर्मुनीन्द्रैरपि ॥
उद्दर्पान् भुविनास्तिकान्नव वचोयुक्त्या सदा भीषयन्,
रामानन्द महामुनिर्विजयते योगीन्द्र चूड़ामणिः ॥ ३ ॥

वेदों के परम पारङ्गत, कल्याणार्थियों के हितकारी, जगत् के माननीय मुनियों के भी सर्वत्र सर्वदा आदरणीय, अभिमानी नास्तिकों को नवीन युक्तियों द्वारा डराते या विचलित करते हुए, योगिराजों में शिरोमणि महामुनि रामानन्द जी जगत् में सब से उत्कृष्ट पद पर विराजमान हैं।

श्री स्वामि गोपाल पवित्र लीलाः श्रेयोविधात्र्यः स्वसमाश्रितानाम् ॥
समुद्रगम्भीर जलायमाना दिशासु सर्वासु लसन्ति लोके ॥ ४ ॥

श्री स्वामी गोपालदास जी महाराज की पवित्र लीलाएं अपने आश्रितों का परम कल्याण करने वाली हैं और सभी दिशाओं में समुद्र के गम्भीर जल के समान विराजमान हैं।

वक्तुं तु ताः सम्प्रति सोद्यमं मे चेतोऽसमर्थं परिधावतीति ॥
मा मां बिनिन्दन्तु बुधा यतोहि मनोमनोज्ञे न निरोधमेति ॥ ५ ॥

उन लीलाओं का वर्णन करने के लिए असमर्थ होता हुआ भी मेरा मन उद्यम करके भाग रहा है इस पर विद्वजजन मेरी निन्दा न करें क्योंकि सुन्दर वस्तु पर आकृष्ट हुआ मन नहीं रुकता।

वाचामगम्या विदुषां जगत्यां सुसूक्ष्मभावाः खलुताः क्व लीलाः ॥
साधारणोऽहं मनुजस्तथा क्व गिरेरितुं तास्तु समीहमानः ॥ ६ ॥

विद्वानों की वाणियों से भी अवर्णनीय, अति रहस्यमय भावों से भरी वे लीलाएं कहां और उनको अपनी वाणी से वर्णन करने की इच्छा करने वाला मैं साधारण मनुष्य कहां।

आकाशमानं मशको यथेह कर्तुं समुड्डीय यतेत मुग्धः ॥
पिपीलिका वापि भुवोऽवसानं निरीक्षितुं चेह चलेत्स्ववेगात् ॥ ७ ॥

जैसे इस लोक में कोई भोला मच्छर उड़ कर आकाश को नापने की कोशिश करे अथवा कोई चिउँटी अपने वेग से पृथ्वी का अन्त देखने के लिए चले।

भर्तुं नदीनां पर पारमेव मुत्प्लुत्य लोके किलकोऽपि वांछेत् ॥
यथा तथाऽऽसां कथने प्रयत्नो विभाति नूनं लघुबालकस्य ॥ ८ ॥

ऐसे ही यदि कोई तैर कर समुद्र के पार जाने की इच्छा करे, वैसे ही इन लीलाओं के वर्णन में इस तुच्छ बालक का प्रयत्न प्रतीत होता है।

अस्त्वेवमल्पज्ञतया किलाहं वक्तुं न शक्तश्चरितं तदीयम् ।
तथापि तस्यैव कृपापरीतो यथाकथञ्चित्कथयामि किञ्चित् ॥ ९ ॥

यह ठीक है कि अल्पज्ञ होने के कारण मैं उनका चरित्र वर्णन करने में समर्थ नहीं हूं—तो भी उन्हीं की कृपा से जैसे तैसे कुछ तो कहता हूँ।

पञ्चाम्बु देशान्तरितो विशालस्थलाख्यया विश्रुतभूमिभागः ॥
विराजते, यत्र वसन्ति पुण्याः साधुस्वभावाः सरला मनुष्याः ॥ १० ॥

पंजाब देश के अन्तर्गत एक विशाल भूमि भाग 'थल' नाम से विख्यात है विराजमान है। जिस में पुण्यात्मा, अच्छे स्वभाव वाले, सरलचित्त पुरुष रहते हैं।

धनेश्वराः सन्ति तथापि नम्राः, सुरायमाणा भुवि वर्तमानाः ॥
सर्वेऽनुकूलांश्च दिशा वकाशान् पश्यन्ति सौभाग्य सुखाभ्युपेतान् ॥ ११ ॥

वे लोग धनवान् होते हुए भी नम्र हैं पृथ्वी में रहते हुए भी देवताओं के

समान हैं। वे चारों ओर सौभाग्य सुख से पूर्ण सर्वदा अनुकुल दिङ्मण्डलों को देखते हैं।

स्थानं यथायोग्यतयाऽऽश्रयन्तो मनो विवेकेन च योजयन्तः ॥
सदा सदाचारगतिं चरन्तो वसन्ति कुक्षाववनेः सुखेन ॥ १२ ॥

यथोचित स्थान में रहते हुए, मन को विचार से मिलाते हुए, सर्वदा सदाचार का पालन करते हुए वे लोग सुख से पृथ्वी की कोख में रहते हैं।

पयोदवर्गः समयानुसारं जलेन पृथ्वीमभिषिञ्चतीति ॥
कृष्यादिकार्थं सरिदादिवारि नापेक्ष्यते यत्र शुभे प्रदेशे ॥ १३ ॥

मेघ मण्डल उचित समय पर जल से पृथ्वी को अभिषिक्त कर देता है, इसलिए इस शुभ प्रांत में खेतीबाड़ी के लिए नदी आदि का पानी आवश्यक नहीं होता।

चलन्ति यानानि बहूनि भूमौ भूयांसि चान्यानि किलान्तरिक्षे ॥
किन्त्वत्र भूगानि नभश्चराणि चोष्ट्राभिधानान्युभयानि सन्ति ॥ १४ ॥

कई सवारियां भूमि पर और अन्य कई आकाश में चलती हैं। किन्तु यहां ऊंट नाम की सवारियां भूचर और खेचर दोनों प्रकार की हैं।

हरितृणान्नादि भृतस्थलीषु वत्सैः समेता इह संचरन्त्यः ॥
सद्धेनवः कामदुघोपमेयाश्चेतांसि लोकस्य हठाद् हरन्ति ॥ १५ ॥

हरी २ घास और अन्नादियों से भरे मैदानों में बछड़ों के साथ चरती हुई कामधेनु के समान अच्छी गौवें यहां लोगों के मन हठ पूर्वक हर लेती हैं।

तासां च दुग्धं नवनीत तक्रे गृहे गृहे पूर्णतमानि दृष्ट्वा ॥
गोपाल लीलाऽधिक लोभनीया स्मृतिं समभ्येति व्रजस्थलीह ॥ १६ ॥

घर घर में उन गौओं के दूध, मक्खन, लस्सी भरे देख कर श्रीकृष्ण की माखन चोरी की लीलाओं से अत्यन्त सुन्दर गोकुल का स्मरण आ जाता है।

कौपानि वारीणि सुधामयानि स्वास्थ्याभि वृद्धयेकनिदानकानि ॥
तानि स्वतः स्वादुतमानि पीत्वा स्मरन्ति रोगस्य न नाम लोकाः ॥१७॥

यहां कुओं के अमृत तुल्य जल स्वास्थ्य वृद्धि के मूल कारण हैं, बिना खांड आदि के ही अति मधुर उन जलों को पीकर यहां के लोग रोग को याद भी नहीं करते।

अत्रावसद्वै जगतां हितैषी ख्यातः स भाई जगताऽभिधानः ॥
येनार्पितं स्वं, निज जीवनं च परोपकाराय विना प्रयासम् ॥ १८ ॥

यहीं पर जगत् का हितैषी, अति प्रसिद्ध भाई जगता रहता था। जिसने परोपकार के लिए बिना प्रयास अपना धन और जीवन दे दिया था।

धनेन युक्ता अपि यत्र लोकाः सम्बन्धिवर्गेण तथान्विताश्च ॥
धर्मं विजानन्ति वरं वरेण्यं शरीर-शारीर-पदार्थ वर्गात् ॥ १९ ॥

यहाँ के लोग धनधान्य से तथा पुत्र कलत्रादि परिवार से युक्त होते हुए भी तन, मन, धन की अपेक्षा धर्म को श्रेष्ठ और अपनाने योग्य जानते हैं ।

निवासिनामत्र तथा नराणां विभेदभावे सति देह भेदात् ॥
चेतोविवेकेन यथार्थकेन संराजतेऽभेद शरीर संवित् ॥ २० ॥

यहाँ रहने वाले लोगों का देहभेद के कारण भेदभाव होने पर भी यथार्थ विवेक के कारण अभेदात्मक ज्ञान विराजमान है ।

मत्स्या यथा प्राणमयं विचिन्त्य पयः प्रवाहं निवसन्ति तत्र ॥
भक्ति तथा प्राणमयीं विचार्य नरा निमग्ना इह सन्ति तस्याम् ॥ २१ ॥

जैसे मछलियाँ जल को जीवन मान कर उसमें रहती हैं ऐसे ही यहाँ के लोग भक्ति को जीवन मान कर उसमें मग्न हैं ।

सूर्यांशुदीप्त्या सिकता कणानां चमत्कृतानां प्रभयाऽतिरम्या ॥
नक्षत्रमाला कुलया दिवा भूर्दिवाऽपि सादृश्यमुपैति यत्र ॥ २२ ॥

जिस देश में सूर्य की किरणों के प्रकाश से चमक उठे रेत के कणों की कान्ति से अति सुन्दर भूमि दिन में भी तारामण्डल से व्याप्त आकाश की सदृशता प्राप्त करती है ।

व्याप्ताऽतिशुद्धैः सिकताकणैः सा स्वयं विधात्रा रचितैः पुरस्तात् ॥
प्रकाशते द्रष्टृगणस्य दृष्टौ मनोहरा सास्तरणेव भूमिः ॥ २३ ॥

जहाँ की भूमि सृष्टि के प्रारम्भ में ही विधाता से रचे गये अति निर्मल रेत के कणों से व्याप्त होकर दर्शकों की दृष्टि में ऐसी सुन्दर प्रतीत होती है जैसे इस पर चादरें बिछी हों ।

वातः प्रवेगेन चलंश्च यत्र स बालुकौघां परिवर्त्य भूमिम् ॥
मायामयस्यास्य विकारभावं विश्वस्य मन्ये प्रकटी करोति ॥ २४ ॥

जहाँ पर वेग से चलने वाली आँधी जहाँ की भूमि को रेतीले टीलों के सहित परिवर्तित करके इस मायामय संसार की परिवर्तनशीलता को मानों कि प्रकट करती है ।

प्रदर्शयन् भूमिमिवान्तरिक्षं कदाचिदेवाथ दिनं निशाभम् ॥
प्रवर्तयन् धूलिवितानमायां यत्रैति वायुर्नट वेषधारी ॥ २५ ॥

जहाँ पर वायु कभी आकाश को भूमि के समान धूलिमय दिखाता हुआ और

दिन को रात्रि के समान अन्धकारमय दिखाता हुआ—धूलि का शामियाना सा फैलाता हुआ नट वेष धारी होकर चलता है।

एवंविधे रम्यतमे प्रदेशे विख्यात धर्मादि गुण प्रचारे ॥
श्रीमूलचन्द्रेति शुभाभिधानः कश्चिद्गुणीसत्पुरुषो बभूव ॥ २६ ॥

इस प्रकार के धर्म आदि सद्गुणों के प्रचार से विख्यात, सुन्दरतम देश में 'श्रीमूलचन्द्र' शुभ नाम का कोई गुणवान् सत्पुरुष रहता था।

धनाधिकः सत्वपरीतगात्रो महाजनानां सुगुणैरभीतः ॥
परोपकारैक विधान दक्षः सर्वानवद्यांग सुहृद्य रूपः ॥ २७ ॥

बड़ा धनी, बल युक्त शरीर, रामकृष्णादि महापुरुषों के सद्गुणों से युक्त, परोपकार करने में निपुण, सभी निर्दोष अङ्गों से प्रिय रूप वाला।

बचोंशुजालैः सुधया परीतैर्मनांसि तोषं सनयन् समेषाम् ॥
भातिस्म चन्द्रः किल मूलभूतो वियद्गतस्त्वस्य किलास टीका ॥ २८ ॥

अमृत भरे वचन रूपी किरणों के जाल से सभी के मन को सन्तुष्ट करता हुआ वह मूल भुत चन्द्रमा प्रतीत होता था और आकाशगामी चन्द्रमा तो उसकी टीका थी।

बाल्यात् शुभाचार विचार युक्तं कर्माणि कुर्वन्तमविच्युतीनि ॥
कालक्रमेण स्मरहासकारि नवं वयस्तं समियाय चारु ॥ २९ ॥

बचपन से ही सदाचार और शुभविचार वाले, दोषरहित कर्म करते हुए उसके पास समय क्रम से कामविलास जनक, सुन्दर, नवयौवन आया।

वयोविकासाधिककान्तकायः श्रियाश्रितो मार्दवसान्द्रचेताः ॥
सहृद्यविद्या प्रणयानवद्य श्चूडामणिः क्षात्र कुले बभूव ॥ ३० ॥

यौवन के विकास से अति सुन्दर शरीर वाला, लक्ष्मी से आश्रित, कोमलता से पूर्ण चित्तवाला और सुन्दर विद्या के लाभ से निर्दोष वह क्षत्रिय कुल का शिरोमणि था।

संबन्धिवर्गस्य समीहयाऽथ संसारसंप्राप्त पुराप्रणाल्या ॥
उवाह शास्त्रोक्तदिशा स्वतुल्यवंशादिकां कामपि कामिनीं सः ॥ ३१ ॥

बन्धुबाधवों की इच्छा और संसार की प्रचलित प्राचीन—प्रथा के अनुसार उसने अपने समान वंशादि वाली किसी युवति से शास्त्रोक्त विधि से विवाह किया।

आत्मावतीति प्रथिता सतीना मादर्शतां स्वच्छतयाऽऽश्रयन्ती ॥
नामानुरूपात्मविवेक शीला साऽऽसीद्‌गुणाढया सरलाऽत्युदारा ॥ ३२ ॥

पवित्रता के कारण पतिव्रताओं का आदर्श बनी हुई, अपने नाम के अनुसार आत्मविचार करने वाली, गुणमयी, सरल और उदार स्वभाव वाली वह आत्मावती नाम से प्रसिद्ध थी।

स्वयंगुणानां निलयो यथाऽसौ श्रीमूलचन्द्रः प्रवरो नराणाम् ॥
तथा सतीयं गुण पुण्यपूर्णा लब्धा प्रिया तेन निजानुरूपा ॥ ३३ ॥

जैसे वह श्रीमूलचन्द्र जी गुणों के आश्रय और नरों में श्रेठ थे, वैसी ही गुणों और पुण्यों से भरी, यह सती अपने अनुकूल, प्रिया उसने प्राप्त की।

कदाचिदेवं जगतीतलेऽस्मिन् सौभाभाग्योगाद्भवतीह योग्यः ॥
समानशील व्यवहारयोर्वै योगो निशा चन्द्रमसोरिवेदृक् ॥ ३४ ॥

इस संसार में कभी ही सौभाग्यवश रात्रि और चन्द्रमा के समान, समान स्वभाव व्यवहार वालों का योग्य सम्बन्ध होता है।

द्वितीयमाश्रित्य तयाश्रमं स्वं मनोविधेयेषु तथा नियुक्तम् ॥
यथा गृहं तत्परितो विशोभि प्रसादबाहुल्यमयं बभूव ॥ ३५ ॥

उस देवी ने इस द्वितीयाश्रम (गृहस्थाश्रम) का आश्रय लेकर अपना मन कर्तव्यों में ऐसा लगाया कि उस घर की चारों ओर शोभा फैल गई और वह घर अत्यन्त आनन्दमय हो गया।

पतिं परेशं हृदिमन्यमाना सर्वात्मनातं सततंसिषेवे ॥
माधुर्यपूर्णैः समुदीरणैश्च संतोषयामास मन स्तदीयम् ॥ ३६ ॥

पति को परमात्मा मान कर आत्मावती ने सर्वभाव से उस की नित्य सेवा की और मधुरता—भरे वचनों से उसका मन सन्तुष्ट किया।

प्रातः समुत्थाय च शातकौम्भान् कुम्भान् समानीय जलेन पूर्णान् ॥
प्रीत्या स्वयं स्नानमकारयत्तं सा मेघमालेव हिमाद्रिशृङ्गम् ॥ ३७ ॥

प्रतिदिन प्रातः काल उठ कर सुवर्णमय जलपूर्ण घड़े ला कर वह उस को प्रेम पूर्वक स्नान कराती थी जैसे मेघमाला हिमालय के शिखर को।

मिष्टं तदिष्टं परिपच्य भोज्यं चतुर्विधं सा परिवेष्य तस्मै ॥
तं सेवते स्मव्यजनाढ्यहस्ता पश्चाच्च भुंक्ते स्म सुयज्ञशेषम् ॥ ३८ ॥

पतिप्रिय, मधुर और भक्ष्य, लेह्य, चोष्य, पेय चारों प्रकार के मधुर भोजन

पकाकर उस के सामने परोस कर और पंखा हाथ में लेकर वह उस की सेवा करती थी, और उसके भोजन के बाद यज्ञशेष (प्रसाद) रूप में वह स्वयं खाती थी।

आकस्मिका येऽतिथयोऽत्रगेहे कदाचिदायान्ति कुतश्चनस्म ॥
रस्यान्न पानादि समर्पणेन तांस्तोषयामास सपर्यया सा ॥ ३९ ॥

अकस्मात् ही जो कोई अतिथि कभी कहीं से इस घर में आते थे, उस को स्वादिष्ट अन्न पान आदि देकर शास्त्रोक्त विधि से उन्हें तुष्ट करती थी।

सन्ध्यामुपास्याशितवत्यभीष्टं, तस्मै सुशय्यां स्मपरिस्तृणाति ॥
सुप्ते ततः प्राणपतौसुखेन, सा संस्तरं संश्रयते स्वकीयम् ॥ ४० ॥

सन्ध्योपासन करके रात्रि में स्वादिष्ट भोजन कर चुके उस के लिये सुन्दर बिस्तर बिछाती थी—जब वे सुख पूर्वक सो जाते थे तो वह अपने बिस्तर पर जा सोती थी।

निरीक्षमाणा च सदैव पत्युर्धावतीना मतिमान नीया ॥
संकेतामात्रं सकलक्रियाभिश्छायेव तं सानुससार रामा ॥ ४१ ॥

पति का सदा ध्यान रखती हुई वह विदुषियों में श्रेष्ठ सुन्दरी संकेत—मात्र के अनुसार कर्म करने से छाया के समान उसका अनुगमन करती थी।

रात्रिन्दिवं साधुतया सुरीत्या प्रीत्याऽऽत्मवत्या परिषेव्यमाणः ॥
वसन् पृथिव्यामपि देव लोक सौख्यानि लेभे स विशुद्ध कीर्तिः ॥ ४२ ॥

उस विशुद्ध यश वाले श्रीमूलचन्द्र ने रात दिन बहुत अच्छी तरह आत्मवती से समुचित प्रेम के साथ सेवाएं प्राप्त करते हुए भूलोक में रहते २ ही स्वर्लोक के सुख प्राप्त किये।

परस्परं तौ मनसी नियोज्य प्रेम्णा स्वकीये समताप्रधाने ॥
गृहे वसन्तावपि वीतरागौ दाम्पत्य सौख्यं चिरमन्वभूताम् ॥ ४३ ॥

आपस में समभाव रखने वाले अपने हृदयों को प्रेम से युक्त करके उन दोनों ने गृहस्थ होते हुए भी रागद्वेषरहित हो कर चिरकाल तक गार्हस्थ्य जीवन का सुख भोगा।

हितं परत्रेह च शुद्धवंश्यं प्राप्तं न सन्तानफलं तथापि ॥
ततोऽनयोश्चेतसि भावनेयं सचिन्तयोस्तीव्रतरा बभूव ॥ ४४ ॥

इस लोक और परलोक में हित करने वाली अपनी शुद्धवंशज संतान प्राप्त न होने के कारण दोनों चिन्तित थे और दोनों के मन में यह पुत्रैषणा प्रबलतर हो गयी।

रम्यो गृहस्थाश्रम आयुवायुर्द्वाभ्यां चिरादेव सुषेवितोऽयम् ॥
सन्तानसंज्ञां कुलदीप दीप्तिं बिना कथं प्राप्स्यति सत्प्रकाशम् ॥ ४५ ॥

यह सुन्दर गृहस्थाश्रम हम दोनों ने चिरकाल से युवावस्था—पर्यन्त सेवन किया है किन्तु संतान नामक कुलदीप की दीप्ति बिना यह प्रकाश (प्रसिद्ध) को कैसे प्राप्त करेगा।

कथं भवेत्सन्ततिरन्तरङ्ग प्रसादिनी नाविति चिन्तयन्तौ ॥
अनल्प संकल्पविकल्पाराबारैक देशेऽलभतामनूपम् ॥ ४६ ॥

अन्तःकरण को प्रसन्न करने वाली हमारी सन्तान कैसे होगी यह चिन्ता करते हुए उन दोनों ने अनेक संकल्प विकल्पों के समुद्र में यह टापू प्राप्त किया।

ब्रह्माण्ड वर्गस्य विधायको यो ध्येयः सदा ध्यान परायणानाम् ॥
सिद्धिं परामेष्यति भावना नौ तस्याश्रयेणैव परेश्वरस्य ॥ ४७ ॥

जो सम्पूर्ण जगत् का कर्ता और ध्यानियों का ध्येय है। उसी परमेश्वर का आश्रय लेने से हमारी कामना अच्छी तरह पूर्ण होगी।

चेतोऽवकाशे च तदाऽवधार्यं भावार्थमेनं सुतजन्महेतुम् ॥
नियम्य शब्दादिपदार्थवर्गात् सर्वेन्द्रियाणीशपराणि कृत्वा ॥ ४८ ॥

तब मन में यही विचार पुत्र प्राप्ति का कारण है यह निश्चय करके उन दोनों ने सब इन्द्रियों को शब्दादिविषयों से हटा कर और प्रभु में लगा कर।

एकादशी द्वादशिकादिकानि कृतानि ताभ्यां बहुशो व्रतानि ॥
सद्भावना साधन साधनानि शास्त्रोपदिष्टानि तदिष्टदानि ॥ ४९ ॥

उन दोनों ने एकादशी द्वादशी आदि के बहुत से व्रत जो सद्भावना तथा अन्य साधनों को सिद्ध करने वाले और शास्त्र में पुत्रादि मनोरथों को देने वाले कहे गये हैं, किये।

आहार रीतिं प्रथमाँ विहाय चिराय तृट्क्षुत्परिभावयद्भ्याम् ॥
ताभ्यां कदाचित्फल मूलमात्रं ग्रासैकमात्रं परिगृह्यते स्म ॥ ५० ॥

पुराने भोजन क्रम को छोड़ कर चिरकाल तक भूख प्यास को जीतते हुए वे दोनों कभी केवल फ़ल मुलमय एक ग्रास परिमित भोजन खाते थे।

पर्यङ्क शय्यां कुसुमोपपन्नां नानाविचित्रास्तरण प्रधानाम् ॥
हित्वा दृषद्दर्भमयीं तु शय्यां विशुद्धभावौ बहुधाऽध्यशेताम् ॥ ५१ ॥

अनेक प्रकार के विचित्र बिस्तरों और फूलों वाले पलंगों पर सोना छोड़ कर प्रायः पत्थर और कुशा मय आसनों पर वे, पवित्रभाव से सोते थे।

स्नानादि कृत्यानि विधाय नित्यं सम्पूज्य भक्त्या भगवन्तमन्तः ॥
करे गृहीत्वा तुलसी प्रणीतां मालामलं तौ जपतः स्म मन्त्रम् ॥ ५२ ॥

स्नानादि कर्तव्य कर्मों को करके और आंतरिक भक्ति से भगवान् की पूजा करके वे दोनों हाथ में तुलसी की माला लेकर मन्त्र का पर्याप्त जप करते थे।

परम्परा प्राप्त मुनि प्रणीतां रीतिं समाश्रित्य वरं वरेण्याम् ॥
रामायणाखण्ड नवाह पाठान् श्रद्धा मयौ तौ कुरुतः स्म भूयः ॥ ५३ ॥

चिरकाल से महामुनियों द्वारा स्वीकृत श्रेष्ठ रीति का अच्छी तरह आश्रय लेकर वे दोनों श्रद्धावान् अनेक बार श्रीरामायण जी के अखण्ड और नवाह पाठ करते थे।

भावाभिलाषी भगवानपीत्थं स्वाराधनासक्त मनोरथौ तौ ॥
संसार भोगौघ विविक्त चित्तौ विलोक्य तुष्टिं परमां जगाम ॥ ५४ ॥

भाव के भूखे भगवान् भी अपनी आराधना में लगे हुए और सांसारिक भोग समूह से अनासक्त मन वाले उन दोनों को देख कर परम प्रसन्न हुए।

गिरं सुधास्वाद समां तदानीं जगाद देवः प्रमुदस्वरूपः ॥
हे भाग्यवन्तौ, वरमाददेताम् , तुष्टोऽस्मि वां भक्ति विधानतोऽहम् ॥ ५५ ॥

और उस समय आनन्द स्वरूप प्रभु ने अमृत के समान मधुर वाणी से कहा, हे भाग्यवान् दम्पति, मैं तुम्हारी भक्ति से प्रसन्न हूँ, वर मांगो।

आकस्मिकीं स्वादुतरां निपीय गिरं हरेर्विश्वगुरोरभीष्टाम् ॥
प्रसीददन्तः करणावुभौ तौ तं निर्निमेषं परिपश्यतः स्म ॥ ५६ ॥

जगत् के एक मात्र गुरु भगवान् की अति मधुर अतिप्रिय और अकस्मात् प्रकट हुई वाणी को सुनकर प्रसन्न-हृदय होकर वे दोनों टकटकी लगाकर प्रभु की ओर देखते रहे।

पुरः स्थितं चक्रगदाधरं तौ विष्णुं समालोक्य सुरारिजिष्णुम् ॥
दण्डायमानेन कलेवरेण निपत्य तस्याकुरुतां प्रणामम् ॥ ५७ ॥

असुर दल-दलन भगवान् विष्णु को सुदर्शन चक्र और कौमोदकी गदा धारण करके सामने खड़ा देख कर उन दोनों ने उन्हें दण्डवत् प्रणाम किया।

दयानिधे हे जगदेकनाथ भक्ताभिलाषामृतवारिवाह ॥
संसार संचार रजो दधत्या बुद्धया कथं त्वामभिनन्दयावः ॥ ५८ ॥

हे दया सिन्धो, हे जगत्पते हे भक्तों के मनोरथों पर अमृत-वृष्टि करने वाले पर्जन्य, संसार में चलने से रजस् ( रजोगुण या धूलि ) को धारण करने वाली बुद्धि से आप की स्तुति कैसे करें।

द्रष्टुं कथञ्चित्प्रभवन्ति नैकान्योगान् समास्थाय महर्षयो यम् ॥
स एव साक्षात्पुरतोऽस्ति नून मावां गतौ भाग्यवतां शिरस्सु ॥ ५९ ॥

अनेक प्रकार की योग समाधियां लगा २ कर किसी तरह योगि लोक जिस का दर्शन कर पाते हैं—वही भगवान् साक्षात् सामने हैं निश्चय ही हम दोनों भाग्यवानो में शिरोमणि हैं ।

वरं किलादातु मिहादिशस्त्वं, हितं न जानीव किमर्थयाव ॥
साक्षात्कृते त्वय्यपि किञ्चिदस्ति किं वस्तु लोकेश्वर याचनीयम् ॥ ६० ॥

हे भगवन्. आपने वर मांगने की आज्ञा दी है, पर जब हम अपना हित न जानें तो क्या क्या मांगें ? हे लोकेश्वर क्या आप का साक्षात्कार हो जाने पर भी कोई वस्तु मांगने योग्य रह जाती है ।

हा लौकिकेऽस्मिन् हृदयेऽस्मदीये सन्तान वांछाऽभ्युदियाय पूर्वम् ॥
भवानितोऽग्रे भगवन्प्रमाणं भक्तानुकम्पिन् , जगतां विधातः ॥ ६१ ॥

हमारे इस लौकिक मन में अहो, सन्तान की इच्छा उत्पन्न हुई थी—हे भक्तों पर दया करने वाले, जगत् के विधाता, प्रभो, इसके आगे आप प्रमाण हैं ।

इत्थं तयोर्गद्गदकण्ठयोस्तां पुत्राभिलाषा मनुमान्य युक्ताम् ॥
हितं प्रियं चेति समर्थयँस्तौ कृतार्थयामास हरिर्वरेण ॥ ६२ ॥

इस प्रकार प्रेमाश्रुओं से गद्गद कण्ठ वाले उन दोनों की पुत्राभिलाषा को उचित मान कर तथा हित कर और प्रिय जान कर प्रभु ने दोनों को वर देकर कृतार्थ किया ।

सकल दुरितनाशी सर्व पुण्यप्रकाशी सुविमल गुणराशिः पूरिताशीः प्रियाणाम्
वरवरमिममेवं दत्तवान् प्रेममूर्तिः, किमपि नहि जगत्यां दुर्लभं भक्तिमद्भिः ॥

॥ सम्पूर्ण पापों के नाशक, समस्त पुण्यों के प्रकाशक, निर्मल गुणों के आश्रय और भक्तों के मनोरथ पूर्ण करने वाले प्रेममय प्रभु ने उनको यह श्रेष्ठ वर दिया । भक्तिमानों को संसार में क्या वस्तु दुर्लभ है ।

इति वरप्रदानो नाम प्रथमः सर्गः ।

---

# पुत्र जन्मोत्सवो नाम द्वितीयः सर्गः

अम्भोनिधीन्या चतुरोऽप्यगाधान् धत्ते सुखात्पीनपयोधरान्वा ॥
कंसादिदैत्यातिभरार्दिता सा गोर्गौर्यमाशिश्रियदाश्रये तम् ॥ १ ॥

जो चारों अगाध समुद्रों को सुख से चार स्तनों के समान धारण करती है। वही भूमि कंसादि दैत्यों के अतिभार से पीड़ित होकर गौ बन कर जिस की शरण में गई थी मैं उसी की शरण लेता हूं।

सत्तां सतस्तां प्रचितां चितं चिन्मात्रस्य, तस्यैकसुखां सुखस्य ॥
शक्ति महाशक्तिमतोऽस्मि वन्देऽध्यक्षामलक्ष्यामिह वाङ्मयस्य ॥ २ ॥

उस सद्रूप की सत्ता, चिद्रूप की चेतना, आनन्द रूप की आनन्दना और महा शक्तिमान की शक्ति, वाङ्मय जगत् की अधिष्ठात्री अलक्ष्यरूपा उस सरस्वती को मैं प्रणाम करता हूं।

अन्तर्हितेऽस्मिन्वरदे तदानीं तमेव देवं हृदि भावयन्तौ ॥
तौ दम्पती प्रेमपुरस्सरं स्वं गेहं पवित्री कुरुतः स्म भक्त्या ॥ ३ ॥

उस समय इस वरद प्रभु के अन्तर्धान हो जाने पर उसी देवाधिदेव का हृदय में चिन्तन करते हुए इन पति पत्नी ने प्रेमपूर्वक भक्ति से अपने घर को पवित्र किया।

तौ धार्मिकौ पूर्णतया स्वभावात् तद्दर्शनाद् भूरि विवृद्धधर्मौ ॥
स्वतोऽपि पूर्णः सरितामधीशः पूर्णेन्दुयोगादतिवृद्धि मेति ॥ ४ ॥

॥ वे दोनों स्वभाव से ही पूर्ण धार्मिक थे अब प्रभु के दर्शन से तो उनका धर्मभाव और भी बढ़ गया। समुद्र स्वतः पूर्ण ही होता है किन्तु पूर्णचन्द्र के दर्शन से वह और भी अधिक वृद्धि प्राप्त करता है।

कदा नु देवस्य सुधोपमं तद्वचः सुपुष्यादिति बोद्धुमुत्कौ ॥
सदा सदाचाररतौ सुखेन गृहस्थचर्या मनुचक्रतुस्तौ ॥ ५ ॥

प्रभु का वह अमृतोपम वचन कब पुष्पित होगा यह जानने के लिये उत्कण्ठित और सदा सदाचार में निरत वे दोनों गृहस्थचर्या का पालन करने लगे।

ययाऽऽशया तत्र मनोऽवकाशे चिरात्पदं सन्निहितं तदासीत् ॥
कालः समीपं समियाय तस्याः फलं प्रदातुं कृपयेश्वरस्य ॥ ६ ॥

जिस आशा ने चिरकाल से हृदयाकाश में अपना चरण रखा था—उस का फल देने का समय प्रभु कृपा से निकट आ गया।

परात्मनस्तस्य विभोः प्रसादात्तद्धाम तस्या विनिविष्टमन्तः ॥
यतः शरीरं सुतरां चकासे सौन्दर्यविद्यादि गुणालयायाः ॥ ७ ॥

उस सर्वव्यापक परमात्मा की कृपा से उस आत्मावती में उस तेज ने प्रवेश किया। जिससे सुन्दरता, विद्वत्ता आदि गुणों की आश्रय भूता उस देवी का शरीर अत्यन्त शोभायमान हो गया।

पत्युः पुरैवादरपात्रमासीत्, ततोऽपि सा गर्भभरातिगुर्वी ॥
अतीव सम्मानपदं तदाऽभून्नवा लता प्राप्तफलोद्गमेव ॥ ८ ॥

पहिले ही वह पति की अत्यन्त आदरपात्र थी। गर्भ से अति गरीयसी होकर तो वह उससे भी अधिक सम्मानभाजन हो गई। जैसे उपस्थित-फलोदया लता।

समागते माङ्गलिकेऽथ काले दिवा समायाः श्रुतसद्गुणायाः ॥
तस्या स्तनो विश्वविलोचनानां प्रसादको बालविधुः प्रजज्ञे ॥ ९ ॥

इसके बाद मङ्गलमय समय के आने पर आकाश के समान श्रुत-सद्गुणा (शब्दगुणा या प्रसिद्धगुणा) उस देवी के शरीर से विश्व भर के लोचनों का आनन्दयिता बालचन्द्र प्रकट हुआ।

भास्वान्यथोदेत्युदयाचलाद्वा प्राच्यां प्रभामण्डल दीप्त रूपः ॥
लोकाक्षिमार्गावरणात्मकस्य तमश्चयस्येह विनाशनाय ॥ १० ॥

अथवा जैसे पूर्व दिशा में उदयाचल से अपने प्रभामण्डल से देदीप्यमान सूर्य संसार के नेत्रों को आवृत करने वाले तमश्चय (अन्धकार) का नाश करने के लिये उदित होता हैं।

श्री मूलचन्द्रादचलायमानात्तस्यां तथाऽसावपि जन्म लेभे ॥
नृबुद्धि नेत्रावरकं हि सद्यो महत्तमोऽज्ञानमयं विहन्तुम् ॥ ११ ॥

वैसे ही धैर्य आदि गुणों से अचलायमान श्री मूलचन्द्र से उस देवी में इस बच्चे ने मनुष्यों के बुद्धिरुप लोचन को आवृत करने वाले अज्ञान रुप घोर तमोगुण का नाश करने के लिये जन्म लिया।

तस्यावतारेण न केवलं तद् गृहं परानन्दमयं बभूव ॥
समग्र संसारगतिस्तदानी ममन्दमानन्द मविन्ददेकम् ॥ १२ ॥

उस बालक के अवतार से केवल वह घर ही परमानन्दमग्न नहीं हुआ—अपितु उस समय समस्त संसार की गति ने ही एक अद्वितीय अमन्द आनन्द को प्राप्त किया।

मेघाः समागत्य नभः प्रदेशं श्यामाः पयोभारविनम्रदेहाः ॥
जलस्य बिन्दून्विरलान् पृथिव्यां सुमङ्गलायां मुमुचुस्तदानीम् ॥ १३ ॥

जल के भार से झुके हुए काले २ बादलों ने आकाश में आकर मंगलमयी पृथिवी पर विरल २ जल की बून्दें उस समय में बरसाईं।

संसारिवर्गस्य मनांसि सद्यः प्रसादयन् स्वैस्तरलैस्तरङ्गैः ॥
सौगन्ध्य सम्बन्धविलोभनीयो मन्दोऽनिलः स्पर्श सुखावहोऽवात् ॥ १४ ॥

संसारियों के हृदयों को आनन्दित करता हुआ अपनी तरल तरङ्गों से, सुगन्धि के कारण अधिक स्पृहणीय, स्पर्श में सुखदायी, मन्द, पवन चला।

लताः प्रसूनैर्ललितैः, रसाढ्यैः फलैश्च वृक्षा नवकान्तिभाजः ॥
चित्रामभिख्यामुपधारयन्तो गता विकासं परमं तदाऽऽसन् ॥ १५ ॥

मनोहर फूलों से बेलें और सरस फलों से वृक्ष अभिनव कान्ति को पाकर और एक विचित्र शोभा को धारण कर उस समय परम विकास को प्राप्त हुए।

दिशोऽपि सर्वा विमला जनानां स्वान्तस्थदृश्यं परिदर्शयन्त्यः ॥
विज्ञापयन्त्यश्च बभुर्जगत्यां तस्यात्मविज्ञान विकासि शीलम् ॥ १६ ॥

सब दिशाएं भी निर्मल होकर लोगों के हृदय का दृश्य दिखाती हुईं और उस बालक के आत्म विज्ञान से विकासमान स्वभाव को बताती हुई शोभायमान हुईं।

सिक्ता पयोबिन्दुभिरासभूमिः पयोदवर्गेण पुरा विसृष्टैः ॥
हर्षाश्रुसंसिक्तकलेवरेव तदा नराणां प्रतिभासते स्म ॥ १७ ॥

पहिले मेघमण्डल के बरसाये हुये जलबिन्दुओं से भूमि सिक्ता थी—तब दर्शकों को आनन्दाश्रुओं से सिक्त कलेवरा सी प्रतीत हुई।

शुकाश्चशुक्यो भ्रमराः पिकाश्च जगुः स्वरेणातिविकस्वरेण ॥
मुदामुदारां सरणिं च नृत्यैः सन्दर्शयामासुरहो मयूराः ॥ १८ ॥

तोता, मैना, भौंरे, कोकिलों ने अति विकस्वर में गान किया और मयूरों ने तो नृत्य के द्वारा परमानन्द की परम्परा को प्रकट किया।

सन्तो यथेष्टं भुवि जीव जातेः सन्तारणायैव धरन्ति देहम् ॥
परोपकारान्विविधान्विधाय तदीयपुण्येन परं प्रयान्ति ॥ १९ ॥

महात्मा लोग अपनी इच्छा से ही जीवों का उद्धार करने के लिए शरीर धारण करते हैं। और अनेक प्रकार के परोपकार करके उन्हीं के पुण्य से फिर उस परमपद को प्राप्त कर लेते हैं।

न वास्तवं जन्म सतां जगत्यां मृत्युर्नचैषां भवितुं क्षमोऽस्ति ॥
त्यागः शरीरस्य विधारणा वा लोकोपकाराय मतो तु तेषाम् ॥ २० ॥

सज्जनों का वास्तविक जन्म या मृत्यु होना संसार में समर्थ नहीं है—उनका तो जगत् के कल्याण के लिए शरीर धारण या शरीर त्याग माना गया है।

प्रयोजनं सत्यमिदं सतां च विद्वज्जनानां जननस्य भाति ॥
धर्मस्य राज्यं ध्रुवमस्तु लोके नाशोऽप्यधर्मस्य भुवि ध्रुवोऽस्तु ॥ २१ ॥

सज्जनों और विद्वानों के जन्म का वास्तविक प्रयोजन हमें तो यही प्रतीत होता है कि जगत् में धर्म का अटल राज्य हो और अधर्म का अविचल नाश हो ।

साधारणां बुद्धि मितेन केन जनेन शक्यं भणितुं रहस्यम् ।।
महात्मनां तत्त्वदृशां यथार्थं, शक्या न वक्तुं लघवोऽपि भावाः ॥ २२ ॥

तत्त्वदर्शी महात्माओं के वास्तविक रहस्य को बताना साधारण बुद्धि वाले किस नर से सम्भव है—उन की तो छोटी २ बातें भी नहीं कही जा सकतीं ।

महाह्रदे यत्र गजा महान्तो मज्जन्ति का तत्र कथा शशानाम् ।।
सतां चरित्रेषु भवन्ति मुग्धा बुधा यदा तर्हि किमन्य जीवाः ।। २३ ॥

जिस बड़े सरोवर में हाथी डूब जाता हैं वहां खरगोशों की क्या बात । महात्माओं के चरित्रों में जब बड़े २ विद्वान् मुग्ध हो जाते हैं तब और जीव तो वस्तु ही क्या हैं ।

हितं विचिन्त्यैव यतो भवस्य सन्तः समायान्ति भुवस्तलेऽस्मिन् ॥
समागतेऽस्मिन्सति विश्वमेतत् प्रासीदहित्येतदहो न चित्रम् ॥ २४ ॥

जब महात्मा लोग संसार का हित सोच कर ही इस भूतल पर आते हैं तब इस महात्मा के आने पर यदि सारा जगत् प्रसन्न हुआ तो यह कोई आश्चर्य जनक बात न थी ।

तज्जन्मनः पूर्णतया हि कालो न निश्चितो मेऽस्तितथापि पूर्वम् ।।
श्रुतं यथा वृद्धमुखारविन्दात्तथा लिखामीह जनावगत्यै ॥ २५ ॥

यद्यपि उनके जन्म का काल मुझे पूर्णतया निश्चित रूप में ज्ञात नहीं है तथापि जैसा वृद्धजनों के मुखारविन्द से सुना है तदनुसार लोगों के ज्ञानार्थ यहां लिखता हूं ।

आकाशनेत्राङ्कपरेश संख्ये संवत्सरे बैक्रमकेऽस्य मन्ये ॥
जगत्प्रमोदैकविधायि पुण्यं जन्माभवद् भूतल पुण्य पुञ्जात् ॥ २६ ॥

विक्रम संवत् १९२० में संसार को एक मात्र आनन्द देने वाला इसका पवित्र जन्म मेरे विचार में भूमण्डल के पुण्य समूह से हुआ था ।

तं जातमात्रं सुहृदः प्रसन्ना निमेषनिःस्वैरपिबन् स्वनेत्रैः ॥
यथा चकोराः परिपूर्णचन्द्रं प्राचीप्रदेशादुदितं पिबन्ति ॥ २७ ॥

उत्पन्न होते मित्रों ने निर्निमेष नेत्रों से उस को ऐसे ही देखा—जैसे चकोर पूर्व दिशा से निकलते हुए पूर्णिमा के चन्द्रमा को देखते हैं ।

कृतार्थयोः पुत्रमुखावलोक सौभाग्यलाभेन चिरार्थितेन ।।
पित्रोस्तदानीं हृदये प्रभूतः प्रसादपूरः किल वागतीतः ।। २८ ।।

चिर काल से प्रार्थित पुत्र मुख दर्शन का सौभाग्य पाकर कृतार्थ हुए माता पिता के हृदय में उस समय बड़ा भारी आनन्द प्रवाह उत्पन्न हुआ जो वाणी के द्वारा वर्णन नहीं किया जा सकता ।

श्री मूल चन्द्रस्य तथाऽऽत्मवत्या श्चित्तेन मातिस्म किलैष हर्षः ।।
शरीर रम्याङ्ग विचित्र चेष्टा व्याजैर्हि निर्यन्निव लक्ष्यते स्म ।। २९ ।।

यह हर्ष श्री मूलचन्द्र और आत्मवती के मन में नहीं समाता था—तभी तो शरीर के सुन्दर अङ्गों की विचित्र चेष्टा के बहाने बाहर निकलता हुआ सा प्रतीत होता था ।

महो महोत्साह पुरस्सरं तौ तदा मनो मोद करं जनानाम् ।।
नानात्मकं दृष्टि विलोभिदृश्यं सम्पादयामासतुरेतदर्थम् ।। ३० ।।

उस समय उन दोनों ने बड़े उत्साह के साथ लोगों के मन को मुदित करने वाला, अनेक प्रकार का, दृष्टि को आकृष्ट कर लेने वाले दृश्यों वाला, उत्सव पुत्र जन्म के उपलक्ष्य मे कराया ।

मिष्टान्नपानं विविधं विधाय्य सूदैरनूद्यै रनवद्यपाके ।।
दूरागतेभ्यः प्रणिपातपूर्वं दत्तः स्म तावीप्सितमर्थकेभ्यः ।। ३१ ।।

सुन्दर मिठाइयां बनाने में चतुर रसोइयों द्वारा अनेक मधुर भोजन बनवा कर उन दोनों ने द्वार पर आये हुए याचकों को सत्कार पूर्वक मुँह मांगा दिया ।

वह्निं ततो दीप्ततरं विधाय चारुं चरुं द्वौ जुहुतः स्म तत्र ।।
यतः समुद्भूत सुगन्धिधूमो दिशां श्रवः पूरपदे व्यराजत् ।। ३२ ।।

इसके बाद प्रदीप्त अग्नि का आधान कर के उन दोनों ने उसमें उत्तमहवि से हवन किया । जिससे उत्पन्न सुगन्धित धुआँ दिशा रूपी अङ्गनाओं के कर्णाभरण के स्थान पर विराजमान हुआ ।

विद्वज्जनानां भवभूषणानां समादरे योग्यविधेर्विशेषात् ।।
समर्प्य वित्तादि वरेण्य वस्तु श्रद्धाधिकौ संस्कुरुतः सुतं तौ ।। ३३ ।।

संसार के मण्डन पण्डितों के आदर में उचित से भी अधिक भाव से धनादि अच्छी वस्तुएं अर्पण करके अधिक श्रद्धा वाले उन दोनों ने पुत्र के संस्कार किये ।

एकादशे चाहनि मूल चन्द्रो विद्वत्प्रधानैः सह सम्परीक्ष्य ।।
गो-गोप-गोपेश-निषेवकं तं गोपाल दासं सचकार नाम्ना ।। ३४ ।।

और ग्यारहवें दिन श्री मूल चन्द्र ने विद्वानों के साथ परामर्श कर के गौओं, गोसेवकों और गोपाल कृष्ण की उपासना करने वाले उस बच्चे का नाम गोपालदास रख दिया ।

चिह्नानि दृष्ट्वाऽथ शरीर जानि लग्नानि हस्तांघ्रितलादि भागे ॥
ऊचुश्चते नूनमनूनविद्या विशेष शक्तिः किल बालकोऽयम् ॥ ३५ ॥

सामुद्रिक चिह्न जो उसकी हथेली या पादतल में थे को देखकर सामुद्रिक विद्या के विशेषज्ञों ने कहा कि यह बालक विशेष शक्तियों वाला होगा ।

पूर्वं प्रसन्नावतिमात्रमास्तामेतत्तु तेषां वचनं निशम्य ॥
विस्मृत्य देहादिक मात्मनीनं मग्नावभूतां सुखसागरे तौ ॥ ३६ ॥

पहिले ही माता पिता बहुत प्रसन्न थे विद्वानों के इन वचनों को सुनकर तो वे देह गेहादि आत्मीय वस्तुओं को भूलकर सुख के समुद्र में डूब ही गये ।

धनं ततः पात्रजनेषु राष्ट्र-जातीयता-धार्मिकताऽऽश्रयेषु ॥
परम्परां प्राप्य मुदामुदारामश्रान्तभावेन वितीर्णवन्तौ ॥ ३७ ॥

तब उन दोनों ने राष्ट्र, जातीयता और धार्मिकता के आश्रय भूत सभा समाजों में परम आनन्द परम्परा पाकर अथक रूप में धन दिया ।

धारा प्रवाहेण वितीर्यमाणं ताभ्यामुपैति स्म धनं विवृद्धिम् ॥
अहर्निशं वारि यथा वहन्त्याः पूरो नवामृद्धि मियर्ति नद्याः ॥ ३८ ॥

उन दोनों के द्वारा धाराप्रवाह के रूप में दिया जा रहा धन अधिकता को ही प्राप्त होता गया । जिस प्रकार रात दिन जल बहाने वाली नदी का प्रवाह बढ़ता ही जाता है ।

कुमारिकाणां वररूपिणीनां रूपाणि धृत्वाऽथ तदीयगेहे ॥
प्राप्तानुकूल्या इव सिद्धयोऽस्य सेवामकुर्वन्सकलाः समेत्य ॥ ३९ ॥

अब उन के घर सुन्दर कन्याओं का रूप धारण करके अनुकूल हुई सभी सिद्धियां मिलकर सेवा करने लगीं ।

माता तदीयं मुखमुन्नमय्य स्नेहेन केनापि चुचुम्ब मन्दम् ॥
अभूत्प्रतीचीव च बालमिन्दुं सा वन्दनीया दधती तमंके ॥ ४० ॥

माता ने उस बच्चे का मुंह ऊंचा करके अवर्णनीय स्नेह से धीरे से चूमा और उस बालचन्द्र को गोदी में लिए हुई वह पश्चिम दिशा के समान वन्दनीय हुई ।

निशम्य तज्जन्म समागतानां विहाय कार्याणि बहिर्जनानाम् ॥
हर्षोत्थितैः स्वैरगिरां प्रवाहैः सर्वा दिशः प्रध्वनिता बभूवुः ॥ ४१ ॥

उस बालक का जन्म सुनकर दूर २ के सम्बन्धिजन अनेक कार्यों को छोड़ कर आये उनके हर्ष से उत्पन्न स्वतन्त्र आलापों से सब दिशाएं प्रतिध्वनित हो गईं !

यदा शिशोरस्य निभालनेन जना अमन्यन्त वृषोदयं स्वम् ।।
तदा तदीयौ पितरौ स्पृशेतां कथं प्रमोदाम्बुनिधेर्न पारम् ।। ४२ ।।

जब इस बच्चे को देखकर सुदूर सम्बन्धि जनों ने भी अपना पुण्योदय समझा; तब उसके माता पिता आनन्द समुद्र के उस पार को क्यों न पाएं ।

पूर्वं प्रसिद्धं विपुलं कुलं यत् सौशील्य दानादि गुणाश्रयत्वात् ।।
सौपुत्र्ययोगेन विराजमानं तदद्य कीर्तिं प्रययौ विशेषात् ।। ४३ ।।

पहिले ही यह महाकुल सुशीलता दान दया आदि गुणों का आधार होने के कारण प्रसिद्ध था । आज तो वह सुपुत्र प्राप्ति से शोभायमान होता हुआ विशेष रूप से कीर्ति को प्राप्त हुआ ।

तयो स्तदार्थान्तर निःस्पृहा सा विचित्र रूपा मनसः प्रवृत्तिः ।।
नवीन माधारमिमं प्रपद्य नान्यत्र गन्तुं क्षणमप्यकांक्षत् ।। ४४ ।।

उन दोनों की अन्य वस्तुओं से विरक्त विचित्र चित्त वृत्ति इस नवीन आधार को पाकर क्षण मात्र के लिए भी अन्यत्र नहीं जाना चाहती थी ।

नित्यं प्रभाते बहुवित्तराशिं स्पृष्टं विधायास्य कराङ्गुलीभिः ।।
विद्वद्वरेभ्यःसुकृताकरेभ्यः समर्पयामासतुरादरेण ।। ४५ ।।

प्रतिदिन प्रातःकाल बहुत सा धन इस बालक के हाथ से छुआ कर पुण्यात्मा विद्वानों को आदर पूर्वक अर्पण करते थे ।

क्रमेण गच्छत्सुदिनेषु सौख्यं नवं नवं सम्परिकल्पयत्सु ।।
पित्रोः प्रसादेन समं कुमारः स चारुवृद्धिं कलयाम्बभूव ।। ४६ ।।

क्रमशः नवीन २ सुखों के देने वाले दिन बीतने लगे और यह बच्चा माता पिता की प्रसन्नता के साथ २ उत्तम वृद्धि प्राप्त करने लगा ।

गेहाङ्गणे जानुकराश्रयेण रिङ्गन्नसौ यां सुषमां ततान ।।
साऽऽसीत्सरोजद्वयलग्नपत्रद्वयानुबिम्बेन सरोभवा श्रीः ।। ४७ ।।

घर के आङ्गण में घुटनों और हाथों के सहारे चलते हुए इस बच्चे ने जो शोभा प्राप्त की । वह तो शोभा दो कमलों में लगे हुए दो पत्तों के प्रतिबिम्ब होने से सरोवर में थी ।

इतस्ततोऽधावदसौ सहर्षं क्षिपंश्च भक्षन्नपि मोदकानि ।।
शुकादयो मञ्जुरवाः खगास्तं पर्याक्रमन्ति स्म जिघृक्षवोऽशम् ।। ४८ ।।

यह बालक मोदकों को बिखेरता और खाता हुआ बड़े हर्ष से इधर उधर दौड़ता था, और उस अंश को लेने की इच्छा से मधुर स्वरों वाले तोते आदि पक्षी उसे घेर लेते थे।

एकाकिना मिष्टभुजा न भाव्यमितीव तेभ्यः स ददौ तदंशान् ॥
तान् भोजयित्वा स्वयमेष भुञ्जंल्लेभे परं हर्षमवर्णनीयम् ॥ ४९ ॥

'अकेले मीठा नहीं खाना चाहिये' शायद इसीलिए वह उन पक्षियों को भी उन लड्डुओं के अंश देता था। और उनको खिला कर खाता हुआ यह परम अवर्णनीय आनन्द को पाता था।

रामादिरूपस्य विभोश्च रम्या गेहे प्रतिष्ठाप्य पुरश्च मूर्तीः ॥
पद्मासनेनैष सुखोपविष्टः पाद्यादिभिः सम्यगुपाचचार ॥ ५० ॥

राम कृष्ण आदि रूप प्रभु की सुन्दर मूर्तियां घर में ही रख कर पद्मासन बांध कर सुख से बैठा हुआ वह बच्चा पाद्य अर्घ्य आदि से उनकी पूजा करता था।

श्रद्धां सदा सत्त्वमयीमवाप्तः पुष्पाण्युपादाय तथा च धूपम् ॥
चकार तासामुचितां सपर्यां ममन्त्रिका मलाक मन्त्रिकां वा ॥ ५१ ॥

सात्विकी श्रद्धा से युक्त यह बालक पुष्प और धूप लेकर उन मूर्तियों को बिना मन्त्र के या थोड़े मन्त्रों से उचित पूजा करता था।

तस्यानुसारेण परेऽपि बालाः क्रीडाविधिं प्राकृतिकं विहाय ॥
तत्स्वीकृतैः क्रीडनकैर्लडन्तोऽभूवन्क्रमेणेशपदाब्जलग्नाः ॥ ५२ ॥

उसका अनुकरण करके अन्य बालक भी साधारण क्रीड़ाविधि को छोड़ कर उसके ही खिलौनों से खेलते २ क्रमशः ईश्वर के चरण कमलों में बद्ध प्रेम हो गये।

स ग्राम्यबालानुपवेश्य काले काले जगत्पुण्यचयानिवोत्थान् ॥
दिदेश जापाय जयोदयाय श्रीराम रामेत्यभिराम नाम्नः ॥ ५३ ॥

समय २ पर जगत् के उत्पन्न हुए पुण्यसमूह प्रतीत होने वाले ग्रामीण बालकों को बैठा कर सर्वतः जय दिलाने वाले श्री राम राम इस सुन्दर नाम के जप का उपदेश करता था।

क्रीडा कला तस्य विलक्षणा सा गतिर्विचित्राऽद्भुतजा च दृष्टिः ॥
मनोऽवकाशेषु समीक्षकाणा मुत्पादयामासु रलं विवेकम् ॥ ५४ ॥

उस की अनोखी क्रीड़ा, अनूठी चाल और अजीब दृष्टि ने देखने वालों के मन में पर्याप्त विवेक उत्पन्न कर दिया।

गोपाल कृष्णस्य च रासलीला मातुः श्रुताः सोऽभिनिनाय सम्यक् ॥
क्रीडापरैर्वल्लव बल्लवीनां रूपं दधानैः सखिभिः समेतः ॥ ५५ ॥

गोप गोपियों का वेष धारण करके खेल रहे मित्रों के साथ वह बालक माता से सुनी हुई भगवान् कृष्ण की रास लीलाओं का ठीक २ अभिनय करता था।

कदाचिदुतप्त सुवर्ण सज्जशफ़ान् स्वतो रम्यतरस्वरूपान् ॥
विचित्ररागैरुपरज्य वत्सान् परम्परां प्राप मुदामुदाराम् ॥ ५६ ॥

कभी २ शुद्ध स्वर्ण से सुशोभित खुरों वाले स्वभाव से ही सुन्दर बछड़ों को विचित्र रंगों से रंग कर वह आनन्द की बड़ी परम्परा को प्राप्त होता था।

स्नेहास्पदं साधु बभूव सोऽयं विद्वज्जनानां शुभ रूपशीलः ॥
लीलास्तु कुर्वन् ललिताः क्रमेण पस्पर्श तेषामतिभक्तिभावम् ॥ ५७ ॥

सुन्दर रूप और सत् स्वभाव के कारण यह बालक विद्वानों का स्नेह पात्र तो था ही। किन्तु सुन्दर लीलाएं करते हुए तो इसने उनके भक्तिभाव को भी प्राप्त कर लिया।

सौभाग्यलब्धस्य शिशोरमुष्य विलोकयन्तौ रमणीय लीलाः ॥
तुष्टिं प्रयातौ पितराववाच्यां वाचा नमेयां मनसा च काञ्चित् ॥ ५८ ॥

सौभाग्य से प्राप्त इस बच्चे की अद्‌भुत लीलाओं को देखकर माता पिता वाणी से अवर्णनीय और मन से अमेय आनन्द को प्राप्त हुए।

आनन्दिनी नयनयोर्मनसश्च काचित्तस्याकृतिः कृतिजनैः सुकृतैकलभ्या ॥
उद्वीक्ष्यते स्म नयनैरनधीत पक्ष्मपातैरपीह सततं धृतपक्षपातैः ॥ ५९ ॥

आंखों और मन को आनन्द देने वाली, पुण्य मात्र से प्राप्य, उसकी अवर्णनीय आकृति पुण्यात्माओं द्वारा विशेष पक्षपात पूर्वक निर्निमेष लोचनों से देखी जाती है।

पाथोज-कोष–कमनीय-कलेवरोऽयं
कुर्वन् पवित्रित-विलोकिहृदो विलासान्।
संहर्षयन्नखिल-बन्धुजनस्य चेतो,
बालः सुखं शिशुतया सह खेलतिस्म ॥ ६० ॥

कमल कोष के समान कमनीय-कलेवर यह बालक दर्शकों के हृदयों को पवित्र कर देने वाले विलास करता हुआ और समस्त बन्धुजनों के हृदयों को प्रसन्न करता हुआ बड़े सुख से बचपन के साथ खेला।

इति पुत्र जन्मोत्सवो नाम द्वितीयः सर्गः ॥

---

# अथ जनन्यनुशासनं नाम तृतीयः सर्गः ॥

सजन्ममृत्यू परिहर्तुकामो गुहो यदीयौ चरणावनेनेक् ॥
शक्तिर्हि नारी करणीह दृष्टे त्यहो तमेव प्रणमामि रामम् ॥ १ ॥

जन्म मृत्यु से छुटकारा पाने की इच्छा वाले उस ( जंगली ) गुह राज ने यह कह कर कि "इन में स्त्री बनाने की शक्ति देखी गई है जिस प्रभु के चरण धो लिए (स्त्री बनने का भय प्रकट किया और अनन्त जन्मों के भय से छुटकारा पा लिया ) राम को मैं प्रणाम करता हुं ।

अनादिमायातिमिरं यदीय कृपाकटाक्षप्रभयाऽपयाति ॥
अङ्गीकरोतु प्रणतिं मदीयां सङ्गीत साहित्यमयीश्वरी सा ॥ २ ॥

जिस के कृपा कटाक्ष की एक किरण से अनादि माया-प्रपञ्च रूप अन्धकार भाग जाता है वह साहित्य-संगीतमयी सरस्वती मेरा प्रणाम स्वीकार करे ।

अथोक्तरीत्यास चरन्विचित्रं स्वजन्मकर्म प्रभवं प्रभावम् ॥
प्रकाशयं ल्लालनपालनार्हे कालेऽकरोदद्भुत्त चिन्तनानि ॥ ३ ॥

अब उक्त रीति से आचरण करते हुए उस बालक ने अपने जन्म और कर्म के अद्भुत प्रभाव को प्रकट करते हुए उस लालन पालन योग्य शैशव काल में ही आश्चर्यंजनक चिन्तन किये ।

नानात्मकं हन्त जगत्किमेतत्कोऽहं तथा के मम ते सखायः ॥
कुतोऽस्मि, केनास्मि, तथास्मि, कस्मिन्नित्येष नित्यं क्रियतां विचारः ।४।

यह अनेक रूप जगत क्या है ? मैं कौन हूं ? और यह मेरे सखा कौन हैं ? मैं कहां से आया ? किस से जी रहा हूँ ? किस में जा रहा हूँ ? यह विचार नित्य करना चाहिये ।

ग्रामाद्बहिः क्वापि विविक्तदेशे प्रश्नेऽत्र यावत्समनो न्ययुंक्त ॥
दैवेनतावत्प्रहितं पुरस्ताद् दृश्यं स वैराग्यकरं ददर्श ॥ ५ ॥

ग्राम से बाहर किसी एकान्त स्थान में ज्यों ही उसने इस प्रश्न पर अपना मन लगाया —त्यों ही उसने सामने भाग्य का भेजा हुआ वैराग्यजनक दृश्य देखा ।

तेन व्यलोक्यन्त शुचारुदन्तः कारुण्यपूर्णैर्बहुवाद्य भेदैः ।।
उद्धृत्य कंचिच्छव मात्मबन्धोर्जनाः श्मशानाभिमुखं नयन्तः ।। ६ ।।

उसने अनेक करुणापूर्ण बाजों के साथ शोक से रोते हुए और किसी अपने सम्बन्धी के शव को उठा कर श्मशान की ओर ले जाते हुए पुरुषों को देखा ।

दृष्ट्वे दृशं दृश्यमदृष्ट पूर्वं पप्रच्छ तान्विस्मय मानचित्तः ।।
किमेतदस्तीह महानुभावाः ? मृतोऽयमद्येति जनास्तमूचुः ।। ७ ।।

जैसा उसने पहिले कभी न देखा था ऐसे इस दृश्य को देखकर आश्चर्यचकित होते हुए उसने उन पुरुषों से पूछा—महानुभावो, इसमें यह क्या है ? उन पुरुषों ने उत्तर दिया कि यह आज मर गया है ।

समं ततस्तैः सगतः श्मशानं तं ज्वाल्यमानं ज्वलनेऽवलोक्य ।।
ततोऽधिकां प्राप्य विचार धारां निर्विण्णचेता इव सम्बभूव ।। ८ ।।

तब वह उनके साथ श्मशान में गया—उस शव को अग्नि में जलाया जाता देख कर पहिले से भी अधिक विचारधारा में पड़ कर वह उदास सा हो गया ।

करोति कार्याणि कदाचिदेष स्वस्थः पृथिव्यां पुरुषोऽद्भुतानि ।।
स एव काष्ठैः सह दह्यमानो न वक्ति वाचोऽपि लवं तु कंचित् ।। ९ ।।

यह मनुष्य इस लोक में स्वस्थावस्था में आश्चर्यजनक कार्य करता है— वही मरने पर काष्ठों के साथ जलाया जाता हुआ किसी को जरा सा भी कुछ नहीं कहता ।

किमिन्द्रजालं परिदृश्यतेऽदः किंवास्ति सत्यं भुविदृश्यमेतत् ।।
पर्याकुलंमेऽत्रमनो विचारे करोमि किं कः खलुबोधयेन्माम् ।। १० ।।

क्या यह इन्द्रजाल दीखता है या यह भूमि पर जो कुछ दीखता है सत्य है । मेरा मन इस विचार में व्याकुल हो रहा है । मैं क्या करुँ ? मुझे कौन समझाए ?

चिरं विमृश्यैवमयं स्वचित्ते विनिश्चयं प्रापदिमं किलान्ते ।।
गच्छाम्यहं मातृसमीपमद्य सा संशयंमेऽपहरिष्यतीति ।। ११ ।।

यह चिरकाल तक अपने मन में इस प्रकार विचार कर अन्त में इस निश्चय पर पहुंचा कि मैं माता के पास जाता हूं वही मेरे संशय को दूर करेगी ।

अभ्येत्य तूष्णींस्थितमेन मन्तश्चिन्तं विवर्णेन मुखेन बुद्ध्वा ।।
स्नेहस्नुतापीन पयोधरा सा माता तदाऽस्मै वचनं जगाद ।। १२ ।।

पास में आकर चुपचाप खड़े हुए इस बच्चे को विवर्ण मुख से चिन्तातुर जान कर स्नेह से स्नुतस्तनी होकर वह माता इसके प्रति बोली ।

एह्येहि हे वत्स, चिरायुरेधि, प्रतीयसे त्वं किमु विस्मितो मे ।।
वेलामिमां कुत्र किलानयस्त्वं, सर्वं यथार्थं वद मत्सुखाय ।। १३ ।।

आ, आ, बेटा, दीर्घायु हो। तू मुझे उदास सा लग रहा है। इतना समय तू कहां था। मुझे सुखी करने के लिये सब सत्य २ कह दे।

संसार मध्ये वसतो नरस्य प्रमास्पदानीह बहूनि सन्ति ।।
तथापि पुत्रेण समंजनन्या नान्यद्भवेद्वत्सलता निधानम् ।। १४ ।।

संसार में रहते हुए मनुष्य के बहुत प्रेम पात्र हैं—तो भी मां के लिये पुत्र के समान दूसरा स्नेहभाजन नहीं हो सकता।

महीतले कस्यचिदत्रपुंसो हेतुं समुद्दिश्य च कंचिदेव ।।
स्नेहानुबन्धः किलकेनचित्स्यात् स्वाभाविकं प्रेमपरन्तु मातुः ।। १५ ।।

इस लोक में किसी पुरुष को किसी कारण से किसी के साथ प्रेम होता है किन्तु माता का प्रेम तो स्वाभाविक ही होता है।

आकस्मिकी मापदमेत्यलोकः सम्पीडयमानः परिमोहमेति ।।
सहायकागोचरतां च मत्वा गृह्णाति पूर्वं किल मातृनाम ।। १६ ।।

आकस्मिक आपत्ति को पाकर मनुष्य व्याकुल होता हुआ बेहोश हो जाता है और यह जानकर कि इस आपत्ति में मेरा कोई सहायक नहीं हो सकता, मां को पुकारता है।

देशे विदेशेऽस्तु गृहे वने वा सुतोऽनुगो वा विपरीतवृत्तिः ।।
मनः प्रवाहस्तु तथाऽपि मातुः सदा विशुद्धः सुतमेवयाति ।। १७ ।।

पुत्र देश में हो या विदेश में। घर में हो या बाहर। अनुकूल हो या प्रतिकूल। माता का शुद्ध मन: प्रवाह तो पुत्र की ओर जाता है।

न प्रेममात्रं किलमातृहार्दं तत्प्रेम वाच्यं परमात्परं तु ।।
नामापि मातेति समीर्यमाणं पुत्रस्य चेतोद्रुतिमातनोति ।। १८ ।।

माता का प्रेम केवल प्रेम नहीं अपितु परम से परम प्रेम कहा जाना चाहिये। 'मां' यह नाम कहते ही पुत्र का हृदय पिघल जाता है।

विचारशीलाविरलाः किलैते स्नेहस्य तत्त्वं भुवि ये विदन्ति ।।
त एव सर्वस्वसमर्पणेन स्वमातृपादाम्बुजमर्चयन्ति ।। १९ ।।

यह थोड़े ही विचारशील होते हैं जो इस लोक में प्रेम का रहस्य समझते हैं। वे लोग ही अपना सर्वस्व सौंपकर माता के चरण कमलों की पूजा करते हैं।

विश्वेशमाराधयितुं लसन्ति शास्त्रेषु नानाशुभसाधनानि ॥
सेवा जनन्याः सकलेषु तेषु सर्वोत्तमं साधनमभ्युपेतम् ॥ २० ॥

ईश्वर की आराधना करने के अनेक शुभ साधन शास्त्रों में विराजमान हैं। किन्तु उन सब शास्त्रों में माता की सेवा को सब से उत्तम साधन माना है।

भार्यादि रागांप्लुतमानसास्तु विवेक हीनाः पुरुषा अनेके ॥
गर्भाश्रय - स्तन्यसुधा—प्रदाया मोहेन मातुर्विमुखा भवन्ति ॥ २१ ॥

विचारहीन बहुत से पुरुष तो भार्या आदि के राग से आविष्ट हृदय होकर मोहवश गर्भ में आश्रय और दूधरूप अमृत देने वाली माता से विमुख हो जाते हैं।

यज्जायते नाम महज्जनन्याः पराङ्मुखस्येह नरस्य पापम् ॥
ननिष्कृतिस्तस्य भवेत्कदापि पीडां सदाऽसौ महतीं प्रयाति ॥ २२ ॥

माता से पराङ्मुख पुरुष को इस लोक में जो महा पाप होता है उसका कोई प्रायश्चित नहीं। वह पुरुष सदा महापीड़ा प्राप्त करता है।

सदोषपुत्रेऽपि सदा करोति माता परंप्रेम यतोऽवशेव ॥
योग्ये गुणानां निलये सुशीले प्रेम्णः सुपुत्रे तु कथाऽस्तु काऽस्याः ॥ २३ ॥

क्यों कि मां विवश सी होकर दोषी पुत्र पर भी सदा परम प्रेम करती है तब सुयोग्य गुणवान् सदाचारी सुपुत्र पर तो उसके प्रेम का क्या कहना।

प्रेम्णा परेणाथ समावृता सा पुनस्तमित्याह सुतं सुपात्रम् ॥
कथं ह्युदासीन इवाद्य भासि वृत्तान्तमेतं विशदं वद त्वम् ॥ २४ ॥

इसीलिये परम प्रेम से पूर्णहृदया वह माता उस सुपात्र पुत्र से फिर बोली—तू क्यों उदास सा है? इस वृत्तान्त का विस्तार से कह।

पृष्टस्तयैवं सुगिरा तदानीं नाना विचारावृतमानसोऽसौ ॥
तं संशयं तां निजगाद चेतस्तोदाय यः पूर्वमिहोदियाय ॥ २५ ॥

माता द्वारा इस प्रकार मधुर वाणी से पूछा गया अनेक विचारों से आवृत हृदय वह बालक माता के प्रति अपना वही संशय बोला-जो पहिले मन को खिन्न करने के लिये उत्पन्न हुआ था।

मातर्विचित्रं यदिदं विभाति प्रपञ्चरूपं विततं समन्तात् ॥
दिवानिशं हर्ष विषाद पूर्णं शीतं तथोष्णं विषमं समंच ॥ २६ ।

हे माता, यह जो विचित्र प्रपञ्चसा चारों ओर फैला हुआ है, रातदिन हर्ष और शोक से भरा हुआ-ठण्डा, गरम, विषय और सम ॥

सत्यं मयेदं परिदृश्यमानं मिथ्वाऽथवा किन्विदमिन्द्रजालम् ॥
निवारणायास्यतु संशयस्य त्वमेव शक्ता जननीति वेद्मि ॥ २७ ॥

मैं जो कुछ देख रहा हूं यह सत्य है अथवा यह झूठा इन्द्रजाल है। इस संदेह का निवारण करने के लिये मां, तू ही समर्थ है मैं यह जानता हूँ।

श्रुत्वाऽस्यवाक्यं जननी वरेण्यं हृष्टा प्रशंस्याऽथ गिराऽनया तम् ॥
धन्योऽसि हे वत्स, विचारशील, संबोधयामास ततो रहस्यम् ॥ २८ ॥

माता इस बालक के इस सुन्दर वाक्य को सुन कर बहुत प्रसन्न हुई और 'हे विचारशील, बच्चा तू धन्य है' इस वाणी से उसकी प्रशंसा करके उसे रहस्य समझने लगी।

दृश्यं पुरस्ते यदिदं विभाति, जानीहि सर्वं त्वमसत्यमेतत् ॥
निद्रादिदोषोद्भवचित्ररूपं स्वप्नं यथा भाति तथा किलेदम् ॥ २९ ॥

जो कुछ तुम्हें यह सामने दीख रहा है, इस सब को तुम मिथ्या जानो। निद्रा आदि दोष से विचित्ररूपों वाला स्वपन्न जैसे होता है-यह भी ऐसे ही है।

त्वं नासि भूतादियमयं शरीरं जडं महादोषमयं विकारि ॥
शुद्धस्वरूपोऽसि विकारशून्यः पृथक् शरीराद्विगुण श्चिदात्मा ॥ ३० ॥

तू जड, अनन्त दोषों से भरा, विकारवान्, भौतिक शरीर नही है। तू तो चैतन्यरूप, गुणहीन, विकाररहित, शुद्धस्वरूप, शरीर से भिन्न आत्मा है।

अविद्ययैवेह जडे शरीरे भात्यात्म बोधः किल मानवानाम् ॥
पञ्चात्मकेऽस्मिन्विविधे प्रपञ्चे ततोममत्वं भवतीह सौम्य ॥ ३१ ॥

अविद्या के ही कारण मनुष्यों को इस जड़ शरीर पर आत्मबुद्धि हों जाती है और इसी लिये इस पाञ्चभौतिक विविध प्रपञ्च पर लोगों को ममता हो जाती है।

अध्यासपाशेन गृहीतरूपः प्रवर्ततेऽस्मिन्विषये जनोऽयम् ॥
लाभाशया तत्र चिरं निमग्नः स्वात्मापहानं स करोति सद्यः ॥ ३२ ॥

अध्यास के पाश में बँधा हुआ यह लोक इस संसार में प्रवृत्त होता है और लाभ की आशा से इस संसार में मग्न हुआ अपना सर्वनाश कर बैठता है।

विवेकिनस्तेषु तथा मनुष्या विषायमानान्विषयान्विहाय ॥
एकान्तमाश्रित्य विचाररीत्या जानन्ति देहात्पृथगात्मरूपम् ॥ ३३ ॥

विचार वान् मनुष्य तो विषतुल्य विषयों को त्याग कर विचार पद्धति के द्वारा एकान्त में रह कर शरीर से भिन्न आत्मरूप को जानते हैं।

नरो विवेकेन विलोकयेच्चेज़्जगत्प्रतीयेततदाऽतिभीमम् ॥
वैराग्यमेवेह तु भीतिशून्यं मत्वा प्रपद्येत शमैक हेतुम् ॥ ३४ ॥

यदि मनुष्य विचारपूर्वक देखे तो उसे संसार अत्यन्त भयानक दीखे। और वह वैराग्य को ही भयहीन और शान्ति का एक कारण जानकर प्राप्त करे।

कामादयोऽप्स्यनरस्य देहे वसन्त एन परितापयन्ति ॥
आपातरम्यं परिकलप्यरूपं मतिं समाच्छाद्य विवेकशीलाम् ॥ ३५ ॥

काम क्रोध आदि भी आपात रमणीय रूप धारणं करके विचारशील बुद्धि को मोहित करके मनुष्य के शरीर में ही रहते हुए इसे तपाते हैं।

पुत्राः कलत्रं किलबन्धवोऽन्ये ये सन्ति लोके ममताश्रयाश्च ॥
न कोऽपि संसारसमुद्रमग्नं नरं समुत्तारयितुं समर्थः ॥ ३६॥

पुत्र, स्त्री, बन्धु या अन्य भी जो कोई संसार में ममता के आश्रय हैं कोई भी संसार समुद्र, में डूबे हुए मनुष्य का उद्धार नही कर सकता ॥

माता ममेयं जनको ममायं मित्राणि मेऽमूनि मम प्रियाऽसौ ॥
न तात्विकं किञ्चिदिहास्तिवस्तु स्वप्नोपमं सर्वमिदं विभाति ॥ ३७ ॥

यह मेरी मां है, यह मेरा पिता है, यह मेरे मित्र हैं, यह मेरी पत्नी हैं। वास्तव में यहां कोई भी वस्तु नही है। यह सब स्वप्न के समान प्रतीयमान है ॥

पीत्वा यथाऽसन्मृगतृष्णिकाम्भस्तृषा न कस्यापि परैति शान्तिम् ॥
संसारयोग्योच्चयभोगतश्च सुखं कदाचिन्नहि कोऽपियाति ॥ ३८ ॥

मृगमरीचिका के असत्य जल को पीकर जैसे किसी की प्यास नहीं बुझती वैसे ही संसार के भोग्यपदार्थों के भोग से कभी किसी को सुख नही मिलता।

धनं बहूपार्ज्यं सुखं न लभ्यं ततोऽपिदुःखं जगतीगतानाम् ॥
तत्संग्रहे भूरितरंहिकष्टं रक्षाविधाने च वृथा व्यथा स्यात् ॥ ३९ ॥

बहुत साधन एकत्रित करके सुख नहीं मिलता-प्रत्युत संसारियों को पहिले से भी अधिक कष्ट होता है। धनसंग्रह करने में बहुत ही कष्ट होता है और उस की रक्षा करने में भी वृथा व्यथा होती है।

चौरैः कदाचिद्ध्रियते धनं तद्विभज्यते भ्रातृभिरप्यपत्यैः ॥
वह्न्यादयो वाक्षयितां नयन्ति मृत्युं तदाऽऽकालिकमेतिलोकः ॥ ४० ॥

उस धन को कभी चोर चुरा लेते हैं, कभी भाई और कभी पुत्र बांट लेते हैं। कभी अग्नि आदि ही उसे नष्ट कर देते हैं—तब धनवान् विना समय की ही मृत्यु प्राप्त करता है।

तरङ्गभङ्गोपमितं नराणां त्वं जीवनं विद्धि विचारशील ॥
कार्या नविश्वासमतिः किलास्मिन् नो चेन्महाहानिमयेत जीवः ॥ ४१ ॥

हे विचारशील, तुम मनुष्यों के जीवन को तरङ्ग भङ्ग के समान जानो। उस पर कभी विश्वास नहीं करना चाहिये। अन्यथा जीव को महाहानि प्राप्त होगी।

हे वत्स, तुभ्यं कथयामिसत्यं श्रृणुष्व वाक्यं मम सावधानः ॥
शब्दादि संज्ञान्विषयान्विहाय भजस्व रामाङ्घ्रिसरोजयुग्मम् ॥ ४२ ॥

हे बेटा, मैं तुझे सत्य कहती हूं, तू सावधान हो कर मेरी बात सुन। शब्द, स्पर्श, रूप, रस, गन्ध नामक विषयों का त्याग कर के तू भगवान् राम के दोनों चरण कमलों का भजन कर।

पीत्वाचतन्नामरसं चिराय लभस्व नित्यं परमं सुखं स्वम् ॥
नैतेषु भोगेषु सुखस्य जातु लेशोऽपि के नापि नरेण लभ्यः ॥ ४३ ॥

और चिरकाल तक रामनाम का रस पान करके तू उस नित्य सुख को प्राप्त कर। क्योंकि किसी भी मनुष्य को इन भोगों में कभी भी सुख का लेश भी नहीं मिल सकता।

क्रूरो महाकालबली न जाने कदा समागत्य हरेदितोऽसून् ॥
दशा तदा कष्टमयी भवेद्या जनस्य वाचाङ्कयितुं न शक्या ॥ ४४ ॥

न जाने कब कराल काल इसके प्राणों को आकर हर ले। तब मनुष्य की जो कष्ट मयी दशा होगी-वह वाणी से वर्णन नहीं की जा सकती।

रत्नानि वान्यानि धनानि यानि धृतानि लोकेन यथाकथंचित् ॥
कालेन नाशं प्रतिनीयमानं शक्तानिनैतानिनरं प्रधर्तुम् ॥ ४५ ॥

मनुष्य ने जैसे तैसे जो रत्न या अन्य धन धारण कर रखे हैं यह सब काल द्वारा नाश की ओर ले जाये जा रहे इस नर को रोक-नहीं सकते।

नानापदार्थैर्विविधैरुपायैर्यत्सर्वथाऽनेन विपुष्टमासीत् ॥
तदस्य सौन्दर्यमयं शरीरं काष्ठायमानं ज्वलतीह वह्नौ ॥ ४६ ॥

अनेक उपायों और अनेक पदार्थों से मनुष्य ने जिस शरीर को सब प्रकार से पुष्ट किया था वह इस का अति सुन्दर शरीर काष्ठ के समान अग्नि में जल जाता है।

ये स्वार्थमालम्ब्य पुरऽवदंस्तमस्माकमेवान्तिकमाबसेति ॥
त एव तं स्वार्थविधावयोग्यं त्यजन्ति मत्वा जरसा परीतम् ॥ ४७ ॥

जो लोग पहिले स्वार्थ का आश्रम लेकर इस को कहते थे आ हमारे पास आ रह। वे ही इसको स्वार्थसाधन में असमर्थ, बुढ़ापे से घिरा जान कर छोड़ देते है।

चेतोहरा वक्रिमशालि-चारुकटाक्षनिक्षेपपराः स्मिताभाः ॥
विलासवत्यो ललनास्तमेनं ज्ञात्वाक्षमं नाद्य बिलोकयन्ति ॥४८॥

वक्र कटाक्षों से देखने वाली, स्मयमानमुखी, विलासवती मनोहर ललनाएं इस वृद्ध को असमर्थ जान कर देखती भी नहीं हैं।

तत्त्वावधानेन विना भ्रमन्तो जनाहि भोगेषु भजन्ति सङ्गम् ॥
विवेक शीलास्तु विहाय सर्वान् हे तात, रामे मनसा रमन्ते ॥४९॥

यथार्थ ज्ञान के बिना भटकते हुए पुरुष ही भोगों में मग्न होते हैं, हे पुत्र, विवेकशील पुरुष तो सब कुछ छोड़ कर केवल राम में ही मन से रमण करते हैं।

लब्धं प्रभूतैः सुकृतैः किलैतन् नृजन्म जन्मान्तर कर्तनाय ॥
यावन्न कालः कवलीकरोति, यत्नो विधेयः किल तावदेव ॥५०॥

बहुत से पुण्यों द्वारा जन्मान्तरों की निवृत्ति के लिये प्राप्त इस नर जन्म को जब तक काल अपना कवल नहीं बनाता तभी तक यत्न कर लेना चाहिये।

यावच्छरीरेऽस्ति च कर्मशक्ति स्तावन्नियम्येन्द्रियवर्गमाशु ॥
वसन्विविक्तेषु भजँस्तमेव परेश्वरं मोक्षमवाप्नुहि त्वम् ॥५१॥

जब तक शरीर में कर्म की शक्ति है तभी तक इन्द्रियवर्ग का शीघ्र संयम कर ले। एकान्त, पवित्र स्थानों में रहता हुआ और इस परमात्मा का भजन करता हुआ तू मोक्ष को प्राप्त कर।

दिनं प्रकाशाय, निशेतराय सायं प्रभातं युगसङ्गमाय ॥
बहूनि रूपाणि विधाय कालो वयो जनानामपहन्ति नित्यम् ॥५२॥

प्रकाश के दिन, अन्धकार के रात, दोनों के समागम के लिये सायं और प्रभात इस प्रकार काल बहुत से रूप बना कर निरन्तर लोगों की आयु का नाश करता है।

सर्वेषु वेदादि निबन्धनेषु सिद्धान्त एष प्रतिपादितोऽस्ति ॥
कैवल्यलाभो भवरोगहानिः फलं शरीरस्य नराभिधस्य ॥५३॥

वेदादि सम्पूर्ण सत् शास्त्रों में यही सिद्धान्त स्थापित है कि मोक्ष प्राप्ति या भवरोग हानि नर नामक शरीर के यही फल हैं।

अविद्यया तत्त्वमिदं निगूढं द्रष्टुं जना ये नहि शक्नुवन्ति ॥
तेऽन्ते शरीरं परिहाय मूढा स्तिर्यग्गतिं दुःखमयीं श्रयन्ति ॥५४॥

अज्ञान के कारण छिपे हुए इस तत्त्व को जो लोग नहीं देख सकते, वे अन्त काल में शरीर का त्याग करके मोह वश दुःखमयी तिर्यग्गति को प्राप्त करते हैं।

विचारशील प्रविमूढयोस्त्वं मनुष्ययोर्भेदमिमं प्रपश्य ॥
गृह्णाति पूर्वः सुनिरूप्य पथ्यं परस्त्वपथ्यं भृशमाददाति ॥५५॥

विचारवान् और मूढ़ पुरुषों में तुम यह भेद समझो कि विचारवान् तो अच्छी तरह सोचसमझ कर पथ्य (हितकर) को स्वीकार करता है पर मूढ़ अपथ्य को ही पकड़ लेता है।

अहो महार्घां विमलां सुवेलां येकेऽपि भोगेष्वपयापयन्ति ॥
तेभ्योऽधिकः शोच्यतमो न कश्चिज्जनो महापातकितां गतोऽस्ति ॥५६॥

अहो बहूमूल्य निर्मल समय को जो भोगों में बिता देते हैं, उनसे बढ़कर संसार में न कोई शोचनीय है और न कोई महापातकी !

पुत्राश्च भार्या स्वजनास्तथान्ये मर्मोपघातैर्वचनैः क्षिपन्ति ॥
तथापि कुर्वन्ममता ममीषु मुग्धः परिभ्रंशमुपैति तत्त्वात् ॥५७॥

पुत्र, स्त्री तथा अन्य बन्धु हृदयभेदी वचनों से इस पर आक्षेप करते हैं—तो भी उन पर ममता रखता हुआ यह मूढ़ तत्त्व से भ्रष्ट हो जाता है।

हे वत्स, देहात्ममतिं विहाय ममत्वमेतस्य तथापहाय ॥
विचिन्त्य चैतत्क्षणभङ्गशालि वैराग्यमेवेह समाश्रयस्व ॥५८॥

हे बेटा, शरीर में आत्मबुद्धि और ममता का त्याग कर तथा इसको क्षण-भङ्गुर सोच कर तू इस पर वैराग्य ही धारण कर।

शब्दादिका ये विषया लसन्ति न तेषु तत्त्वात्सुखमल्पमस्ति ॥
मूढैः सुखाभासमयोऽपि भोगो विलोक्यते सत्य इवेति चित्रम् ॥५९॥

जो शब्द आदि विषय चमकते हैं उनमें यथार्थ में जरा भी सुख नहीं है। मूढ़ लोग सुखाभासमय भोग को सत्य समझ लेते हैं यही आश्चर्य है।

निविश्य भोगेषु, सुखं क्षणाय यथा तथा सम्परिभुज्य मूढाः ॥
पीडाप्रधानानि वपूंषिधृत्वा मृत्वातिकष्टे नरके पतन्ति ॥६०॥

भोगों में निविष्ट होकर और उनमें जैसे तैसे सुख भोग कर मूढ़ लोग मर कर पीड़ामय यातना शरीरों को धारण कर कष्टमय नरक में पड़ते हैं।

चान्द्रायणादि व्रतपालनैर्वा तपोभिरुग्रै रथ दुःखसाध्यैः ॥
विद्वांसएवेह नरा विविच्य चिदात्मनो नित्यसुखं भजन्ते ॥६१॥

और विद्वान् पुरुष तो चान्द्रायण आदि व्रतों का पालन करके तथा अन्य दुःख साध्य उग्र तप करके चित्स्वरूप आत्मा के साक्षात्कार का नित्य सुख प्राप्त करते हैं।

बहूनि दुःखान्यनुभूय लोके सुखं मनुष्यैरुपलभ्यते यत् ।।
सर्वोत्तमं सत्त्वगुणोपपन्नं तदेव शास्त्रेषु निरूपितं सत् ।।६२।।

बहुत से दुःखों को अनुभव करके मनुष्य संसार में जो सुख पाते हैं, शास्त्रों में उसे ही सर्वोत्तम, सात्त्विक और सच्चा सुख कहा है ।

संसारिणां प्रेम किलाविशुद्धं स्वार्थावृतं कृत्रिमता प्रधानम् ।।
त्रिलोकनाथस्य तु शुद्धमेतत्परार्थकं, तत्र बुधा रमन्ते ।।६३।।

संसारियों का प्रेम स्वार्थ और कृत्रिमता से भरा है अतः वह शुद्ध नहीं है, उस त्रिभुवन नायक का प्रेम तो परार्थ है अतः शुद्ध हैं, विद्वान् उसी प्रेम में मग्न होते हैं ।

विनाशशीलेऽत्रभवेन कोपिस्थातु समर्थो मनुजः प्रवीणः ।।
संख्यातिगा येबलिनो बभूवुः सर्वे गतास्ते विवशा विनाशम् ।६४।।

इस विनाशशील संसार में कोई चतुर पुरुष भी रहने में समर्थ नहीं है । जो असंख्य बलवान् हुए वे सब विवश होकर विनाश को प्राप्त हुए ।

एतावदद्येह धनं मयेदं लब्धं, लभेयं कथमन्यदेतत् ।।
विचिन्तयन्ति स्फुटमत्र मूढा गच्छन्ति चाकस्मिककालपातम् ।।६५।।

आज यह इतना धन मुझे मिला है अब यह इतना और कैसे मिले-बस मूढ़ यही चिन्ता करते हैं और आकस्मिक मृत्यु के कारण सदा के लिए गिर जाते है ।

आसक्तिमाश्रित्य मृगादयोऽपि नश्यन्ति शब्दादि गुणान् भजन्तः ।।
पृथक् पृथक्यत्र समागमः स्यात् तेषां तु नाशस्य कथैव का स्यात् ।।६६।।

मृगादि आसक्ति पूर्वक पृथक पृथक शब्द आदि गुणों की सेवा करते हुए नष्ट हो जाते हैं । फिर जहां सब गुणों की सेवा का समागम हो वहां तो नाश का कहना ही क्या है ।

वश्योऽस्ति यस्येन्द्रियवर्ग एष, धन्योऽस्ति विज्ञोऽस्ति नरः स एव ।।
बली, यशस्वी, मतिमान्, प्रशंस्यो नतत्समोऽन्योभुवि भाग्यशाली ।।६७।।

जिस की इन्द्रियां वश में हैं वह पुरुष धन्य हैं, विद्वान् है । उसके समान दूसरा संसार में बलवान्, कीर्तिमान्, बुद्धिमान, प्रशंसनीय और भाग्यवान् नहीं है ।

हे सौम्य वत्सेह कदापि पीडा कस्यापि लोके भवतान देया ।।
निश्चित्य सर्वत्र परेशसत्तां जीवा यथायोग्यतया निषेव्याः ।।६८।।

हे सौम्य पुत्र, तुझे संसार में कभी किसी को कष्ट न पहुंचाना चाहिये, सब में उस सर्व व्यापक ईश्वर की सत्ता का निश्चय कर के सब जीवों की यथा योग्य सेवा करनी चाहिये ।

"निर्मानमोहा जितसंगदोषा अध्यात्मनित्या विनिवृत्तकामाः ।।"
द्वन्द्वैर्विमुक्ताः परिषेवणीयाः सन्तो यतो ज्ञानमुदेत्य खण्डम् ।।६९।।

मान मोह रहित, जित संगदोष, अध्यात्म विचार परायण, कामना हीन, सुख दुःखादि द्वन्द्वों से शून्य सन्तों की सदा सेवा करनी चाहिए जिस सेवा से अखण्ड ज्ञान उत्पन्न होता है ।

त्वं द्वेषरागौ मनसोऽपहाय सर्वेषु जीवेषु समत्वमेत्य ।।
प्रीत्या रमानाथ पदारविन्दं भजन्यथेष्टं भुवने रमस्व ।।७०।।

तू मन से सम्पूर्ण प्राणियों के प्रति राग द्वेष का त्याग कर के और समभाव धारण कर के प्रेम पूर्वक भगवान् राम के चरणारविन्दों का भजन करता हुआ संसार में यथेष्ट आनन्द कर ।

निम्नं पयोवेग इवेन्द्रियाणि धावन्ति शीघ्रं विषयाऽभिमुख्यम् ।।
कश्चिद्बलीयान्पुरुषस्तु तानि व्यावर्त्य तैरेव परेशमेति ।। ७१ ।।

जैसे जल का वेग नीचे की ओर भागता है ऐसे ही इन्द्रियां विषयों की ओर भागती हैं । कोई विरला ही बलशाली पुरुष उन्हें उधर से हटा कर उन्ही के द्वारा परमात्मा को प्राप्त करता हैं ।

न वाञ्छनीयं हि धनं कदाचिद् विभाव्य सर्वेशमतिं जगत्याम् ।।
लोभादि दोषान्विलयं प्रणीय वयः स्वकीयं व्यतियापनीयम् ।। ७२ ।।

संसार में ईश्वर ही सत्य है यह जान कर धन की इच्छा न करनी चाहिये और लोभादि दोषों को नष्ट करके अपना यौवन बिताना चाहिए ।

प्रवर्तमानेन पदार्थवर्गे न लभ्भनीया पुरूषेण शान्तिः ।।
त्यागेन तेषामिह लभ्यते सा, माता सतीते कथयामि पथ्यम् ।। ७३ ।।

संसारी पदार्थों में प्रवृत्त हो रहे मनुष्य को शान्ति नही मिलती । उनके त्याग से ही शान्ति प्राप्त होती है मैं तेरी माता तेरे हित की बात कहती हूँ ।

उत्प्लुत्य वेगेन यथा निहन्ति क्रूराऽऽखुवर्गं सहसा बिडाली ।।
आशा नृशंसाऽपि तथाहिनस्ति प्रमादवन्तं तरसामनुष्यम् ।। ७४ ।।

जैसे निर्दय बिल्ली जोर से झपट कर एक दम चूहों को मार देती है इसी प्रकार निष्ठुर आशा भी प्रमादशील पुरुष को जलदी नष्ट कर देती हैं ।

कुर्वन्ति बाला बहु पापकर्म जानन्ति रौद्रं च फलं न तस्य ।।
कर्तव्यसम्मूढहृदाममीषा महो विचित्रं खलु बालिशात्वम् ।। ७५ ।।

अज्ञानी लोग पाप तो बहुत करते हैं पर उनके भयानक फल को नहीं जानते। क्या करना चाहिए इस विचार से हीन हृदय वाले इन अज्ञानियों का अज्ञान भी आश्चर्यजनक है।

विहङ्गमो विष्णुपदे विहारी व्याधान्नलेशानभिलष्य बन्धम् ॥
प्रयाति सद्यश्च जहात्यसून्यत्तदेव मूढा बहुधाऽनुयन्ति ॥ ७६ ॥

आकाशचारी पक्षी शिकारी के अन्न कणों की अभिलाषा करके बन्ध जाता है और मर जाता है—मूर्ख लोग भी प्राय: इसी का अनुकरण करते हैं।

एवं विधां लोकदशां विलोक्य क्षणं विरक्ता बहवो भवन्ति ॥
प्राय: पुनस्ते भवभाव कृष्टा: पुरेव संसार गता भवन्ति ॥ ७७ ॥

संसार की ऐसी दशा देखकर बहुत से लोग क्षणमात्र के लिए विरक्त हो जाते हैं और प्राय: वे फिर संसार भावों से आकृष्ट होकर पूर्ववत् संसार में ही फंस जाते हैं।

प्रस्वेद्य सम्मर्द्य निवेष्ट्य रज्ज्वा नाल्यां श्वपुच्छो विनिवेशितोऽभूत् ॥
चिराद्विमुक्त: पुनरेव दृष्ट: स वक्रतां पूर्वतनीं प्रपन्न: ॥ ७८ ॥

पसीना देकर, मालिश करके, रस्सी से बांधकर कुत्ते की पूंछ को नलकी में बन्द किया गया। बहुत दिनों के बाद खोलकर फिर देखा गया तो वह उसी पुराने टेढ़ेपन को प्राप्त थी।

गतास्तथेमे क्षणिकं विरागं निशम्य शास्त्रीय कथारहस्यम् ॥
ततो बिसृष्टाश्चलितास्तु गेहान् गच्छन्ति रागं विषयेषु मूढा: ॥ ७९ ॥

इसी प्रकार यह लोग शास्त्रीय कथाओं के रहस्य को सुनकर क्षणिक वैराग्य प्राप्त करते हैं पर कथा से छुट्टी पाकर जब घर को जाते हैं तो मूढ़ फिर विषयों में आसक्ति प्राप्त कर लेते हैं।

ये पण्डितम्मन्यतया विपाकं विलोकयन्तोऽपि न लोकयन्ति ॥
ते वायुवेगोद्धत वृक्षशाखा चलान्तरंगा नरके पतन्ति ॥ ८० ॥

जो लोग अपने आप को बड़ा ज्ञानी मानकर जीवन के इस परिणाम को देखते हुए भी नहीं देखते। वे तो आंधी से हिल रही बृक्ष शाखा के समान चञ्चलचित्त वाले नरक में ही पड़ते हैं।

ये सन्ति सत्यानृतभेदविज्ञा हंसा इव क्षीर जलांतरज्ञा: ॥
तेऽसत्प्रपंचंतु तथा त्यजन्ति पुनर्नगृह्णन्ति यथाऽस्य नाम ॥ ८१ ॥

दूध जल का भेद जानने वाले हंसों के समान जो सत्य और असत्य के भेद को जानते हैं वे तो असत्य प्रपंच को ऐसे छोड़ देते हैं कि फिर उसका नाम भी नहीं लेते।

जीवो जगत्यां बहुयोनिमध्ये भ्रमन्नरत्वं तु कदाचिदेति ॥
विवेचनैवास्य फलं निरुक्तं सत्यासतोः संगतयोः स्वभावात् ॥ ८२ ॥

जीव जगत् में बहुत सी योनियों के बीच में भटकता हुआ कभी नर जन्म पाता है। स्वभाव से मिले हुए सत् और असत् का विवेचन रखना नर जन्म का फल कहा गया है।

मनुष्यतांताममृतोपमां तु नास्वाद्य दैवेन समर्पितां वै ॥
केचिन्मनुष्याः पशुभिः समाना विनष्टभाग्या विषयैः क्षिपन्ति ॥ ८३ ॥

भाग्य से प्राप्त हुई उस अमृत जैसी मनुष्यता (इन्सानियत) को कई लोग पशुओं के समान होकर सवीकार नहीं करते वे भाग्य हीन इस मनुष्यता को विषयों में खो देते हैं।

हे वत्स भूयः कथयामितत्त्वं शृणुत्वमेकाग्रमना वचो मे ॥
व्यालायमाना विषया विषाक्ताः स्वस्पर्शमात्रेण नरं दहन्ति ॥ ८४ ॥

हे पुत्र मैं तुझे फिर तत्त्व की बात कहती हूं तू एकाग्रमन होकर मेरी बात को सुन। विषय ज़हरीले सर्पों के समान हैं जो छूने मात्र से मनुष्य को जला देते हैं।

मुञ्जादिषीकामिव संविचार्य सत्यं त्वमात्मानमतोऽवगच्छ ॥
मिथ्याप्रपञ्चंच तथा विमुञ्च लोकोत्तरां साधुगतिं प्रपन्नः ॥ ८५ ॥

विचार पूर्वक मूंज में से शलाका के समान तू इस जगत् में से आत्मा को प्राप्त कर। और उसी के समान मिथ्याप्रपञ्च को छोड़ दे क्योंकि तू अलौकिक महात्माओं की गति को प्राप्त हुआ है :

यतोविचारोऽद्यतवैषजातः शृणोषि भक्त्याचवचांसि मे त्वम् ॥
ततस्त्वदर्थं हृदि भावयेऽहमादर्शभूतः प्रभविष्यसीति ॥ ८६ ॥

क्योंकि आज तेरे मन में यह विचार उत्पन्न हुआ है और तू बड़ी श्रद्धा से मेरे वचन सुनता है इसलिये मैं तेरे लिये अपने हृदय में ध्यान करती हूं कि तू संसार में आदर्शभूत महात्मा होगा।

गुह्यातिगुह्यं हि रहस्यमेतद्विरक्तयोगीश्वरगीयमानम् ॥
सदापिवत्वं भुवि साररूपं श्रीरामनामामृतमेव भद्र ॥ ८७ ॥

और हे बच्चा, गुह्य से भी गुह्य विरक्त योगियों द्वारा गाया गया श्रीराम नाम रूप अमृत जो इस भूमि में एक मात्र सार है उसे तू सदा पी।

कोशान्तरस्थोऽपियथाऽसिरस्मात्कोशाद्विभिन्नो विदितो नराणाम् ॥
तथान्नकोशादिगणाद्विभिन्नः सत्यात्मरूपोऽसि सुपुत्र विद्धि ॥ ८८ ॥

म्यान के अन्दर रहती हुई भी तलवार जैसे लोगों को ज्ञात है कि म्यान से अलग है। इसी प्रकार अन्नादि पञ्च कोशमय शरीर में रहता हुआ भी तू सत्य आत्मरूप है उस से भिन्न है। हे सुपुत्र ऐसा जान।

न दृश्यते चेत्पृथगेवमात्मा भिन्नः शरीराज्जडभूतकार्यात् ॥
येनानुभाव्यो जडभूतदेह स्तस्यात्मनः को विदधातु लोपम् ॥ ८९ ॥

यदि इस प्रकार जड भूतों के कार्यरूप शरीर से भिन्न आत्मा नहीं जाना जाता तो जिसके द्वारा यह जडभूतमय देह अनुभव का विषय होता है उस आत्मा का कौन अपलाप कर सकता है।

गेहे वसेर्वाऽथवने व्रजेर्वा यत्रापि कुत्रापि कुरुष्व वासम् ॥
विस्मार्य वै संसृतिदृश्यमेतत्मनस्तु चिद्ब्रह्मणि वासयत्वम् ॥ ९० ॥

घर में रह या वन में जाओ जहां कहीं भी तू निवासकर बस सांसारिक दृश्य को भुला कर तू अपना मन उस चैतन्यरूप आत्मा में बसाले।

तापत्रयं ते निकटे कदापि नायास्यतीत्येव विनिश्चिनुष्व ॥
तस्मिन्निरस्ते परमां कलांत्वं सुखस्यनित्यस्य गमिष्यसीति ॥ ९१ ॥

आधिभौतिक आधिदैविक और आध्यात्मिक तीनों ताप तेरे पास कभी नहीं आयेंगे और उन तीनों तापों के दूर हो जाने पर तू नित्य सुख की परम कला को प्राप्त करेगा यह निश्चय कर।

कदापि सूर्यस्य समीपदेशं तमो न शक्नोति यथाऽभिगन्तुम् ॥
तथैव दुःखस्य गतिर्निरुद्धा ब्रह्मात्मतत्त्वावगमे नराणाम् ॥ ९२ ॥

जैसे सूर्य के पास कभी अन्धकार नहीं आ सकता है वैसे ही ब्रह्मात्मतत्त्व की प्राप्ति हो जाने पर मनुष्यों के पास दुःख की गति रुक जाती है।

मायावि-मायाकृतवस्तु दृष्ट्वा गच्छन्ति मुग्धाः प्रमुदं व्यथां च ॥
विलोकयन्तोऽपि विवेकिनस्तु न हर्षशोकौ परियन्ति लेशात् ॥ ९३ ॥

जादूगर के जादू से बनी वस्तु को देखकर भोले लोग सुखी भी होते हैं या दुखी भी। किन्तु विचारवान् तो देखते हुए भी न लेशमात्र हर्ष पाते हैं न शोक।

व्याप्यस्थितोऽयं परितो यथेह हिमालयं शैत्यगुणः प्रसिद्धः ॥
तथा विषादो विषयान्परीतः शब्दादिकांस्तिष्ठति पुत्र नित्यम् ॥ ९४ ॥

हे पुत्र, जैसे सर्दी हिमालय को चारों ओर से व्याप्त करके स्थित प्रसिद्ध है। वैसे ही शब्दादि विषयों को सब ओर से विषाद घेरे रहता है।

समोहया खेदफलं प्रयाति संबन्धमेतः पुरुषः कदाचित् ॥
ईहा महाखेदमयीति हेतो विद्वज्जनास्तांनसमाश्रयन्ति ॥ ९५ ॥

आशा के साथ सम्बन्ध पा कर पुरुष दुःखरूप फल को प्राप्त करता है आशा महादुःखमयी है इसी लिये विद्वान् उसका आश्रय नहीं लेते।

फलै रसाढ्यैर्विविधैः प्रसूनैः शोभायमाने तरुवल्लिषण्डे ॥
परिभ्रमन् कोकिलबालकोऽपि रसालमेवाश्रयते रसालम् ॥ ९६ ॥

अनेक रसभरे फलों और फूलों से शोभायमान उपवन में घूमता हुआ कोयल का बच्चा भी रसमय रसाल (आम) पर ही जाता है।

भ्राम्यन् द्विरेफः कमलाकरेषु बहूनि पश्यन् कमलानि तत्र ॥
सन्तोषयन् स्वान्तमसौ नितान्तं सुगन्धमेवेह समाददाति ॥ ९७ ॥

सरोवरों में घूमता हुआ, अनेक कमलों को देखता हुआ, और अपने हृदय को प्रसन्न करता हुआ उनमें से सुगन्ध ही लेता है।

तथा नरेणापि जगच्चरेण नानादशाश्चित्रतमा गतेन ॥
स्वात्मावबोधाय महानुभावो ग्राह्यो गुरुर्योग्यतमो विचार्य ॥ ९८ ॥

इसी प्रकार संसार में घूमते हुए, विचित्र २ दशाओं को प्राप्त करते हुए मनुष्य को स्वात्मज्ञान के लिये अत्यन्त सुयोग्य, महा प्रभावशाली गुरु खोज कर प्राप्त करना चाहिये।

एतावदेवास्ति ममेह वाच्यं त्वयापि तच्चेतसि धारणीयम् ॥
शान्तिं परामेष्यसि नूनमेवमेतावदुक्त्वा विरराम माता ॥ ९९ ॥

बस मैंने इतना ही कहना है, तू इसे अपने चित्त में रखना, इस से तू अवश्य ही परम शान्ति प्राप्त करेगा इतना कहकर माता मौन हो गई।

स्वपुण्यानां पुञ्जैर्विमलफलदानाय चपलै-
स्तमादेशं श्रुत्वा सुमति जननी चारु बचसा।
गतस्तूष्णींभावं हृदि गुणनिकामेष विदधद्
विविक्ते मन्वानः परम-परमानन्दमगमत् ॥ १०० ॥

निर्मल फल देने के लिए सत्वर पुण्यों से बुद्धिमती माता के मधुर वचनों द्वारा उस उपदेश को सुनकर वह बालक मौन ही रहा, मानों कि हृदय में उसी उपदेश का पुनः पुनः अभ्यास कर रहा हो और एकान्त में उस उपदेश का मनन करता हुआ वह परम से परम आनंद को प्राप्त हुआ।

इति जनन्यनुशासनं नाम तृतीयः सर्गः।

# अथ गुरु समाश्रयणं नाम चतुर्थः सर्गः ।

तमीश्वर वाङ्मनसेऽधिगन्तुं न शक्नुतश्चेन्नहि शक्नुतां ते ।।
परं पवित्री भवतो नितान्तमित्यर्चयामीश्वरमेष ताभ्याम् ।। १ ।।

वाणी और मन उस ईश्वर को प्राप्त नहीं कर सकते तो न कर सकें। परन्तु अत्यन्त पवित्र तो हो जाते हैं अतः मैं उस वाणी और मन से उस प्रभु की अर्चना करता हूँ।

यत्सेवया साधन-सिद्धि-लाभ द्वारेण नारायणता नरस्य ।।
निष्पद्यतेऽवद्य निवृत्तये तं श्रीमद्गुरुं सर्वतया प्रपद्ये ।। २ ।।

जिस गुरु की सेवा से नर को साधन और सिद्धि के साथ २ नारायण-भाव प्राप्त हो जाता है—सम्पूर्ण दोषों की निवृत्ति के लिये उन श्री गुरुदेव की शरण में हूँ।

चिरं विचार्याथ वचस्तदेव मातुर्गतस्तोष कलां परां सः ।।
प्रणम्य तस्यै वचनं जगाद जिज्ञासयाऽर्थस्य मनः स्थितस्य ।। ३ ।।

इसके बाद चिरकाल तक माता के उक्त वचनों का विचार करके वह परम सन्तोष को प्राप्त हुआ। और मनःस्थ अर्थ को जानने की इच्छा से माता को प्रणाम करके बोला।

धन्याग्रगण्यासि सदैव मातर्हितं त्वया मे परिदर्शितं यत् ।।
अहो महापुण्यतरोः फलं मे त्वदीयगर्भाज्जननं विभाति ।। ४ ।।

हे माता, तू सदा ही भाग्यशालिनी देवियों में शिरोमणि है जोकि इस प्रकार मुझे हित का मार्ग दिखाया। मुझे यह अपने किसी महान् पुण्यरूपी वृक्ष का फल प्रतीत होता है जो कि मैंने तेरे गर्भ से जन्म प्राप्त किया है।

पृच्छाम्यभीष्टं पुनरेकमेव प्रतीयते यद्भृशमात्मनीनम् ।।
मातः कृतार्थं कुरु मां प्रपन्नं विनिश्चितं तत्त्वमुदीरयन्ती ।। ५ ।।

हे माता, एक ही बात मुझे अपना हित करने वाली प्रतीत होती है वही अभीष्ट मैं पूछता हूं निश्चित तत्त्व को कहती हुई तू शरण में आये हुए मुझ को कृतार्थ कर।

रागं विहायास्य भवस्य सद्यो यथार्थबुद्धेरुपलम्भनाय ॥
योग्यो गुरुर्वेदविदां वरिष्ठो ग्राह्यो मयेत्यम्ब किलादिशस्त्वम् ॥ ६ ॥

हे माँ, तूने मुझे आज्ञा दी है कि इस संसार का राग छोड़कर यथार्थ ज्ञान की प्राप्ति के लिये मुझे वेद-वेत्ताओं में श्रेष्ठ योग्य गुरु धारण करना चाहिये।

सोऽहं गुरुं कं परियामि मातस्त्वमेव तं साधु निबोधयेर्माम् ॥
प्रपद्य यं कारुणिकं, विदेयं सत्यं सुखं ज्ञानमयं सुखेन ॥ ७ ॥

सो मैं किस गुरु की शरण में जाऊँ, यह बात भी तू ही मुझे अच्छी तरह समझा। जिस गुरु की शरण में जाकर मैं सरलता से सत्य, ज्ञानमय, आनन्द को जान सकूँ।

इत्यर्थिता सा करुणापरीता प्रत्यब्रवीद्भूरितरप्रसादा ॥
लोकोत्तरामात्मनि धारयन्ती धृतिं, सुतं चापि समुद्धरन्ती ॥ ८ ॥

इस प्रकार प्रार्थित हुई माता दयामयी, प्रसन्नतामयी होकर और अलौकिक धैर्य को मनमें धरती हुई तथा पुत्र का उद्धार करती हुई बोली।

हे वत्स, जानासि, विविक्त देशे तार्णं कुटीरं रमणीयमस्ति ॥
इतो मनाग् दूर गते वनेऽस्मिन्, यस्मिंस्तपस्वी वसति श्रुतिज्ञः ॥ ९ ॥

हे पुत्र, तू तो जानता ही है कि यहां से कुछ दूर इसी वन में एक स्थान में एक अति सुन्दर तृणमयी कुटिया है—जिसमें एक विद्वान् तपस्वी रहते हैं।

स सद्गुरु श्रीरघुनाथदास परम्परोत्थो मुनि पूर्णदासः ॥
सिद्ध स्तपस्वी जटिलो यशस्वी कौपीन मात्रैक परिच्छदोऽस्ति ॥ १० ॥

वे हैं सद्गुरु श्री रघुनाथ दास जी महाराज की शिष्य परम्परा में से महामुनि पूर्णदास जी महाराज। वे सिद्ध तपस्वी हैं, जटाधारी और केवल मात्र कौपीन-धारी हैं, उसका यश चारों ओर विख्यात है।

त्वं तस्य पादाब्जयुगं श्रयस्व शिष्योचितां दर्शय सम्प्रपत्तिम् ॥
त्वामाप्तकामः करुणा परोऽसौ ध्रुवं विधाता परिपूर्णकामम् ॥ ११ ॥

तुम उन्हीं के चरणकमलों का आश्रय लो और शिष्योचित शरणागत भाव प्रकट करो। वह महात्मा आप्तकाम हैं परमदयालु हैं वे तुझे अवश्य ही परिपूर्ण काम बना देंगे।

इत्थं वचो मातृ मुखारविन्दान्मरन्द माधुर्यमयं निपीय ॥
नयन्निवासावुचितां तु तृप्तिं पुनर्बभाषे विशदं विवित्सुः ॥ १२ ॥

इस प्रकार माता के मुखारबिन्द से मकरन्द की मधुरता से पूर्ण वचनों को पीकर पर्याप्त तृप्ति न प्राप्त करता हुआ वह बालक विशेष जिज्ञासा से फिर बोला।

मातर्गुरुत्वाय निबोधितो यो महानुभावः कृपया भवत्या ।।
विशेषणं सिद्ध इतीदमीयं विशेषतोऽहं प्रतिबोद्धुमीहे ।। १२ ।।

हे माँ, तूने कृपा करके गुरु बनाने के लिये जिस महानुभाव का निर्देश किया है। उसके "सिद्ध" विशेषण के सम्बन्ध में मैं विशेष रूप से जानना चाहता हूं।

माता तु सिद्धार्थबुभुत्सुमेनं सिद्धार्थ कल्पं हृदि कल्पयन्ती ।।
प्रसीदमाना नितरां निमित्तान्युवाच सिद्धव्यपदेश्यतायाः ।। १३ ।।

"सिद्ध" का अर्थ जानने की इच्छा वाले इसको सिद्धार्थ सा मानती हुई और अत्यन्त प्रसन्न हुई माता ने "सिद्ध" पद के व्यवहार के कारण बताये।

ये पुत्र, सर्वस्व समर्पणेन समीहमाना जगतां हितानि ।।
परोपकारैकधना हि सन्तो दिशासुसर्वासु मुदा चरन्ति ।। १४ ।।

हे पुत्र जो अपना सर्वस्व देकर भी जगत् का हित चाहने वाले परोपकार-मात्र धन के धनी महात्मा आनन्द से सब दिशाओं में भ्रमण करते हैं।

मित्रं न शत्रुः किलकोऽपि तेषां परो न चात्मीय जनोऽपि कश्चित् ।।
पश्यन्ति ये सर्व-समत्वमन्तः सन्तः परब्रह्म विवेकवन्तः ।। १५ ।।

जिनका न कोई मित्र होता है न शत्रु। न पराया होता है न अपना। और जो सब में अन्तर्दृष्टि से समभाव को देखते हैं, क्योंकि उन सत्पुरुषों को परब्रह्म का विवेक होता है।

कश्चिद्विमूढः प्रददातु दुःखं संसेवतां कोऽपि नरोऽथवा तान् ।।
उभौ यथेष्टं चरतां स्वभावात्, समत्वबुद्धिर्न परैति येषाम् ।। १६ ।।

कोई मूढ़ पुरुष उनको दुःख दे या कोई पुरुष उनकी सेवा करे, दोनों अपने २ स्वभाव के अनुसार यथेष्ट व्यवहार करें, पर उनकी समभाव की भावना दूर नहीं होती।

ददातु वा किंचन वाऽऽददातु तान्स्तौतु वा निन्दन्तु वाऽत्र कोऽपि ।।
तुष्यन्ति शोचन्ति न किन्तु सन्तश्चिदात्म साम्याभिनिविष्ट चित्ताः ।। १७ ।।

कोई उन्हें कुछ दे या उन से ले, कोई उनकी स्तुति करे या निन्दा करे। लेकिन चैतन्यरूप आत्मा के एक भाव से व्याप्त हृदय वाले सन्त न प्रसन्न होते हैं न शोकाकुल।

आक्रान्त देहा विपदा कथाचित् खेदं न गच्छन्ति तितिक्षवस्ते ॥
परस्य तापे तु नितान्तमल्पे सन्तप्यतेऽन्तः करणंकिलैषाम् ॥ १८ ॥

किसी विपत्ति से घिरे हुये शरीर वाले भी वह सहनशील महात्मा दुखी नहीं होते, और दूसरे के तो थोड़े से ताप पर इनका मन अत्यन्त संतप्त हो जाता है।

येनाप्युपायेन नरस्य तापः समूलनाशं त्वरया विनश्येत् ॥
तमेव संश्रित्य सदा यतन्ते संयुज्यतां येन शमेन लोकः ॥ १९ ॥

जिस भी उपाय से मनुष्यका त्रिविध (आधिभौतिक, आधिदैविक, आध्यात्मिक) ताप मूल से नष्ट हो जाए। उसी उपाय का आश्रय करके वे ताप मिटाने का प्रयत्न करते हैं जिस से लोक शान्ति प्राप्त कर सके।

पुष्पाणिलोकेऽञ्जलि संगतानि करद्वयं तुल्यतया भजन्ति ॥
सुगन्धिदानेन यथा तथैव सन्तोऽपि दुर्हृत्सुहृदोः समानाः ॥ २० ॥

अञ्जलि में लिये हुए फूल जैसे दोनों हाथों को समानरूप से सुगन्धि देते हैं वैसे ही महात्मा शत्रु मित्र दोनों में समान होते हैं।

जलाभिषेकैश्च कुठारघातैः संसेवमानौ पुरुषौ लभेते ॥
सौरभ्यशीलान्मलयोद्भवात्किं पृथक् पृथग्गन्धमुतैकगन्धम् ॥ २१ ॥

जल-सिञ्चन से या कुल्हाड़ों के प्रहार से सुगन्धित चन्दन की सेवा करने वाले पुरुष उस से अलग प्रकार की गन्ध प्राप्त करते हैं या एक प्रकार की।

स्वाभाविकीं वृत्तिमिहाददाना मित्रस्य शत्रोश्च विहाय भेदम् ॥
स्वयं हि सर्वान् भुवि मानवांस्ते श्रेयस्करे साधुपथे नयन्ति ॥ २२ ॥

वे महात्मा मित्र और शत्रु का भेद छोड़ कर स्वाभाविक व्यवहार रखते हुए विना किसी प्रेरणा के स्वयमेव सब मनुष्यों को कल्याणकारी सन्मार्ग पर ले जाते हैं।

मेघो यथा शीतजलाभिवर्षी दिगन्तरालेषु समानभावात् ॥
सूर्याभितप्तां धरणीं समन्तात्परं शमं प्रापयति स्ववृष्ट्या ॥ २३ ॥

ठण्डा जल जल बरसाने वाले बादल जैसे सूर्य से सन्तप्त पृथ्वी को चारों ओर सभी दिशाओं में समानरूप से अपनी वर्षा द्वारा शान्ति प्राप्त कराता है।

"गच्छामि कस्यां दिशि" चिन्तनेयं कदाऽपि तस्यात्मनि नैव जाता ॥
"जलं मदीयं सफलं किमु स्याद्वृष्टं धरायामुत वाऽफलं स्यात् ॥" २४ ॥

"मैं किस दिशा में जाऊं" यह चिन्ता उसके मन में कभी नहीं, होती "मेरा पृथ्वी पर बरसाया हुआ जल सफल होगा या निष्फल"।

श्रुत्वा मयूरः किल गर्जनां मे श्लाघामिव द्योतयतीह नृत्यन् ॥
सिंहस्तथा मां प्रतिगर्जनेन द्वेष्टीव चेत्यादि स नावधत्ते ॥ २५ ॥

"मोर मेरी गर्जना को सुन कर नाचता हुआ मेरी प्रशंसा प्रगट करता है और सिंह मेरे साथ प्रतिगर्जन द्वारा द्वेष करता है" इत्यादि वह ध्यान नहीं करता।

स्वकं स्वभावं समुपश्रितोऽसौ मेघः स्वकर्तव्य परायणः सन् ॥
सर्वेषु देशेषु समानभावाच्छीतं जलं वर्षति काल-काले ॥२६॥

यह मेघ अपने स्वभाव का आश्रय लेकर अपने कर्तव्य में तत्पर हुआ समय २ पर सभी देशों में समानरूप से ठण्डा जल बरसाता हैं।

विचित्र रूपान्खलु लोकभावा न्सन्तस्तथा नैव विचारयन्ति ॥
शुद्धोपदेशामृतवर्षणस्य व्रतं तु नित्यं परिपालयन्ति ॥२७॥

इसी प्रकार संसार के विचित्र भावों का महात्मा लोग विचार नही करते और शुद्ध उपदेशामृत बरसाने के व्रत को नित्य पालन करते हैं।

पुण्यात्मनो वा विकृतात्मनो वा तरंगभंगैः परिमार्जयन्ती ॥
गङ्गा यथा संगमितस्य जन्तोर्मनः शरीरे विमलीकरोति ॥२८॥

जैसे गंगा अपने संग लगने वाले पुण्यात्मा या पापात्मा या के मन और शरीर को तरङ्ग भङ्गों से शुद्ध करके निर्मल कर देती है।

तथा निरस्यार्जित पापपुंजं स्वदर्शनेनाघनिबर्हणेन ॥
सन्तः पुनंत्यागत मानबानां मनांसि वाक्यामृतसिंचनेन ॥२९॥

ऐसे ही सन्त पापों के नाशक अपने दर्शन से, उपार्जित पापसमूहों को दूर करके शरण में आये हुए मनुष्यों के हृदयों को बचनामृत से सींच कर पवित्र करते हैं।

सन्तस्तपः पूतवपुर्लसन्तस्तीर्थायमानाः परितश्चरन्तः ॥
नृणां महाऽज्ञानमलं हरन्तः सत्यामृतैस्तान्भुवि जीवयन्ति ॥३०॥

तपस्या से पवित्र शरीर करके शोभायमान सन्त, चारों तरफ चलते फिरते तीर्थ बनकर सत्यवचनरूपी अमृत से मनुष्यों के अज्ञानरूप मल को दूर करते हुए उन्हें वास्तविक जीवन देते हैं।

सन्तो नृबुद्धि प्रविकासयन्ति, सन्तो जगन्त्यार्यपथं नयन्ति ।
चराचरं सर्वमिदं स्वकीयव्रतेन सन्तः किल धारयन्ति ॥३१॥

सन्त मनुष्यों की बुद्धि को विकसित करते हैं। सन्त संसार को पवित्र मार्ग पर ले जाते हैं। सन्त अपने व्रत के द्वारा सम्पूर्ण चराचर विश्वको धारण करते हैं।

महात्मनां दर्शनमागतानां धर्मस्य वृद्धि र्नियता जनानाम् ॥
सूर्योदये दृष्टि विकासकस्य न तेजसः किं प्रथिता समृद्धिः ॥३२॥

महात्माओं के दर्शन हो जाने पर मनुष्यों में धर्म की वृद्धि निश्चित है, जैसे सूर्योदय हो जाने पर दृष्टि विकासक तेज की समृद्धि प्रसिद्ध हैं।

नीचा दुराचाररता जगत्यां येकेऽपि सन्तीह नरा विमूढाः ॥
तेऽपि प्रपाद्याङ्घ्रियुगं प्रबोधं परं लभन्ते महतामभीषाम् ॥३३॥

संसार में जो कोई विमूढ, नीच दुराचारी पुरुष हैं वे भी इन महात्माओं के चरणयुगल की शरण में जाकर परम प्रबोध प्राप्त कर लेते हैं।

जीवान् समुज्जीवयितुं यथाऽयं प्राणात्मकः संचरतीह वायुः ॥
चराचरस्याभ्युदयाय तद्वत्प्राणायमाना विचरन्ति सन्तः ॥३४॥

जिस प्रकार इस लोक में यह प्राणरूप वायु जीवों को जीवित करता हुआ संचरण करता है ऐसे ही सन्त जड़ जङ्गम जगत् के कल्याण के लिये प्राण से बनकर विचरण करते हैं।

सतां महत्त्वं मनुजेन वाचा वक्तुं न शक्यंतु कथंचनापि ॥
दिङ् मात्रमेवात्र सुपुत्र तुभ्यं प्रसङ्गयोगात्कथितं मयैतत् ॥३५॥

हे सुपुत्र, सन्तों की महिमा मनुष्य द्वारा वाणी से कभी भी वर्णन नहीं की जा सकती यह तो एक संकेतमात्र मैंने प्रसङ्ग वश तुझे बताया है।

कदाचन श्रीरघुनाथदासः परोपकारैकपरो महात्मा ॥
दिगन्तरेष्वेवमटन् यथेष्टं समाजगामात्र थलप्रदेशे ॥३६॥

ऐसे ही कभी श्री रघुनाथदास जी महाराज परोपकारी महात्मा दिशाओं में भ्रमण करते हुए थल में अकस्मात् आये।

सरोवरस्यात्र तटे विशुद्धे फुल्लद्वने कूजदनेक हंसे ॥
चकार वासं बदरीतरोः स च्छायां समाश्रित्य घनां सुशीताम् ॥३७॥

उन्होंने सरोवर के पवित्र, खिले हुए वन वाले, बोल रहे अनेक हंसों वाले इस तट पर बेर की घनी और ठण्डी छाया में निवास किया।

तत्रस्थितोऽसौ बहुधा समाधौ साक्षात्करोति स्म तदेव तत्त्वम् ॥
यद्वैदिका ओमिति कीर्तयन्ति यत्गोपिकाः कृष्ण इति स्मरन्ति ॥३८॥

वहां बैठकर वह अनेक बार सामाधि में उसी तत्व का साक्षात्कार करता था जिसे वैदिक 'ओम्' नाम से कहते हैं और गोपियां 'कृष्ण' रुप से याद करती हैं।

कदाचिदानन्द निमग्नतायां स्वरेण माधुर्य परिप्लुतेन ।।
प्रसादकारीणि सदिन्द्रियाणां गीतानि वेदस्य स गायति स्म ।।३९।।

कभी आनन्द मग्न होने की अवस्था में वह माधुर्य भरे स्वर से पवित्र इन्द्रियों को आनन्द देने वाले वेद के गीत गाया करता था।

एवं विविक्ते विपिने स आत्माऽऽनन्दं किल प्राप धृत प्रतापः ।।
स्थानानुकूल्यादनिकेतनोऽपि कियच्चिरं तत्र चकार वासम् ।।४०।।

इस प्रकार वह प्रतापी महात्मा एकान्त वन में आत्मदर्शन का आनन्द प्राप्त करता था—यद्यपि वह अनिकेतन था—तथापि स्थान की अनुकूलता के कारण कुछ समय उसने वहां निवास किया।

अयं हि देशो यवनप्रधान स्तताऽधिकारोऽपि तदीय आसीत् ।।
तथाविधं तं च विलोक्य सन्तंकेचिद् द्विषन्ति स्म विचारशून्याः ।।४१।।

क्यों कि यह देश यवन प्रधान है अतः इस स्थान पर अधिकार भी यवनों का था। अतः कुछ विचार-शून्य यवन उस रूप में इस सन्त को देख कर द्वेष करते थे।

परस्परं ते ऽकथयन्विमूढाः को नास्तिकोऽयं कुत आगतो वा ।।
बलेन केनेह करोति वासं नो भूमि भागे ऽतिविचित्र मेतत् ।।४२।।

वे विचार हीन लोग आपस में कहने लगे यह काफ़िर कौन है? यह कहां से आया है? किस बल पर यह यहां हमारी भूमि में निवास कर रहा है? यह बड़ी अद्भुत बात है।

विचिन्त्य ते किञ्चिदितीव चित्ते, गताः खलास्तस्य समीपदेशम् ।।
तमभ्यपृच्छन्नयि दम्भमूर्ते, कस्त्वं कुतस्तिष्ठसि चात्र देशे ।।४३।।

वे दुष्ट इसी तरह कई बातें सोचकर उस महात्मा के पास गये और उससे पूछने लगे अरे पाखण्डी, तू कौन है? और यहां किस की आज्ञा से रहता है?

जानासि नायं किमु कस्य देशः स्वामीव निर्भीकमनाः किमास्से ।।
क्षिप्रं त्वमुत्थाय परैहि दूरं नो चेत्फलं प्राप्स्यसि नूनमुग्रम् ।।४४।।

क्या तू नहीं जानता है कि यह देश किस का है? जो कि मालिक सा निडर हुआ यहां रहता है—तू यहां से जल्दी से उठ कर दूर चला जा नहीं तो बहुत बुरा फल पाएगा।

विलम्बनीयं न मनागपीह त्वयाऽन्यथा नाशमुपैष्यसि त्वम् ॥
त्वां पश्यतां कोपमयोऽनलोऽयं प्रचण्डतामेति भृशं क्षणेन ॥४५॥

यहाँ तुझे जरा भी देर न करनी चाहिये, नहीं तो तू मारा जायगा। तुझे देखते हुए यह क्रोधाग्नि क्षण २ में अत्यन्त प्रचण्ड होती जा रही है।

यावन्न भस्मत्वमुपैति तेऽयं कायो महाकोपमये ऽ नले ऽ स्मिन् ॥
वध प्रचण्डान्न विभेषि दण्डात् ? देशान्तरं तावदपेहि दूरम् ॥४५॥

क्या तू प्राण लेने में प्रचण्ड इस दण्ड से नहीं डरता ? जब तक तेरा शरीर हमारे क्रोधाग्नि में भस्म नहीं होता—तब तक तू दूर भाग जा।

निशम्य तेषां वचना न्यमूनि स सन्बभाषे स्मयमान वक्त्रः ॥
यःकोऽप्यहं वः पुरतोऽस्मि भद्राः, पृच्छन्ति कोऽसीति कथं भवन्तः ॥४६॥

उन के इन वचनों को सुन कर मुस्कराता हुआ वह महात्मा बोला। मैं जो भी हूँ तुम्हारे सामने हूँ आप लोग क्यों पूछते हैं कि तू कौन है ?

समागता अत्र यतोभवन्तस्तस्मादुपेतोऽहमपीह देशात् ॥
अस्त्येव भद्राः पदमेकमेते यतः समायान्ति च यान्ति यत्र ॥४७॥

आप लोग जहाँ से यहाँ आये हैं मैं भी वहीं से यहाँ आया हूं। अऐभद्रपुरुषों वह एक ही तो स्थान है जहाँ से सब जीव आते हैं और जहाँ सब जीव जाते हैं।

भवस्य यो भूतमयस्य भर्ता सुरासुर प्रार्थितनैक कामः ॥
तिष्ठामि तस्यैव किल प्रदेशे कष्टायते हन्त कथंमनो वः ॥४८॥

इस पंच भूतमय संसार का जो कर्ता भगवान् है जो सब की कामना पूर्ण करता है मैं भी उसी की भूमि में बैठा हूँ आप का मन क्यों दुःखी होता है।

यावन्न नाशं खलु नः करेण प्राप्नोषि तावद्गमने यतस्व ॥
वचो यदेतत् कथितं भवद्भिः तत्सर्वथाऽयुक्तरं विभाति ॥४९॥

आप जो कहते हो कि जब तक तेरा नाश नहीं करते तब तक यहां से चला जा आप की यह बात तो बहुत अनुचित प्रतीत होती है।

उत्पादनाशा वखिलस्य जन्तो र्यस्मादधीनो परमेश्वरस्य ॥
कार्यं कथं तस्य जगन्नियन्तु र्वाञ्छन्ति कर्तुं विमुखा भवन्तः ॥५०॥

सभी जीवों का जन्म व नाश तो परमात्मा के आधीन है आप सब मूढ़ नास्तिक उसके काम में क्यों हस्तक्षेप करते हैं।

कोपात्मको वैज्वलनोऽतिचंडो देदीप्यते वोहृदयेषु योऽद्य ।।
तत्कारणं भो खलु नाहमस्मि स्वभावसिद्धोभवतां किलायंम् ।।५१।।

जो आप लोगों के हृदय में क्रोध रूप अग्नि धड़क रहा है उसका कारण मैं नहीं हूं वह तो आप में स्वभाव से ही है ।

यस्याज्ञयैवेह समागतोऽस्मि ध्रुवंगमिष्यामि तदाज्ञयैव ।।
तथा भवन्तोऽपि यथाभिलाषं कुर्वन्तु कार्यं समयानुसारम् ।।५२।।

जिस की आज्ञा से मैं आया हूं उसी की आज्ञा से यहां से जाऊँगा आप अपनी इच्छा से जो चाहते हो सो काम करो ।

वन्यं सरस्तीर मिमं सुशीत माश्रित्य तिष्ठामि जपन् परेशम् ।।
फलानि वन्यानि विनाऽन्यखेदं गृह्णामि हानं भवतां किमत्र ।।५३।।

वन में तालाब के तट पर बैठ कर ईश्वर का भजन करता हूँ वन के फल लेता हूँ इस में आप की क्या हानि है

वन्या लता वा तरवोऽत्र सृष्टा विश्वंभरेणैव परात्मनैते ।।
सरोऽपि तेनैव जलेन पूर्णं जाता व्यथेयं भवतां कथं नु ।। ५४ ।।

वन के पेड़ वा बेलें तो परमात्मा ने पैदा की हैं यह पानी भी तालाब में उसी ने भरा है आप को पीड़ा क्यों होती है ।

गंगाजलं क्वापि गतं कुनाल्यां हेयं जनानां भवतीह लोके ।।
स्वभावतः पावनवस्त्व पीह कुसंगतिस्तत् मलिनी करोति ।। ५५ ।।

जैसे गंगाजल गंदी नाली में पड़ जाने से त्याज्य होता है अर्थात् स्वभाव से पवित्र वस्तु भी कुसंग से दूषित हो जाती है ।

गवां विशुद्धं च पयो यथा वा मद्यस्य पात्रे निहितं कदाचित् ।।
हेयं सतां तन्नितरामशुद्धं भवेत् कुयोगाद्विदितं जगत्याम् ।। ५६ ।।

जैसे गौ का पवित्र दूध शराब के पात्र में डालने से दूषित हो जाता है वैसे ग्राह्य नहीं रहता यह सब जानते हैं ।

वचः प्रयोगोऽपि महात्मनोऽस्य कल्याणकारी सरहस्य गर्भः ।।
मालिन्य दोषात् हृदयस्य तेषां बभूव रोषाभि निवेश हेतुः ।। ५७ ।।

इसी प्रकार पूज्य महात्मा जी के पवित्र वाक्य भी उनके हृदय दोष के कारण से महान् क्रोध का कारण बन गए ।

दीप्तो दवाग्निर्मरुतोहि योगं यातो यथा दीप्ततमो विभाति ।।
पुरापि कोपाख्य कृशानुरेषां दीप्तो गिरा तस्य तथा विदीप्तः ।। ५८ ।।

जैसे बन का अग्नि पवन के योग से अधिक प्रचण्ड हो जाता है वैसे ही इन का कोप रूपी अग्नि महापुरुष की शुभ वाणी से अधिक तीव्र हो गया।

नेत्रै स्ततः क्रूरतरैर्विमूढा विस्फारितैस्तं तु विलोकयन्तः ।।
कार्कश्य भावावृत वाक्यबाणै र्विद्ध्यन्त एते जगदु र्वरिष्ठम् ।। ५९ ।।

आखों को फाड़ २ कर देखते हुए वे यवन बहुत कठोर वाणी से उन श्रेष्ठ महात्मा जी से कहने लगे।

प्राणाः प्रियास्ते यदि सन्ति शीघ्रं पलायतां भूमिमिमां विहाय ।।
नो चेदिदानीं स्व कुठारधारा पातैर्विकुर्मो भवतः शरीरम् ।। ६० ।।

हे साधो यदि आप को प्राण प्यारे हैं तो जल्दी से भाग जाओ नहीं तो हम कुठार से आप के टुकड़े २ कर देंगे।

मोहावृतानामविवेकिनां वा कामादिदोषोपहतात्मनां वा ।।
मौर्ख्याश्रियाणां च निरक्षराणां किमस्त्यकार्यं परिवर्जनीयम् ।। ६१ ।।

मोह के अंधेरे में पड़े हुए काम आदि दोषों से पूर्ण निरक्षर मूर्ख लोगों का संसार में क्या अकार्य है अर्थात् कुछ नहीं।

तपः प्रधानाय महात्मनेऽस्मै सत्यात्मबुद्धया परि भासिताय ।।
अवाच्यवाचः कथिता यतस्तैः परोपकारादि गुणालयाय ।। ६२ ।।

तपस्या में लीन सत्य बुद्धि से प्रकाशमान परोपकारी गुणी महापुरुष के प्रति उन दुष्टों ने ऐसे कटु शब्द कहे।

श्रुत्वापि तेषां कटुका गिरस्ता क्षोभं ययौ नैव यतो महात्मा ।।
क्षमासुवर्माभिगते शरीरे सतां कुवाक्येषुगतिः कथं स्यात् ।। ६३ ।।

उन मूर्खों की कठोर बातें सुन कर भी पूज्य महात्मा जी के मन में क्षोभ नहीं हुआ क्योंकि क्षमाशील सन्तों के मन में क्षोभ होता ही नहीं।

पयः कणाघातमिमे सहन्ते स्वस्थाः घने वर्षति सानुमन्तः ।।
सन्तस्तु मोहोपगतस्य जन्तोः कठोर वाणी कुलिशं सहन्ते ।। ६४ ।।

जैसे पहाड़ बरसात में बूंदों के प्रहार को सुख से सह लेते हैं वैसे महात्मा भी अज्ञानी जनों की कटु वाणी को सहते हैं।

ततः सुधातुल्य गिरा ब्रवीत्तान् हसन् महात्मा सुतरां दयालुः ॥
मायामयीं तत्र कृतिंचिकीर्षन् मायावृतेभ्यः पुरतःस्थितेभ्यः ॥ ६५ ॥

इस के बाद उन लोगों के सामने कुछ माया का दृश्य दिखाने के लिये महात्मा जी ने हसते हुए मधुर वाणी से कहा ।

वासं विधायात्र कियच्चिरेण स्वयं गमिष्यामि ततऽन्य देशम् ॥
तावद्विधेया किल वोऽपि शान्तिः कोपो मनः खेदकरश्च हेयः ॥ ६६ ॥

मैं कुछ समय यहां रह कर अपने आप चला जाऊंगा आप लोग तब तक शांति करें और मन को दुखाने वाले कोप का त्याग करें ।

ततोऽतिरुष्टा यवनास्तमूचुः पुनः पुनः किं वदसीदमित्थम् ॥
स्थातुं न शक्यं भवता क्षणेन गन्तव्य मेव त्वरया त्वयेतः ॥ ६७ ॥

तब अति क्रोधी यवनों ने कहा कि फिर २ क्या बातें करते हो जल्दी चले जाओ एक क्षण भी तुम यहां नहीं रह सकते ।

तवाकृतिं वीक्ष्य मनांसि नोऽद्य दग्धानि कोपानलमध्यगानि ॥
पूर्वं यथा त्वं तु विभासि तुष्टः सिंहासनस्थोऽसि नृपो यथा नः ॥ ६८ ॥

आप की शकल देख 2 कर हमारे मन कोप की आग में जल रहे हैं और तुम तो ऐसे प्रसन्न हो जैसे कोई हमारा महाराजा हो ।

विलोकिता नून मिहैव पूर्वं समागता योगिजना अनेके ॥
हठी यथा त्वं न तथेहगन्यः श्रुतो न दृष्टो भुवने कदाचित् ॥ ६९ ॥

यहां आए हुए बहुत से साधुओं को हमने पहिले भी देखा है परन्तु आप जैसा हठी आज तक हम ने नहीं देखा न सुना है ।

तच्छ्रूयतां श्रोत्रयुगं विकास्य पुनर्वचस्तुभ्यमुदीरितं नः ॥
विधीयतां नोवचनानुसारं श्रेयः परं तेन भविष्यतीति ॥ ७० ॥

दोनों कान खोल कर सुनो जो हम दुबारा कहते हैं और वैसे ही करो इस समय तुम्हारा इसी तरह से भला होगा ।

क्षिप्रं समुत्थाप्य मृगासनं त्वं स्वयं समुत्थाय प्रयाहि दूरम् ॥
नो चेत्वदीयान्यधुना तवाग्रे मालादिकान्यग्निगतानि कुर्मः ॥ ७१ ॥

अपना आसन आदि सामान उठा कर जल्दी यहां से चले जाओ नहीं तो तुम्हारे सामने सभी वस्तु आग में जला देंगें ।

तस्याथ चेतो न चचाल साधोः तथा विरुद्धं प्रचरत्सु तेषु ॥
यतः सतां सत्यदृशां जगत्यां भवन्ति चेतांसि न चंचलानि ॥ ७२ ॥

इस प्रकार उन के विरोध करने पर भी महात्मा जी का मन न हिला क्यों कि सत्यदर्शी महापुरुषों का हृदय स्थिर होता है ।

विकार हेतावपि विद्यमाने चलन्ति चेतांसि कदापि नैषाम् ॥
महात्मनां धैर्यगुणाश्रयाणां सदैरूपाणि समुल्लसन्ति ॥ ७३ ॥

विकार के कारण होने पर भी सन्तों के मन में विकार नहीं होता वे तो धैर्य से पूर्ण हो कर सदा एक रूप रहते हैं ।

गिरा तथैवातिगभीरयाऽसौ तानाह भूयो विहसंस्तपस्वी ॥
गन्तव्य मेवास्ति मयाप्यवश्यं चेदेक कार्यं क्रियतां भवद्भिः ॥ ७४ ॥

बड़ी गंभीर वाणी से महात्मा जी ने हसते हुए फिर उन से कहा कि मैंने अगर अवश्य जाना ही है तो आप सब एक काम करें ।

अयस्मयं पंच वितस्तिमात्रं संदंशमादाय ततः स्वकीयम् ॥
भूमौ समारोप्य तदग्रभागं तानाह वाक्यं समयोपयोगि ॥ ७५ ॥

लोहे का लंबा सा अपना चिमटा लेकर महात्मा जी ने भूमि में उसका अगला भाग गाड़ दिया और उन से कहा ।

संदंशमादाय किल स्वकीयं स्वयं गमिष्यामि ततोन्यदेशम् ॥
अयं निखातः पुरतः पृथिव्या मुत्खन्यता मेष क्षमैर्भवद्भिः ॥ ७६ ॥

यह चिमटा सामने भूमि में गड़ा है आप इस को उखाड़ लें फिर मैं इस को ले कर दूसरे देश में चला जाऊंगा ।

तस्येदृशं ते प्रणिधाय वाक्यं परस्परोद्वीक्षण विस्मिताश्च ॥
हास्यं करोत्येष किमाह सत्यं मित्याहु रन्योन्यमुपद्रुतास्ते ॥ ७७ ॥

महात्मा जी का ऐसा शब्द सुन कर वे सब हैरान हो गए एक दूसरे से कहने लगे यह सत्य कहता है कि हास्य करता है ।

संदंशमारोप्य करेण भूमा वस्मान् समुत्पाटयितुं ब्रवीति ॥
उन्मत वद् व्यर्थ विचेष्टितस्य प्रयोजनं त्वस्य वयं न विद्मः ॥ ७८ ॥

चिमटे को भूमि में गाड़ कर हमें उखाड़ने के लिये कहा है इस में इस का क्या प्रयोजन है कुछ पता नहीं लगता

यदस्ति नामास्य फलं तदस्तु किमस्ति नोऽनेन विचारणेन ॥
संदंशमेनं च तथान्यवस्तु सर्वं समुत्थाप्य जले क्षिपन्तु ॥ ७९ ॥

इसका कुछ भी प्रयोजन हो हमें इस से क्या इस का यह चिमटा और सभी वस्तुएं उठाकर जल में डाल दें।

एवं विनिश्चित्य ततोऽखिलेषु तत्कर्तुमेवोद्यमादधत्सु ॥
कश्चित् युवोत्पाटयितुं बलेन जग्राह संदंशमिमं क्षणेन ॥ ८० ॥

ऐसा विचार करके जब वे सब सामान फेंकने को तयार हो गए तो उनमें से एक युवक ने बल से उस चिमटे को पकड़ा।

महाबलेनाथ विचालितोऽपि जहौ न भूमिं समनाग् यदानीम् ॥
ततः स लज्जोपहतो हताभो युवा परं विस्मयमाजगाम । ८१ ॥

बड़े बल से हिलाने पर भी जब वह चिमटा भूमि से न हिला तो वह युवक बहुत लज्जा वा विस्मय को प्राप्त हुआ।

तथाविधं तं तु विलोक्य तेऽन्ये सर्वे मिलित्वा चकिता सकोपम् ॥
क्षेप्तुं सुदूरं बलिनो युवानः संदंशमूलं जगृहुः बलेन ॥ ८२ ॥

इस प्रकार का दृश्य दूसरों ने देखा तो वे सब मिल कर दूर फेंकने के लिये चिमटे को बल पूर्वक हाथों से पकड़ने लगे।

वक्त्राणि वक्राणि विधाय शूराः तस्मिन् विलग्ना परितोऽग्रहतुंम् ॥
निशाचरादत्तदृढांगदांघ्रि दृश्यं तदादृश्यत वर्तमानम् ॥ ८३ ॥

वे सब मुख टेढ़ा करके चारों तर्फ़ से उसे चिपट गए उस समय ऐसे मालूम होता था जैसे अंगद का पैर राक्षसों ने पकड़ा है।

विचालयन्तोऽपि महाबलेन प्राप्ता स्तथा ते खलु निष्फलत्वम् ॥
यथा सभायां जनकस्य भूपाः कोदंडयज्ञे विफलत्वमीयुः ॥ ८४ ॥

उस चिमटे को उठाने में वे सब इस प्रकार असमर्थ हुए जिस प्रकार राजा जनक के धनुषयज्ञ में राजा विफल हुए थे।

विचिन्तयामासु रतोति भीताः संदंश एषोऽस्ति हिमाचलो वा ॥
विचाल्यमानो न चलेत्किलायं तथास्थितो विस्मयमातनोति ॥ ८५ ॥

भयभीत होकर सभी सोचने लगे यह पहाड़ को तरह चिमटा टिका हुआ है ऐसी स्थिति में वे सब हैरान हो गए।

सिद्धो महात्मा प्रतिभाति चायं मूढाः वयं नूनमिमे समेस्मः ।।
एतत्प्रभावाद्धि जहाति नायं संदंशशंकुः लघुकोऽपि भूमिम्।। ८६ ।।

यह महात्मा तो सिद्ध है हम सब महामूर्ख हैं इस के प्रभाव से ही यह छोटा सा शंकु भूमि को नहीं छोड़ता ।

यावन्महाशाप मयं न दद्यात् सर्वस्वनाशाय महाप्रतापी ।।
तावन्निपत्यास्य पदाब्जमूले क्षमां प्रयाचेम विनम्रभावाः ।। ८७ ।।

जब तक हमारे सर्वस्व नाश के लिये महाशाप नहीं दिया गया तब तक जल्दी चरणों में पड़कर क्षमा मांग लें ।

विहाय ते तं सहसाति भीताः तस्यांघ्रिमूले पतिता स्तदानीम् ।।
क्षमस्व हे नाथ विवेक हीनान् बालानिमानित्यभिभाषमाणाः ।। ८८ ।।

ऐसा विचार कर चिमटे को छोड़कर उनके चरणों में पड़कर क्षमा याचना करने लगे कि महाराज मूर्खों का अपराध क्षमा करो ।

उत्थापयामास ततः समस्तान् हस्तेन संस्पृश्य महानुभावः ।।
दयामयाः हन्त भवन्ति सन्तः दुष्टेषु वै सानुशयेषु सत्सु ।। ८९ ।।

इसके पश्चात् हाथ के स्पर्श से महात्मा जी ने उन सब को उठाया क्योंकि सन्तों का स्वभाव दयालु होता है ।

सम्बोधयामास ततो दयालुः पुरस्थितांस्तान् यवनान् सुवाचा ।।
हित्वा भयं प्राप्नुत संप्रसादं मा नाम मे विस्मरतैतदुक्तम् ।। ९० ।।

फिर दयालु महात्मा जी ने उन यवनों से कहा कि आप लोग भयभीत न हों और प्रसन्न रहो मेरी बात को न भूलना ।

महात्मनां नैव कदापि कश्चित् इतः परस्तादवमाननीयः ।।
सेव्या वपुर्वाङ्मनसा भवद्भिः समागता,: साधुजनानितान्तम् ।। ९१ ।।

आज से बाद किसी महात्मा का आपने अपमान न करना और मन वचन शरीर से साधु लोगों की सेवा करना ।

तेषां सुयोगात् सफलं भवेद्वः सर्वोत्तमं पुण्यफलं नरत्वम् ।।
इत्येव मादेशमवाप्य तेऽपि निवेदयामासु रिमं विनम्राः ।। ९२ ।।

साधुओं की संगति से आप लोगों का जन्म सफल होगा महात्मा जी के इन शब्दों को सुन कर यवनों ने कहा ।

इतः परं नाम यथा तवाज्ञा तथाविधानो भविता सुचर्या ॥
वयं सदा दास दृशावलोक्या बालाः स्वकीया भवताविलोलाः ॥ ६३ ॥

इसके पश्चात् आपकी आज्ञानुसार हमारी जीवन चर्या होगी आप भी हमें अपना दास जानकर कृपा रखें।

इत्थं निवेद्यास्य पदारविन्द द्वन्दं नमस्कृत्य मुदान्वितास्ते ॥
शनैर्वदन्तो बहु धन्यवादान् गृहाणि जग्मु यवनाः कथंचित् ॥ ६४ ॥

इस प्रकार प्रसन्न हो यवनों ने उनके चरणों में नमस्कार किया और अपने २ घरों को चले गए।

सिद्धस्ततस्तं कथयन्ति पुत्र लोका विलोक्यास्य विचित्र लीलाम् ॥
शिरोमणिभूतमहोमहोजो विद्योतितं तत्र परम्परायाम् ॥ ६५ ॥

हे बेटा इसी अलौकिक लीला के कारण ही लोक उन को सिद्ध कहते हैं क्योंकि वह एक बड़े तेजस्वी महात्मा हैं।

सिद्धस्य चास्या श्रयणेन जाता सिद्धैव सर्वास्य परम्परापि ॥
श्री पूर्णदासं परिपूर्ण बोध लब्ध्यै श्रयेथाः शरणं शरण्यम् ॥ ६६ ॥

इस सिद्ध महात्मा जी के कारण उसकी परम्परा भी सिद्ध हुई है बेटा तुम भी ज्ञान की प्रप्ति वास्ते इनकी शरण में जाओ।

बालस्तु तन्मातृवचोऽवधाय परम्परां प्रापमुदामुदाराम् ॥
प्रणम्य मातु श्चरणौ च तूर्णं महात्मनस्तस्य गतः समीपम् ॥ ६७ ॥

बालक के मन में माता के इन शब्दों को सुनकर बहुत हर्ष हुआ और महात्मा जी के पास पहुंचा।

नत्वास्थितः सांजलि रग्रतोऽस्य संकेत मात्रेण पुरो निषण्णः ॥
कुतः कथं त्वं विपिने घनेऽस्मिन् इतीव पृष्टश्च जगाद नम्रः ॥ ६८ ॥

नमस्कार पूर्वक हाथ जोड़ कर महात्मा जी के संकेत से सामने बैठकर नम्र वाणी से कहा।

त्वामेव मत्वा पितरं शरण्यं बन्धुं सहायं च समागतोऽस्मि ॥
शिष्यत्वभिक्षोः शरणागतस्य मनोरथं मे सफली कुरुष्व ॥ ६९ ॥

आप को ही अपना रक्षक मान कर शिष्य बनने के लिये आया हूँ मेरा मनोरथ कृपा करके पूर्ण कीजिए।

बालस्य विज्ञप्ति मिमां निशम्य वात्सल्य भावाभिगतो महात्मा ॥
तमावभाषे प्रिय वत्स केन शिशो स्तवायं जनितो विचारः ॥ १०० ॥

बालक की प्रार्थना सुन कर उन्होंने प्रेमपूर्वक कहा कि यह शुभ विचार आपके हृदय में किसने पैदा किया है।

शील स्वभावेन मनोहरस्त्वं जातोऽसि यस्या गुणवान् जनन्याः ॥
त्वया वियुक्ता जननी स्वकीयान् प्राणान् भवेद्धर्तु मलं कथं सा ॥ १०१ ॥

जिस माता ने सुन्दर वा गुणवान् तुम्हें जन्म दिया है आपके वियोग में वह कैसे जीवित रह सकेगी।

विहाय गेहस्य सुखं महत्त्वं प्रेम्णा जनन्याः परिलालनं च ॥
बासं वने किंतु चिकीर्षसि त्वं व्यथाकरे चेति विचारयस्व ॥ १०२ ॥

घर का सुख माता का प्रेम प्यार छोड़ करके तुमने वन में रहने का विचार क्यों किया है।

श्रुत्वा वचस्तस्य महात्मनोऽसौ तमाह भूयोऽपि विनम्रवाचा ॥
हे नाथ तत्प्रेरणयैव भक्त्या भाग्यात् प्रपन्नोस्मि तवाघ्रिमूल म्॥ १०३ ॥

उनकी बात सुनकर फिर नम्र वाणी से बालक ने कहा कि महाराज मैं माता जी की आज्ञा से आया हूँ।

मिथ्यासुखं गेहसुखं दयालो विश्वासपात्रं न च दृश्यते तत् ॥
तेजो विनाशं कुरुते जनानां तस्मिन्न भीतं रमते मनो मे ॥ १०४ ॥

बालक ने कहा कि घर का सुख शक्ति नष्ट करता है और सदा रहता भी नहीं है इस लिये मेरा मन उसे नहीं चाहता।

सुखं तथापेक्ष्य गृहोद्भवंच सुखाद्यपेयादि पदार्थजातम् ॥
बासोवने कन्दफलावृतेऽस्मिन् भवत्समीपे परि रोचते मे ॥ १०५ ॥

खाने पीने आदि का जो घर का सुख हे उसकी अपेक्षा यहां आप की सेवा में वन में रहना मुझे अच्छा लगता है।

मतिं ततस्तस्य विलोक्य शुद्धां तुष्टस्तपस्वी करुणार्द्रचेताः ॥
श्री राममंत्रं प्रदिदेश तस्मै शिष्यत्व भावेननियोजयंस्तम् ॥ १०६ ॥

बालक की पावन मति देख कर दयालु महात्मा जी ने श्री राम मंत्र की दीक्षा देकर शिष्य बना लिया।

तस्यात्मानंद भोक्तु विमलमति नरैः सेव्यमानस्य साधोः ॥
दृष्ट्या दृष्टः स बालः परमसुखकरं प्राप्य तं राममंत्रम् ॥
संतोषं संजगाम गुरु शरण भवं सिद्धसेवानु रक्तः ॥
वासं चक्रेथ भक्त्या घनविपिनगते पुण्यपूर्णे कुटीरे ॥ १०७ ॥

इस प्रकार आत्मानन्द में लीन रहने वाले महात्मा से बालक ने राम मंत्र लिया तथा परम संतुष्ट होकर वन में उनके पास ही रहने लगा।

योगीशेड़ित पादपद्म भुवनाधीशाभि संपूजित ॥
रामानंद नियन्त्रितस्य महतः श्री संप्रदायस्य सः ॥
चूड़ालंकृतितामगात् वरदृशा दृष्टो दया संस्पृशा ॥
बालः पुण्यमतिर्बभूव गुरुणा भाग्योदयं लम्भितः ॥ १०८ ॥

योगेश्वर वा राजाओं से संपूजित श्री रामानंद आचार्य से अधिकृत श्री संप्रदाय में इस बालक ने क्रमशः शिरोमणि पद प्राप्त किया।

इति गुरु समाश्रयणं नाम चतुर्थः सर्गः।

---

## अथ चारु चर्या नाम पंचमः सर्गः।

अथ तं तत्र संस्थाप्य कुटीरेऽरण्य शोभिते ॥
सिद्धो वृद्धो महात्मासौ जगाम स्वेच्छया क्वचित् ॥ १ ॥

इसके बाद श्री गोपालदास जी को कुटीर में बिठा कर वे वृद्ध महात्मा स्वेच्छा से कहीं चले गए।

तदाज्ञां शिरसाऽऽदाय तत्रैव निवसन्नयम् ॥
मानुष्यं प्रवरं कर्म शास्त्र रीत्या चकारह ॥ २ ॥

गुरु जी की आज्ञा के अनुसार यह अब इसी आश्रम में रह कर शास्त्रीय कार्यों को करने लगे।

अयं विभूतिमान् श्रीमां स्तथोर्जस्वल दर्शनः ॥
कथं जनैर्न मन्येत प्रभुतेजोंश सम्भवः ॥ ३ ॥

इन का प्रभु के विशेष अंश से जन्म हुआ था इस कारण अधिक ओजस्वी तथा जनता के श्रद्धेय थे।

सेव्यमानः सदा सद्भिः तत्वजिज्ञासुभिश्च सः ॥
आसीदसीम पुण्याप्त शुद्धबुद्धि धनैर्जनैः ॥ ४ ॥

धर्मात्मा जिज्ञासु भाग्यशाली सभी सज्जन इनकी सेवा में सदा तत्पर रहते थे।

शिक्षां धर्म्यां महात्मासौ लोक श्रेयो विधायिनीम् ॥
देशे प्रचारयामास सर्वदोषापहारिणीम् ॥ ५ ॥

इन्होंने जनता का कल्याण करने वाली धर्मशिक्षा का देश में विस्तृत प्रचार किया।

लक्ष्मीः सरस्वती चैव विरोधिन्यौ स्वभावतः ॥
तस्मिन् स्वामिनि संयुक्ते गुणाधारे बभूवतुः ॥ ६ ॥

लक्ष्मी व सरस्वती का आपस में मतभेद है दोनों एक जगह नहीं रहती परन्तु गुणी महात्मा जी के पास दोनों का सहवास था।

लोकेभ्यश्चोपदिष्टं वै सेवनं सततं गवाम् ॥
सेविताश्च स्वयं तेन धर्मरक्षा विधित्सुना ॥ ७ ॥

लोक में गो सेवा का उन्होंने विशेष प्रचार किया तथा स्वयं भी धर्म रक्षा वास्ते गो सेवा करते रहे।

प्रातरुत्थाय कूजन्तः शुकपारावतादयः ॥
ददृशुस्तं महोत्साहा मातरं शिशवो यथा ॥ ८ ॥

प्रातः काल उठ कर कई प्रकार के पक्षी इन को प्रेम से देखते थे जैसे बच्चे माता को देखते हैं।

रस्यैर्मनोहरैर्गीतै राह्वयन्ति स्म तं खगाः ॥
स्नेहानुरूपं सोऽप्येतान् सत्करोति स्म तत्ववित् ॥ ९ ॥

नित्य ही मीठे २ शब्दों से सभी पक्षी इन को बुलाते थे तथा महात्मा जी भी प्रेम से इन का सत्कार करते थे।

गृहीत्वान्नकणा न्नित्यं विकिरन् विष्करे व्रजे ॥
पुपोष तांस्स मातेव दयाभाव वशंवदः ॥ १० ॥

प्रतिदिन अन्न के दाने बखेर कर माता की तरह दयालु महात्मा पक्षियों का पालन करते थे।

चिकित्सा कार्यं नैपुण्यं यस्य गातुं न शक्यते ॥
नता यस्याग्रतो नूनं वैद्यविद्याविशारदाः ॥ ११ ॥

चिकित्सा के विषय में इन का ज्ञान असीम था बड़े २ वैद्य इनके सामने नतमस्तक हुए ।

गुणेनानेन लोकानां रोगास्तेनेह नाशिताः ॥
जीवनं दुःख संतप्तं स्वास्थ्येनायोजितं तथा ॥ १२ ॥

इसी के द्वारा लोगों के रोग नाश करके स्वास्थ्य की वृद्धि की सब का संताप दूर किया ।

ग्रामीणा नागराश्चैव समाकृष्टा महात्मना ॥
देशीयाश्च विदेशीया सर्वे दर्शन काङ्क्षिणः ॥ १३ ॥
श्रद्धा प्रपूर्ण चेतस्काः नाना संकल्प संवृताः ॥
संघशः प्रत्यहं द्वारं तस्यायान्ति महात्मनः ॥ १४ ॥

गांव नगर देश विदेश में रहने वाले लोग इनके दर्शन करने की इच्छा से ।

अनेक प्रकार के संकल्पों को लेकर श्रद्धा पूर्वक इनके द्वार पर नित्य इकठे हो कर आया करते थे ।

मह्यं देह्याशिषं स्वामिन् तवास्मि शरणं गतः ॥
दीनोऽहं पालनीयोऽस्मि जगतां परिपालक ॥ १५ ॥

हे जगत की पालना करने वाले महात्मा जी मैं दीन आप की शरण में आया हूँ मुझे आशीर्वाद करो ।

गृहस्थः सन्नपुत्रोऽस्मि कृपया देहि पुत्रकम् ॥
गृह कार्यै रशान्तस्य भगवन् शान्तिदो भव ॥ १६ ॥

मैं गृहस्थी होकर भी सन्तान हीन हूं पुत्र जन्म के लिए आशीर्वाद दें और शान्ति प्रदान करें ।

व्याधिभिः पीडयमानं मां पाहि पाहि कृपानिधे ॥
संसारग्राह संग्रस्तं मा संतारय तारक ॥ १७ ॥

मैं रोग से बहुत पीड़ित हूं मेरी रक्षा करो संसार के संकट में फसा हुआ हूं मेरी रक्षा करो संसार के संकट में फसा हुआ हूं मेरी मुक्ति करो ।

वस्त्राभावात्तु नग्नोऽस्मि शीतोष्णसहनाक्षमः ॥
कृपया देहि मे वस्त्रं पिता माता यतो भवान् ॥ १८ ॥

मेरे पास वस्त्र नहीं शीत वा गर्मी नहीं सह सकता मुझे वस्त्र दो क्योंकि आप ही माता पिता हैं ।

बाला क्षुधातुराः सन्ति भोजनं नास्ति मे गृहे ॥
द्रष्टुं तथाविधान् बालान् अशक्तस्त्वा मुपागतः ॥ १९ ॥

बालक भूखे हैं घर में भोजन नहीं हैं ऐसी दशा में दुःखी होकर आपकी शरण में आया हूँ।

विवाह काल मारभ्य रुग्णा मे वर्तते प्रिया ॥
पीड़ितां मेऽद्य तां पत्नीं रक्ष रक्ष दयालय ॥ २० ॥

विवाह के दिन से लेकर मेरी भार्या रोग से ग्रस्त है आप कृपया करके उस की रक्षा करें।

दुग्धदाने सवत्सा मे गावो यत् बद्धमुष्टयः ॥
महान्त मन्तरायं तं देव दूरं निवारय ॥ २१ ॥

दूध देने के योग्य बछड़ों वाली गायें दूध नहीं देती कृपया इस महान् विघ्न को आप दूर करें।

दध्नो विलोड़्यमानस्य, नवनीतं न लभ्यते ॥
बाधां निवारयेमां त्वं शरण्योऽसि यतो भुवः ॥ २२ ॥

दधि मन्थन करने से भी मक्खन प्राप्त नहीं होता इस बाधा को दूर करें क्योंकि आप सब के रक्षक हैं।

उपनीतोऽपि बालोऽयं पठनं नाभिकाङ्क्षति ॥
कृपादृष्टिं कुरुष्वास्मिन् यथा सुखमयं पठेत् ॥ २३ ॥

मेरे बालक का यज्ञोपवीत संस्कार हो गया है परन्तु पढ़ता नहीं आप कृपा करें यह बालक खुशी से विद्या पढ़े।

एवंविधा नृणांवाचः श्रृण्वन् स्वामी तु नित्यशः ॥
सर्वान् संतोषयामास यथायोग्यमुपायतः ॥ २४ ॥

इस प्रकार द्वार पर आए हुए लोगों की बातें सुन कर महात्मा जी ने यथा योग्य उनका सन्तोष किया।

कर्तव्यं च कृतं तेन निष्कामं कर्मयोगिना ॥
कदाचित् कुत्रचित् किन्तु परिणामो न चार्थितः ॥ २५ ॥

उन्होंने निष्काम भाव से सभी कर्म किये कभी भी कहीं भी फल की आशा नहीं की।

इन्द्रियाणीन्द्रियार्थेभ्यः संरुद्धय सर्वतो मनः ॥
संयम्य योगमास्थाय निर्जने शुचिभूतले ॥२६॥

अपने मन वा सभी इन्द्रियों का संयम कर के एकान्त पवित्र आसन में बैठ कर योगाभ्यास करते ।

अखण्डाकार वृतिं च संयोज्याखण्ड ब्रह्मणि ॥
नित्यशस्तु तपस्तप्तं तेन पूर्णमहात्मना ॥२७॥

अखंड ब्रह्म का निरंतर स्मरण करते हुए वे महात्मा सर्वदा तपश्चर्या में लीन रहा करते थे ।

उपवासाश्च शास्त्रोक्ता कृता लोकैश्च कारिताः ॥
एकादश्यादयस्तेन मनः शुद्धि विधायिनः ॥२८॥

शास्त्रों में बताए गए व्रत वे स्वयं करते थे तथा मन: शुद्धि के लिये औरों से भी करवाते थे ।

भूतप्रेत पिशाचाद्या ग्रहा ये लोक मारकाः ॥
महादुःखं पुरा दत्वा पश्चात् मारण तत्पराः ॥२९॥

तस्य दर्शन मात्रेण पलायन्तेस्म दूरतः ॥
सीदन्तिस्म त्रसन्तिस्म तमांस्यर्कोदये यथा ॥३०॥

भूत प्रेत आदि ग्रह जो भी लोगों को दुःखाने वा मारने वाले थे इनके दर्शन से ही दूर भाग जाते थे जैसे सूर्योदय में अन्धेरा भाग जाता है ।

तस्य सर्वं परार्थं वै न स्वार्थं हृदि निश्चितम् ॥
त्यागभावयुतस्यासीत् सर्वजीवात्मदर्शिनः ॥३१॥

उनका सब कुछ लोक सेवा के लिए ही था अपने लिए कुछ नहीं था क्योंकि वे परम त्यागी महात्मा थे ।

निवासान्न व्यवस्था च विद्या विस्तार हेतवे ॥
विद्यार्थिभ्यः परा प्रीत्या कृता तेन वरीयसी ॥३२॥

विद्या के बिकास के लिए विद्यार्थियों के भोजन वा निवास की सुन्दर व्यवस्था की हुई थी ।

धर्मोहि श्रेयसां मूलं पापं दुःखस्य कारणम् ॥
धर्मेस्याद्वो मतिर्लोकाः न पापेषु कदाचन ॥३३॥

एवमादिं शुभैर्वाक्यैर्धर्मे लोकाः प्रवर्तिताः ॥
स्वामिगोपालदासेन त्रिलोकस्य हितैषिणा ॥ ३४ ॥

धर्म से सुख मिलता है पाप से दुःख होता है इसलिए आप सब धर्म के मार्ग पर चलो इस प्रकार सब का भला चाहते हुए इन्हों ने लोगों को धर्म में प्रवृत्त किया ।

कृशानावुष्णतेवासोत् तस्मिन् निर्भयता सदा ॥
स्वाभाविकी त्वराचापि तपःपूत शरीरगा ॥ ३५ ॥

आग में जैसे गर्मी स्वभाव से ही होती है वैसे ही स्वभाव से ही वे महात्मा निर्भय थे । और स्फूर्ति वाले थे ।

ततश्च निर्भयाः सर्वे प्राणिनश्चाभवन् भुवि ॥
सौम्यरूपात् क्षमागारात् आत्मत्वमभिपश्यतः ॥ ३६ ॥

उन महात्मा जी से किसी को भी भय नहीं होता था क्योंकि यह क्षमावान् आत्म दर्शी थे ।

दुष्टाः पापपरा यंवै पश्यन्ति स्मान्तकोपमम् ॥
भीताश्च कृपणा भूयः पलायन्तेस्म दूरतः ॥ ३७ ॥

दुष्ट लोगों को यह यमराज की भांति भयदायक थे वे सब डर से दूर दूर भाग जाते थे ।

भोजनस्थान दानेन तथा शुश्रूषयान्यया ॥
स्वागतादि प्रियालापैः मनः शांति विधायिभिः ॥ ३८ ॥
सत्करोति स्म यो नित्य मतिथीनाश्रमागतान् ॥
प्रथां परम्परा प्राप्तां शास्त्रिणां पालयन् पराम् ॥ ३९ ॥

भोजन निवास मधुर भाषण आदि से आश्रम में आने वाले अभ्यागतों का सन्मान करते थे क्योंकि प्राचीन धर्मात्मा जनों की यही मर्यादा थी ।

असेवितोऽतिथिः पुण्यं गृहीत्वाश्रम वासिनः ॥
पापं दत्बा स्वकं याति शास्त्रेष्विति निरूपितम् ॥ ४० ॥

घर में आए हुए अतिथि की यदि सेवा न की जाए तो वह घर वाले के पुण्य ले जाता है और अपना पाप दे जाता है ऐसे शास्त्रों में लिखा है ।

अतश्चेतः पुराजानां शास्त्रसिद्धान्त शालिनाम् ॥
अतिथीनां सुसेवायां सावधानं सदाभवत् ॥ ४१ ॥

इस कारण से विवेकशील पूर्वजों का मन अतिथी सेवा में सावधानी से लीन रहता था ।

तदभावानुभूत्यैवं महाशक्तिमता सता ॥
बालकान् नचिकेताख्यात् यमेन प्राथिता क्षमा ॥ ४२ ॥

किसी समय अतिथि का सम्मान न हो सकने के कारण यमराज ने नचिकेता से क्षमा मांगी थी।

शिवि नामा पुरा कश्चित् भूपालो धर्मरक्षकः ॥
कुर्वन्नतिथि सेवां वै देवदर्शन माप्तवान् ॥ ४३ ॥

शिवि नामक एक राजा ने इसी कारण वश संतुष्ट देवता के दर्शन प्राप्त किये थे।

नष्ट पुण्या महापापा हीना अतिथि सेवया ॥
नरकेऽनियतं यान्ति महा कष्टप्रदे चिरम् ॥ ४४ ॥

जो अतिथि सेवा नहीं करते वे पापी महा नरक में चिर तक महा कष्ट भोगते हैं।

जगन्ति शिक्षितान्यासन् रक्षितानि च पापतः ॥
अतः पुण्यात्मनानेन कुर्वताऽतिथि सेवनम् ॥ ४५ ॥

इस कारण स्वयं अतिथि सेवा करते हुए संसार के लोगों को अतिथि सेवा की शिक्षा दी।

फ़लाशा वर्जितं कर्म परं शास्त्रेण कीर्तितम् ॥
निरपेक्षं ततः कर्म तस्यासीन् कर्म कारिणः ॥ ४६ ॥

फल की चाह न करते हुए कर्म करने का शास्त्र में विधान है इस लिए इन्होंने निष्काम कर्म किए।

वैदिके कर्मतन्त्रेऽपि यज्ञ कर्म निरुपितम् ॥
श्रीमता कृष्णचन्द्रेण गीतायाञ्चापि कीर्तितम् ॥ ४७ ॥

धर्मस्कन्धेष्वपि प्रोक्तो यज्ञोऽयं यत् विशेषतः ॥
ततोऽयं मानुषे देहे परमावश्यको मतः ॥ ४८ ॥

सृष्ट्वा सृष्टिं पुरोवाच सृष्टेभ्यः सृष्टि कारकः ॥
यन्तु सर्वे परां वृद्धिं धर्मयज्ञ विधानतः ॥ ४९ ॥

इति न्यायेन तेनेह यज्ञान् कृत्वा सहस्त्रशः ॥
प्रवर्तिता जना यज्ञे माननीये महात्मनाम् ॥ ५० ॥

वेदों में यज्ञ का विधान है श्री गीता जी में यज्ञ करना लिखा है और शास्त्रों में यज्ञ का विशेष वर्णन है इस कारण से महात्मा जी ने स्वयं हज़ारों यज्ञ करके लोगों को इस ओर प्रवृत्त किया।

सूर्ये दीप्ति स्तथाकाशे शब्दः पुष्पेषु सौरभम् ॥
माधुर्यमिक्षा वार्द्रत्वं जले चन्द्रे च शीतता ॥ ५१ ॥

यथा स्वाभाविकी तद्वत् विद्या तत्वावबोधिनी ॥
विद्यते स्म मुनावस्मिन् ततोऽविद्यां निराकरोत् ॥ ५२ ॥

सूर्य में प्रकाश फूल में सुगन्ध जैसे स्वभाव से होती है वैसे इन में विद्या थी जिसके द्वारा इन्होंने अविद्या को दूर किया।

विद्यैव साधनं लोके व्यवहार परार्थयो। ॥
ततः प्रवर्तिताः लोकाः तेन तस्यां महात्मना ॥ ५३ ॥

लोक परलोक दोनों विद्या से ही बनते हैं इस कारण महात्मा जो ने लोगों से प्रेरणा की कि विद्या पढ़ें।

देवसुरान् बशीकर्तुं व्याधीन् नाशयितुं तथा ॥
राम बाणाय मानानि मंत्र तन्त्राणि भूरिशः ॥ ५४ ॥

सर्वैश्च साधितैः रीत्या चकारोपकृतिं नृणाम् ॥
सर्वंश्रेयोभिलाषीसः सर्वं शास्त्र विशारदः ॥ ५५ ॥

देव वा असुर सब को वश में करने वाले मन्त्र तन्त्र आदि के द्वारा भी लोगों का उपकार किया।

ब्रह्मचर्येण तपसा नियमेन दमेन च ॥
बभौ तेजस्विता तस्य वीर चेतोविमोहनो ॥ ५६ ॥

ब्रह्मचर्य तपस्या आदि के द्वारा इनका भारी तेज प्रतिष्ठित लोगों से भी असह्य था।

कीर्त्या दिगन्तरं व्याप्तं तस्य पूर्णंमहात्मनः ॥
दिगीश्वराश्च तं द्रष्टुं दूरादायान्ति नित्यशः ॥ ५७ ॥

इनकी कीर्ति से सभी दिशा व्यप्तथीं राजा लोग भी प्रतिदिन, इनके शुभ दर्शन को आते थे।

वर्तमानोऽपि कार्येषु लोकांश्चैष प्रवर्तयन् ॥
निर्लेपोऽभूत् सदा तेषु पद्मपत्र मिवाम्भसि ॥ ५८ ॥

वे महात्मा स्वयं शुभ कार्य करते तथा औरों से कराते हुए निर्लेप रहा करते थे।

पुरस्तात् लस्यमानेषु मनोबिकृति हेतुषु ॥
न जाता विकृति स्तस्य सदा वैराग्य शालिनः ॥ ५९ ॥

पतत्सु सर्वतः स्वस्मिन् पयोवाहेषु सर्वथा ॥
स्वात्मना परिपूर्णो हि समुद्रो नैति विकृतिम् ॥ ६० ॥
लिप्तो महाविषैर्नागैः चन्दनाख्यो महातरुः ॥
न गृह्णाति विषं तेषां सौरभैः समलंकृतः ॥ ६१ ॥
वेगत स्तीव्रवातस्य संचालयितु मीड़ितः ॥
हिमाचलो न चलति निज धैर्यं प्रभावतः ॥ ६२ ॥
तथैव कर्णमार्गेण प्रविष्टासु खलोक्तिषु ॥
न विकृतं मनस्तस्य बभूव विमलात्मनः ॥ ६३ ॥

जैसे जल के प्रवाह लगातार आने पर भी सागर में कोई परिवर्तन नहीं होता अथवा जैसे सर्पों के लिपटने पर चन्दन पर विष का प्रभाव नहीं होता और हिमाचल पवन के झोंकों से जैसे नहीं चलता वैसे ही इन महात्मा जी का मन सदा एक रूप निर्विकार था मूर्खों के कटुवाक्य सुनने से तथा अन्य कारणों से इनका मन बिचलित न हुआ।

सच्चिदानन्दरुपं तत् ब्रह्म विन्देमहीत्यमुम् ॥
एषणा रहिता नित्य मुपासां चक्रिरे भृशम् ॥ ६४ ॥

सत्चित् सुख मय पर ब्रह्म प्राप्त ही इस आशा से निस्पृह विरक्त लोग सदा इनका सेवा में आते थे।

वरेण्यश्च गृहस्थानां पुत्र वित्तादि कांक्षिणाम् ॥
आश्रयः सर्व भूताना मेवमासीद् गुणालयः ॥ ६५ ॥
शिक्षा प्रसाद दातारं बालकाः पितरं यथा ॥
निर्भयाः सरला शांता स्तं वृण्वन्ति स्म नित्यशः ॥ ६६ ॥

पुत्र धन आदि की आशा से गृहस्थ आश्रम के लोग तथा शिक्षा आदि की आशा से बालक वर्ग इनके पास आते थे इस प्रकार यह महापुरुष सब प्रकार के लोगों का आश्रय थे।

एकत्र स्थायिना तेन पिण्डेन भौतिकेन तु ॥
यशोमयेन देहेन व्याप्तमासीत् जगत्रयम् ॥ ६७ ॥
यशोवियोग आमृत्युः यशोयोगस्तु जीवनम् ॥
शिक्षा तद्दर्शनेनेय प्राप्ता प्रायेण मानवैः ॥ ६८ ॥

शरीर से एक स्थान में निवास करते हुए भी इन्होंने अपने यश से संसार भर को व्याप्त किया जिससे लोगों ने यह शिक्षा प्राप्त की कि यश ही जीवन है। तथा अपयश मरण है।

सर्वेषां स प्रियः स्वामी सर्वे तस्य प्रियास्तथा ॥
तेन योगं गतं दृश्यं प्रियरूपमभूदिदम् ॥ ६९ ॥
न कश्चिदपि तं द्वेष्टि द्वेष्टा सोऽपि न कस्यचित् ॥
सर्वैश्च समतां यातः साधुसंघ शिरोमणिः ॥ ७० ॥

वे सब से प्रेम करते थे और सभी उन से प्रेम करते थे, उन्हों ने किसी का विरोध नहीं किया था और किसी ने उनका द्वेष नहीं किया उनके प्रभाव से यह दृश्य प्रायः प्रेममय ही दिखाई देता था।

कुर्वतः शुभ कार्याणि तपश्चर्यादिकानि च ॥
सत्या सर्वेऽपि संकल्पाः तस्याभूवन् महात्मनः ॥ ७१ ॥

तपस्या तथा शुभ कर्म करने वाले इन महात्मा जी के प्रायः सभी संकल्प सत्य थे।

भूमि यथैषा बहुधाहताऽपि, जीवैः सदा स्वार्थपरैरमीभिः ॥
मातेव सर्वान् परिपोषयन्ती नवक्ति किंचित् न च संरुणद्धि ॥ ७२ ॥
क्षिप्तस्तु बालेन यथा पितेह नाना प्रकारै र्नविकारमेति ॥
अहो सहर्षं सहते समस्तान् वालापराधान् किल वत्सलत्वात् ॥ ७३ ॥
तथाज्ञतायोग विचार शून्याः नरोऽपराधं खलु येस्य चक्रुः ॥
क्षमा प्रयुक्ता किल तेन तेषु समत्वभावावृत मानसेन ॥ ७४ ॥

जिस प्रकार जीवों से उपहत पृथिवी में विकार नहीं होता अथवा बालक के अपराधों से जैसे पिता क्रुध नहीं होता इसी प्रकार अज्ञानी लोगों पर भी इनको क्रोध नहीं हुआ कारण यह कि क्षमा पूर्ण थे। सभी जीवों में इनकी समान दृष्टि थी।

वैषम्य पूर्णासु दशासु दैवात्, जातासु तस्यापगतं न धैर्यम् ॥
लीनं परे ब्रह्मणि निर्विकारे सदैक रूपं हि मनस्तदीयम् ॥ ७५ ॥
स्थानस्य देशस्य पुरस्य तस्य प्राप्ते पुरस्तात् किल कार्यभारे ॥
विवेक शीलस्य विशुद्ध रूपा स्वस्था मति स्तस्य सदा बभूव ॥ ७६ ॥

विषम दशा में ब्रह्म निष्ठ महात्मा का धैर्य स्थिर रहा विशेष कार्य भार में भी मति स्वस्थ रही। अर्थात् परिस्थिति वश विषमता दशा होने पर उनकी मति सदा स्थिर रही।

निन्दत्सु लोकेषु कदाचिदेव स्तुतौ तथा ध्यानपरेषु तेषु ॥
लक्ष्यं स्थिरं तस्य महात्मनोऽभूदा सक्तिभावातिगतस्य लोके ॥ ७७ ॥

मानस्य लाभस्य तिरस्कृतेर्वा हानेः कृता नैव कदापि चिन्ता ॥
ध्यातं किलैकं जगतां वरेण्यं तेनेह पुण्यैक फलं नरत्वम् ॥ ७८ ॥

कोई निन्दा करे या स्तुति करे, लाभ हो वा हानि हो किसी बात का ध्यान न करके केवल अपने कर्तव्य का ध्यान ही इनके सामने रहता था ।

प्रवर्तमाने वचसाँ बिहारे सत्यं न तेनेह कदापित्यक्तम् ॥
वाचा यदुक्तं परि पालितं तत् धर्मस्य मूलं वचनं किलोक्तम् ॥ ७९ ॥
प्रयुक्तवान् प्राणगतेऽपि कष्टे हृदा गिरा वा वपुषा स सत्यम् ॥
जातं ततः सत्यमयं शरीरं महात्मनस्तस्य सदाश्रितस्य ॥ ८० ॥

वाणी के व्यवहार में उन्होंने सदा सत्य का पालन किया उनके मन वचन कर्म में सत्य का सम्बन्ध था अतः वे सत्य रूप ही थे कारण कि सत्य ही धर्म का मूल है ।

विद्वन्मान्यतमस्तथा गुणगणागारो जगद्भूषणम् ॥
शास्त्रेणोदित कार्यजात मखिलं कुर्वंस्तथा कारयन् ॥ ८१ ॥
सर्वेषाँ विदधे शुभां हितकरीं साकार पूजां च यः ॥
सद्यस्तोष विधायिनीं भगवत स्तस्मै नमः साधवे ॥ ८२ ॥

विद्वान् गुणी इन महात्मा जी ने शास्त्रीय कर्म किये वा कराए और साकार पूजा की प्रेरणा की ऐसे परोपकारी महापुरुष के प्रति नमस्कार हो ।

इति चारु चर्या नाम पंचम सर्गः ।

---

# अथ नर जन्म लाभोपदेशो नाम षष्ठः सर्गः ॥

अथोपदेश बचना न्याकर्णयितु मागतान् ॥
रहस्यं प्राह धर्मज्ञो स धुर्यो मृदु भाषिणाम् ॥ १ ॥
दुर्लभा मानवी जातिः लब्धा सा साधु रक्ष्यताम् ॥
सा रक्ष्या साधनैर्यस्तु ब्रवीमि तानि चेतसा ॥ २ ॥

उपदेश सुनने के लिये आने वाले सज्जनों को मृदुभाषी महात्मा जी ने कहा कि मनुष्य जन्म दुर्लभ है इसकी सफलता के साधन सुनो । मैं ध्यान से कथन करता हूँ ।

कथायाः श्रवणे प्रीतिः नित्यशो भवतां भवेत् ॥
यतो विश्वेश्वरो देवः सद्य एव प्रसीदति ॥ ३ ॥
भवद्भिश्च प्रयत्नेन नित्य धर्मं प्रचारिणी ॥
ग्रामे ग्रामे तथास्थाप्या सभा सद्भाव भाविनी ॥ ४ ॥
तया विद्यालया धर्म्या विधेयाश्च प्रयत्नतः ॥
यत्र बालाः सुखं विद्यां पठेयुर्बालिकास्तथा ॥ ५ ॥

आप लोग कथा सुना करें इससे भगवान् प्रसन्न होता है और ग्राम २ में धर्म प्रचार के कारण सभा स्थापित करें बालकों के पढ़ने के लिए विद्यालयों का निर्माण करें।

भूतले यस्य विद्यायां प्रवृति नैव विद्यते ॥
निष्फलः संभवस्तस्य यथाजाया गलस्तनौ ॥ ६ ॥

जो व्यक्ति विद्या प्राप्त नहीं करता उसका जन्म बकरी के गले की स्तनों की भांति व्यर्थ है।

व्यायामस्य कृते स्थानं कार्यं स्वास्थ्य पदं शुभम् ॥
अन्नपान प्रभावो हि व्यायामेनैव जायते ॥ ७ ॥
स्वास्थ्यं च साधनं मुख्यं कर्तुं वैं कर्मणो मतम् ॥
व्यायाम एव तत्रादौ कारणत्वेन गम्यते ॥ ८ ॥

व्यायाम के लिये एक २ स्थान का निर्माण नगर वा ग्रामों में करें इसी से स्वास्थ्य होता है और स्वस्थ जन ही सभी प्रकार के कर्म सोत्साह कर सकते हैं।

सर्वैः संगत्य भो भद्रा विधेयो वार्षिकोत्सवः ॥
विस्तृतिर्धर्मभावस्य यतस्तेनैव जायते ॥ ९ ॥
संगतानां यतस्तत्र भिन्न ग्राम निवासिनाम् ॥
संमति जायते शुभ्रा लोक वृद्धि विधायिनो ॥ १० ॥

सब को मिलकर वार्षिक उत्सव करना चाहिए इससे धर्म का प्रचार होता है तथा दूर २ बसने बालों की आपस में सम्मति होती है जिस से लोक सब प्रकार से वृद्धि प्राप्त करता है ॥

किञ्चिदन्यद्वदामोह सावधानैर्निशम्यताम् ॥
विधवा मातरोऽनाथा रक्षणीया प्रयत्नतः ॥ ११ ॥
तासां रक्षाविधानेन भवेज्जातिः सुरक्षिता ॥
धर्मवृद्धिश्च जायेत सदा कल्याण कारिणी ॥ १२ ॥

ताभ्यो दोषावृताभ्यस्तु संतति स्तामसो ननु ॥
नाशमेति च वंशस्य तथा धर्मः सनातनः ॥ १३ ॥
पितृणां नरकावास स्तत एवोप जायते ॥
रक्ष्यन्तां विधवा यत्नात् हर्तुं दोषपरम्पराम् ॥ १४ ॥
आसां रक्षा हि धर्मस्य रक्षा नाशश्च नाशनम् ॥
रक्षणीया इमास्तस्मात् धर्मरक्षा विधित्सुभिः ॥ १५ ॥

देश में जो अनाथ विधवा देवियां हैं उनकी रक्षा करो क्योंकि उनकी रक्षा से ही समाज की सुरक्षा वा धर्म की रक्षा होती है यदि उनकी रक्षा न हो तो धर्म वा समाज तमोगुण के प्रभाव होने से नष्ट हो जाते हैं ।

मन्दिराणा मवस्थायां, ध्रियतां सावधानता ॥
लभन्ते मन्दिरैरेव, परां सिद्धि जनाः भवे ॥ १६ ॥

मन्दिरों के विषय में आप लोग सावधानी से विचार करें क्योंकि मन्दिरों के द्वारा ही जीव परम सिद्धि प्राप्त करते हैं ।

स्थाने स्थाने च निर्माणं कार्यं सर्वैः प्रयत्नतः ॥
मन्दिराणां तथा तत्र स्थापनीयास्तु मूर्तयः ॥ १७ ॥
वेद शास्त्र विधानेन, देवानां प्रतिमास्तथा ॥
नित्यशः प्रात रुत्थाय, दर्शनीया शुभेप्सुभिः ॥ १८ ॥
पूजनं शास्त्ररीत्यासां विधेयं प्रत्यहं तथा ॥
नीराजन मनुष्ठेयं श्रद्धा पूर्णेन चेतसा ॥ १९ ॥
यथाविद्यं यथाबुद्धिः गेया तत्पुरतः स्तुतिः ॥
यतः स प्रीयतां देवो भावग्राही स्वयं प्रभुः ॥ २० ॥
तुलसीदल संयुक्तं ग्राह्यं पादोदकं तथा ॥
योग मास्थाय तत्रैव ध्येयश्च मूर्तिमान् प्रभुः ॥ २१ ॥

सभी स्थानों में देव मन्दिरों का निर्माण भी करना आवश्यक है और मन्दिरों में शास्त्ररीति के अनुसार प्रतिमा स्थापित की जावें तथा नियम से आरती पूजा हुआ करे तथा ध्यान करें ऐसा करने से वह भगवान् प्रसन्न होता हैं भक्त का पवित्र भाव ही प्रभु को प्रिय है ।

सर्वव्यापी कथं ध्येयो मूर्तावेकत्र स प्रभुः ॥
इतिचेदुच्यते ध्यान दानेनैतन्निशम्यताम् ॥ २२ ॥

साकारं ध्यायतः पुंसः सुलभं ब्रह्म निर्गुणम् ॥
युक्ति युक्तं मतं ह्येतत् नाना शास्त्रेषु श्रूयते ॥ २३ ॥
भजन्ते तेऽधिकं दुखं ये त्वव्यक्त मुपासते ॥
करणातीतता हेतोः सुकरं न तदर्चनम् ॥ २४ ॥
दृश्यमान प्रपंचस्य चरस्य स्थावरस्य च ॥
कारणं यदधिष्ठानं सत्यं ब्रह्म चिदात्मकम् ॥ २५ ॥
वेद विद्या यतो जाता मानवोद्धार कारिणी ॥
सर्वस्मिन् व्याप्य संसारे साधु सेव्या विराजते ॥ २६ ॥

सर्व व्यापी भगवान् का ध्यान मूर्ति में कैसे हो सकता हैं ऐसी शंका यदि हो तो उसका समाधान सुनो । साकार भगवान् की पूजा से निराकार ब्रह्म का दर्शन सुलभ होता है यह भाव शास्त्रों में स्पष्ट किया गया है । निर्गुण ब्रह्म के उपासकों को अधिक कष्ट होता है क्योंकि इन्द्रिय का विषय न होने से उस का ध्यान आसान नहीं । जड़ चेतन विश्व का जो आधार है जो सत्य ब्रह्म है जिससे मानव के उद्धार के लिए वेद विद्या प्रगट हुई है जो सज्जनों से सेव्य तथा सर्वत्र व्याप्त है ।

विषय ग्राहग्रस्तस्य नानाकष्टभुजस्तथा ॥
यद्गत्वा प्राणिनो मोक्षः तत्क्षणादेव जायते ॥ २७ ॥
पराकाष्ठेति दिष्टस्य ब्रह्मणो निर्गुणस्य च ॥
तस्य प्राप्ते रुपायोऽयं साकार ब्रह्म सेवनम् ॥ २८ ॥
भावमेतं विनिश्चित्य सर्वदा निज मानसे ॥
शंकापंक कलंकोसौ क्षालनीयः प्रयत्नतः ॥ २९ ॥

विषय रूपी ग्राह से ग्रसित तथा महान् कष्ट भोगने वाले जीवों का जिसे प्राप्त करने पर तत्काल मोक्ष होता है । जिस को शास्त्र में पराकाष्ठा इस नाम से कहा गया है उस को प्राप्त करने का सरल उपाय साकार भगवान् की उपासना है अर्थात् मन्दिरों में स्थापित प्रतिमा का विधिवत् पूजन है । इस भाव को हृदय में निश्चित करते हुए मूर्ति पूजा विषयक शंका को दूर करना चाहिए ।

सर्वस्याभीष्ट दातृत्वात् मन्दिराणां हिनिर्मितिः ॥
देशस्य निजधर्मस्य श्रेयसे च विधीयताम् ॥ ३० ॥

मन्दिर निर्माण रूप वेदोक्त शुभ कार्य देश धर्म तथा आत्मा की रक्षा वास्ते अत्यावश्यक है ।

भुक्तिमुक्तिद्वयस्यायं हेतु धर्मों निरूपितः ॥
यस्य रक्षा वतीर्णेन परेशेन स्वयं कृता ॥ ३१ ॥

भोग वा मोक्ष दोनों धर्म के द्वारा प्राप्त होते हैं इस लिए स्वयं अवतार लेकर भगवान् ने धर्म की रक्षा की है ।

धर्मात्मानं नरं धर्मः पाति हन्ति तथेतरम् ॥
रक्षणीयस्ततो धर्मः कल्याणेप्सु जनैः सदा ॥ ३२ ॥
धृतो धर्मेण संसारः वर्तते चिज्जड़ात्मकः ॥
तमेवं मन्यमानास्तु धर्मं रक्षन्तु सज्जनाः ॥ ३३ ॥

धर्मात्मा जन की धर्म रक्षा करता है और विपरीत का नाश करता है समस्त विश्व धर्म पर टिका हुआ है इस लिये धर्म की रक्षा आवश्यक है ।

कर्ता धर्ता यदा हानिं धर्मस्य वीक्षते प्रभुः ॥
तदा रक्षां करोत्यस्य धृत्वा रूपाण्यनेकशः ॥ ३४ ॥
हत्वा मूढ़धियस्तांस्तु समूलं धर्म नाशकान् ॥
धर्मं प्राणं नराणां च विदधाति दृढ़ांस्थितिम् ॥ ३५ ॥
वृद्धैर्निरूपिता पूर्वं पूर्वजैर्धर्म धारणा ॥
पालनीया प्रयत्नेन सुखाशा संवृतैर्नरैः ॥ ३६ ॥
नाशशीले शरीरेऽस्मिन् मृत्युनाक्रमिते किल ॥
सदा सहायकर्तायं विधेयो धर्म संचयः ॥ ६७ ॥
परलोकं यियासुं वै किंचन् नान्वेति पूरुषम् ॥
तिष्ठत्यर्थादिकं सर्वं धर्मों गच्छति केवलम् ॥ ३८ ॥
धर्मरक्षा ततः कार्या शरीरेण धनेन वा ॥
ततः सम्पत्स्यते वोऽत्र नित्या कल्याण संततिः ॥ ३९ ॥

संसार का कर्ता परमात्मा जब देखता है कि धर्म की हानि हो रही है तो अवतार लेकर दुष्टों का नाश करता है तथा धर्म की रक्षा करता है ।

जैसे पूर्वजों की आज्ञा है वैसे ही धर्म के मार्ग पर चलें शरीर नाश होने पर परलोक यात्री का सहायक केवल धर्म ही होता है इस कारण सदा सुख के हेतु धर्म धारण करो ।

सन्ध्यासु वन्दनं नित्यं कर्तव्यं नियतात्मभिः ॥
जापश्चैव यथाशक्ति कर्तव्यः शांत मानसैः ॥ ४० ॥

स्वर्गतानां च बन्धूनां कर्तव्यं श्राद्ध तर्पणम् ।।
एतदर्थं हि पित्रादेः संतति रभि जायते ।। ४१ ।।

स्वर्गवासी पूर्वजों के लिए श्राद्ध तर्पण करो सन्तान का जन्म इसी लिए होता है ।

सुखं ददाति लोकेऽस्मिन् किञ्चित् किञ्चित्परत्र च ।।
सन्तानं तूभयत्रैव कथ्यते सुख कारणम् ।। ४२ ।।
लोकान्तरं गता नूनं मानवा काल नोदिताः ।।
भक्त्या प्रजया दत्तं कांक्षन्ते श्राद्ध तर्पणम् ।। ४३ ।।

विद्वन्मान्या महात्मानो लोकान्तर निवासिनाम् ।।
कृते श्राद्धादिकं कृत्यं निर्दिशन्तीह भूरिशः ।। ४४ ।।

कोई तो यहां सुख देता है कोई वहां सुख देता है परन्तु शुभ सन्तान तो दोनों लोकों मैं सुख दायी हैं परलोक में रहने वाले पितर सम्बन्धित वर्ग से श्राद्ध की आशा करते हैं । इस कारण विद्वान् श्राद्ध का निर्देश देते हैं जिस से परलोक वासी पितर तृप्त हों ।

दुःखाक्रान्तेषु दीनेषु विधेया परमा दया ।।
तद्दुःखस्य विनाशाय सर्वस्वं स्वंवितीर्यताम् ।। ४५ ।।
आत्मीयोऽयं परो वेति दयायां नश्यति क्रमः ।।
कर्तव्या प्राणिनां लोके दयैकत्व विधायिनी ।। ४६ ।।
बाल्मीकिश्च दयां कुर्वं न्न भूदाद्यः कविः पुरा ।।
रन्तिदेवः परेशस्य दर्शनं दययाप्तवान् ।। ४७ ।।
युधिष्ठरो दया भावात् लब्धवान् भक्तिमुत्तमाम् ।।
ततः सर्वै र्दया कार्या भगवत्तुष्टि कारिणी ।। ४८ ।।

दुखी लोगों पर दया करना शुभ कर्म है श्री बाल्मीक दया से ज्ञानी बने रन्ति देव भगवान् से मिले युधिष्ठिर जी को भक्त पद मिला इसलिए दया करना जरूरी है दया करने वाले पर भगवान् प्रसन्न होते हैं ।

साधवः सन्ति ये लोके लोक कल्याण कारिणः ।।
भवद्भि रर्चनीयास्ते शुद्ध भावेन सर्वदा ।। ४९ ।।
नामदेवोऽपि संसेव्य महात्मानं तपस्विनम् ।
वंशवदं चकारेह भगवन्तं सनातनम् ।। ५० ।।

महात्मा लोगों की सेवा करनी चाहिए इससे कल्याण होता है श्री नामदेव ने साधु सेवा से ही भगवान् को अपना बना लिया ।

हिंसकानां यथायोग्यं हिंसा कार्याऽविचारतः ॥
ततः स्याल्लोकरक्षाहि सोयं धर्मः सनातनः ॥ ५१ ॥
शक्तिः शक्तिमतां लोके रक्षायै प्राणिनां मता ॥
दुष्टानां नाशनेनैव रक्षान्येषां कृता भवेत् ॥ ५२ ॥

दुष्ट लोगों का जैसे कैसे भी नाश करना चाहिये क्योंकि इस से लोक की रक्षा होती है दुष्टों के नाश से ही लोक रक्षा सम्भव हो सकती है।

कदाचित् धीवरः कश्चित् पुरुषौ द्वावजीघनत् ॥
ग्राम रक्षार्थमुद्युक्त स्ततः सिद्धि परांगतः ॥ ५३ ॥
श्रीमता रामचन्द्रेण हिंसका दूषणादयः ॥
विनाशिता स्ततोऽस्माभिः प्रवृत्तिः सैव धार्यताम् ॥ ५४ ॥

कभी किसी धीवर ने ग्राम रक्षा के कारण दो दुष्टों को मारा था इस से उसे परम पद मिला था भगवान् श्री रामचन्द्र जी ने भी इसी कारण दैत्यों को मारा तो सब को उनके अनुसार चलना चाहिए।

कुतोऽपि नैव भेतव्यं भयं भीतं न मुञ्चति ॥
चरन्तु निर्भयाः लोके सदा धर्म परायणाः ॥ ५५ ॥
वेदा वदन्ति शास्त्राणि चाप्येतदनुशासति ॥
सात्विका निर्भयाः सन्तः विचरन्ति महीतले ॥ ५६ ॥

कभी किसी से भय नहीं करना चाहिए वेद शास्त्र का यही मत है कि सात्विक लोग सदा निर्भय होकर रहते हैं।

सर्वथा सत्यमत्याज्यं मग्राह्यं चानृतं वचः ॥
सत्येन ध्रियमाणेन प्रीयन्ते सर्वदेवताः ॥ ५७ ॥
पुरा सत्य व्रतो भूपः सत्यं मेने परात्परम् ॥
हरिश्चन्द्रो महाराजः सत्ये सर्वं जुहावच ॥ ५८ ॥
करोति यो जनः कश्चित् मनोभावं गिरान्यथा ॥
स ज्ञातव्यो महाचौरो मृषावादी नराधमः ॥ ५९ ॥
सत्येन धार्यमाणं च वर्तते निखिलं जगत् ॥
सर्व काम दुध स्तस्मात् सत्यस्य धारणामता ॥ ६० ॥

आप लोग सत्य का त्याग कभी न करें तथा झूठ का ग्रहण भी न करें इतिहास में सत्य व्रत हरिश्चन्द्र आदि का सत्य प्रेम प्रगट है झूठा व्यक्ति महा चोर होता है वह विशाल विश्व सत्य पर ही टिका है। इस लिये सब कामनाओं को पूर्ण करने वाले सत्य को धारण करना आवश्यक कहा गया है।

वंशधाराभिलाषिण्या मात्रा संप्रेरितो भृशम् ॥
भीष्मः प्राणात्प्रियं सत्यं कथंचिदपि नाजहात् ॥ ६१ ॥
विवादस्य विनिर्णेता विरोचन सुधन्वनोः ॥
प्रह्लादोऽपि ब्रुवन् सत्यं पुत्र रक्षां चकारह ॥ ६२ ॥
यथार्थं भाषणं वेदे गीयते वाङ्मयं तपः ॥
तपस्विनि महाशक्तिः भवतीति सतां मतम् ॥ ६३ ॥
सत्यं सदा धृतं पूर्वैः धृतं पूर्वतरै स्तथा ॥
भवद्भिर्धारणा तस्य कर्तव्या सततं दृढ़ा ॥ ६४ ॥

वंशधारा को स्थिर रखने के कारण माता के द्वारा प्रेरित श्री भीष्म जी ने सत्य का त्याग नहीं किया था प्रह्लाद ने भी विरोचन वा सुधन्वा के निर्णय में सत्य का पालन किया सत्य भाषण एक तप है इससे बहुत बल मिलता है । अतः पूर्वज परम्परा के अनुसार आप सब सत्य को धारण करें ।

चौर्यं कर्म सदा हेयं यस्य कस्यापि वस्तुनः ॥
महापापं हि पापेषु चौर्यं कर्म प्रकीर्तितम् ॥ ६५ ॥
लोभाविष्टा नरा लोके चौर्यं कर्म चरन्ति ये ॥
ते हन्त नरकं यान्ति महाघोरं व्यथाकरम् ॥ ६६ ॥

चोरी किसी वस्तु की न करना चाहिए कारण यह महापाप है लोभी लोग चोरी करते हैं परन्तु परिणाम में नरक में कष्ट पाते हैं ।

काम क्रोधादयः सन्ति दोषा निरय हेतवः ।
ततस्त्यागः सदैवैषां कर्तव्यो योग्य मानवैः ॥६७॥
यो जहाति जनश्चैतान् काम लोभादिकान् किल ।
स गच्छत्यलयं श्रेयः कृतार्थो जायते ततः ॥६८॥
काम क्रोधावृताश्चान्ये महामूढ़धियो नराः ।
भजन्ते सर्वथा गोर्थान् शब्द रूपादिकान् खलु ॥६९॥
मायया वञ्चिताश्चैते तत्वबोधबिवर्जिताः ।
तादृशे निरये यान्ति यतः शक्या न निर्गतिः ॥७०॥
बहुशो धर्मशास्त्रेषु विस्तरेण निरुपिता ।
परस्वापहृतिर्लोके महापीड़ा करी नृणाम् ॥७१॥

काम क्रोध आदि दोष नरक में ढालने वाले हैं इनका त्याग करने से ही कल्याण होता है । इनके वश हो जो लोग भोग भोगते हैं वे माया द्वारा ठगे हुए हैं ।

नरक के भागी हैं पराया धन लेने से पीड़ा ही होती है । धर्मशास्त्र में इस बात को विस्तार से बताया गया है ।।

ब्रह्मचर्यं सदा धार्यं चातुराश्रमिकै रपि ।
तेनोपजायते शक्तिह्र्यमोघासिद्धिदायिनी ।।७२।।
लक्ष्मणेनापि लंकायां मेघनादो बली हतः ।
ब्रह्मचर्यं प्रभावोऽयं दुर्जयो दिविजै रपि ।।७३।।
विधाता धर्मरक्षायाः हनुमान् राम सेवकः ।
ललङ्घे सागरं घोरं ब्रह्मचर्य प्रभावतः ।।७४।।

सब के लिये ब्रह्मचर्य रखना आवश्यक है इससे शक्ति मिलती है लक्ष्मण जी ने ब्रह्मचर्य के बल से मेघनाद को मारा तथा हनुमान् जी ने सागर को पार किया । ब्रह्मचर्य्य से बहुत बल प्राप्त होता है ।

धैर्यं विपत्सु संपत्सु निर्मानत्वं स्व बन्धुषु ।
क्षमा कार्या सदा सद्भिः भवद्भिः शुभकाङ्क्षिभिः ।।७५।।

विपदा में धैर्य तथा सम्पदा में निर्मान होना और बन्धुओं में आपको क्षमावान् होना चाहिए ।

दुष्टानां संगतिर्हेया विधेया साधुसंगतिः ।
इमे हि नरक स्वर्ग बीजे शास्त्रेषु भाषितम् ।।७६।।

दुष्टों की संगति कभी न करें तथा साधुओं की संगति अवश्य करें ये दोनों नरक स्वर्ग का कारण हैं ।

मांसाहारे सुरा पाने द्यूतेथ पण्ययोषिति ।
भवेन्नैव प्रवृतिर्वो निवृतिः श्रेयसी मता ।।७७।।
बुद्धिशुद्धिर्भवेत् तस्मात् बुद्धया लोको विजीयते ।
प्राप्नुवन्ति परं श्रेयो बुद्धिमन्तो नरोत्तमाः ।।७८।।
यः करोति विचारेण भोजनादि क्रियां नरः ।
विपदस्तस्य नश्यन्ति संपदस्तं श्रयन्ति च ।।७९।।
वृद्धवाक्यानुसारेण धर्मशास्त्रदिशाऽपि च ।
व्यवस्थैषा विधातव्या नित्यभूति विधायिनी ।।८०।।

मांस-मद्य का त्याग करना शुभ है इससे बुद्धि शुद्ध होती है और बुद्धि से ही लोक में जय होती है विपदा का नाश वा सम्पदा की प्राप्ति भोजन आदि के विचार

से होती है इसलिये ऐसी व्यवस्था करनी चाहिए जिससे नित नई विभूति प्राप्त होती है वृद्ध जनों ने इसी प्रकार बताया है।

कार्या भगवतो भक्तिः, भवद्भि रनयायिनी ।
तयैव जन्मसाफल्यं जीवानां जायते ध्रुवम् ।।८१।।
अन्नक्षेत्रं तथावश्यं विधेयं च प्रयत्नतः ।
यत्रागता लभेरन् वै निवासं भोजनं सुखम् ।।८२।।
प्रत्यहं होम सामग्र्या होतव्यो हुतभुक् तथा ।
देशशान्ति विधानाय होमः शास्त्रे निरुपितः ।।८३।।

अपने जीवन की सफलता के लिए भक्ति करनी चाहिए अतिथि के निमित अन्नक्षेत्र की व्यवस्था भी हो प्रतिदिन अग्नि होत्र भी करना उचित है। होम से सारे देश में शान्ति बनी रहती है।

यथा नन्याश्रया वाला मातरं पर्युपासते ।
सर्वं काम दुहं होमं भजन्तां मानवा स्तथा ।।८४।।
शास्त्र रीत्या प्रणीतेन तेन तुष्यन्ति देवताः ।
तुष्टाः कुर्वन्ति कल्याणं सर्वशः सार्वलौकिकम् ।।८५।।
सर्वं शास्त्र रहस्यज्ञैः कीर्तितो बहुधा बुधैः ।
होमो हि श्रेयसां हेतुः कर्तव्यः स जनैः सदा ।।८६।।

जैसे शिशु केवल माता का सहारा लेते हैं वैसे ही सभी होम का आश्रय लें इससे देवता प्रसन्न हो कर व्यापक कल्याण करते हैं होम को परम सुख का कारण समझ कर करना चाहिए बुद्धिमान् एवं विद्वान् लोगों ने इसी प्रकार कहा है।

सर्वस्मात् वस्तुनो ग्राह्या गुणा एव न दूषणम् ।
गृह्णात्यलिः सरोजेभ्यः सौरभं नतु कण्टकम् ।।८७।।
यथा हंसो विहायापो दुग्धं गृह्णाति युक्तितः ।
तथा दोषं परित्यज्य गुणमेवेह गृह्यताम् ।।८८।।
प्रायशो बासना वातैः मनोऽनर्थेषु धावति ।
विचाराभ्यास यत्नाभ्यां कर्तव्यं तस्य रोधनम् ।।८९।।

सभी वस्तुओं से गुण लेना चाहिये जैसे भ्रमर फूलों से सुगन्ध लेता है जैसे हंस पानी को त्याग दूध पीता है बुरे मार्ग में जाने पर मन को रोकना आवश्यक है।

रहस्यं शास्त्राणां श्रवणसुरतेभ्यः सरलया ।
सरण्यासन्नेभ्यः परमसुख लाभाय स जगौ ॥
जनास्ते श्रोतारो विमलमतयस्तुष्टहृदयाः ।
कृतज्ञाः साष्टाङ्गां प्रणतिततिं मस्मै च विदधुः ॥९०॥

श्रोता लोगों को सरल रीति से महात्मा जी ने शास्त्रों का रहस्य कहा वे लोग सुन कर बहुत प्रसन्न हुए तथा महात्मा जी के प्रति साष्टांग नाति से कृतज्ञता प्रगट की।

इति नर जन्म लाभोपदेशो नाम षष्ठः सर्गः ।

---

# अथ तीर्थयात्रा वर्णनं नाम सप्तमः सर्गः ।

कदाचिदेतस्य सतोऽभिलाषा तीर्थाटनायाथ बभूव तीव्रा ।
तीर्थानि रम्याणि यियासुरेष भक्तान् समाहूय जगाद वाक्यम् ॥ १ ॥
अस्त्येव सर्वत्र हरिः पयोवत् स लभ्यते तूधस एव तीर्थात् ।
इत्येष तीर्थानि दिदृक्षु राह भक्तान् स्व हार्दं विशदं कदाचित् ॥ २ ॥

किसी समय महात्मा जी के मन में यह अभिलाषा हुई कि तीर्थयात्रा करें तो अपने जिज्ञासु वर्ग से कहा कि व्यापक भगवान् की प्राप्ति तीर्थों द्वारा ही होती है अतः यात्रा का विचार है।

वचो निशम्यास्य तदा जगुस्ते निबद्ध हस्ताञ्जलयस्तु भक्ताः ।
स्वामिन्नभीष्टं गमनं मतं चेत् तद् गम्यता माशु निवर्तनाय ॥ ३ ॥
यानं त्वदर्थं वयमानयाम स्तस्मिन् समारुह्य सुखं प्रयाहि ।
कथा प्रसंगेषु कदाचिदेते नीत्वा स्मृतिं नाथ सनाथनीयाः ॥ ४ ॥

उनके ऐसे शब्द सुन कर भक्त लोगों ने कहा कि महाराज आप यात्रा करते हुए हमें भी स्मरण रख कर कृतार्थ करना हम वाहन लाते हैं उसके द्वारा यात्रा करें।

सम्प्रार्थितस्तैः सुजनैस्ततोऽसौ दयापरस्तान् प्रणतान्नुवाच ।
पदातितैवात्र विवेकवद्भ्यः तीर्थाटने भद्र शतानि दत्ते ॥ ५ ॥
पदैर्गमिष्यामि ततोऽन्ययानं नापेक्षते मे गमनाय किञ्चित् ।
पादारविन्दं परमेश्वरस्य रामस्य यूयं सततं भजध्वम् ॥ ६ ॥
चेतो मलानामपहारकेषु तीर्थेषु तस्यैव समीहयाऽटन् ।

द्रक्ष्यामि युष्मान् पुनरेत्य सौम्याः सत्संग गंगारससारविज्ञाः ॥ ७ ॥
इतोरयित्वा पुरतः स्थितेभ्यः संप्रस्थितोऽभीष्टदिशं महात्मा।
भक्तै रनेकैरनुगम्यमानः प्राप्तः कटाक्षाख्य वरेण्य तीर्थम् ॥ ८ ॥

उनकी बात सुनकर महात्मा जी ने कहा कि तीर्थ यात्रा पैदल ही अच्छी होती है तीर्थयात्रा के पश्चात् फिर आप लोगों के दर्शन होंगे इतना कह कर वह प्रथम श्री कटाक्षराज में पहुंचे।

कटाक्षराजर्षिकुलाश्रमेशं, विरक्तासन्यासिकुलावंतसम् ।
ददर्श योगीश वरं स नित्या, नंदाभिधानेन सुशोभमानम् ॥ ९ ॥
स्थानस्य टालीसाहिबाभिधस्य, मान्यो महान्तः किल यो यतीशः।
अध्यात्मिकीं ज्ञानमयीं सुवार्ता शान्त्यै चिरं तेन समं चकार ॥ १० ॥

कटाक्षराज में ऋषिकुल के अधिष्ठाता तथा टाली साहब स्थान के महन्त श्री स्वामी नित्यानन्द जी से चिर तक आध्यात्मिक विचार किया।

स्नात्वा ह्रदे तत्र विशेष शुद्धे शुद्धोऽप्यं नित्यविधि विधाय।
वृन्दावनं रम्यतमं दिदृक्षुर्यातोमुदा प्रेम परस्ततोसौ ॥ ११ ॥
दिनैस्तु कैश्चित् सुषमालयं तं प्राप्तौ व्रजं शान्तिमयं प्रदेशम्।
यमानुजा यत्र चलत्तरंगैः शब्दायमानैर्मरुतः सुवेगात् ॥ १२ ॥
मत्तेव तीराण्यसकृत्क्षिपन्ती मनोमहोद्वेग मुदोरयन्ती ।
राधां व्रजेन्दुं परि कीर्तयन्ती विभाति मीरेव मुदा लुठन्ती ॥ १३ ॥

स्नान करके वहां से वृन्दाबन की ओर चले कुछ दिनों में पहुंचे वहां यमुना इधर उधर तरंग फेंकती हुई संकीर्तन में मस्त मीरा की तरह मालूम होती थी।

वन्यः मयूरा मधुरैः स्वशब्दैः राधाव्रजेशौ बहुशौ रटन्तः।
नृत्यन्त उद्दामनिकाम रम्यं कर्षन्ति नृणां हृदयं प्रसह्य ॥ १४ ॥
तरोस्तरुं कीशगणा पतन्तः लीलां मनस्तोषकरीं चरन्तः।
राधां जपस्वाथ भजस्व कृष्णं परस्परं वादपरा इवासन् ॥ १५ ॥
मरुच्चलाभिस्तरवोऽपि मन्दं मन्दं स्वशाखाभिरतीव रम्याः ।
राधा यशोदा ललनो रटन्तो भान्तीत्र संकीर्तन माचरन्तः ॥ १६ ॥
कृषीवला कर्षण कर्म रक्ताः क्षेत्रेषु वीजानि करैः किरन्तः ।
हे कृष्ण राधे नवनीतचौरे त्याप्तेऽवकाशे सुतरां रटन्ति ॥ १७ ॥
गोदोहनेऽपीह मनोरमोऽयं किं श्रूयते श्रोत्रसुखो निनादः ।
दिशोऽपि गोपालविलासमय्यो भान्ति स्म सर्वाः किमुताधिकेन ॥ १८ ॥

वहां जाकर देखा बन में मोर राधा कृष्ण रटते थे पेड़ों पर बानर और स्वयं पेड़ संकीर्तन करते दिखाई देते थे कृषक गोपाल भी कृष्ण २ कहते थे, तथा चारों दिशाओं में यही ध्वनि सुनाई देती थी। गो दोहन के समय में यही मधुर शब्द सुनाई देता था अधिक क्या कहा जावे सभी दिशाएं गोपाल जी की प्रेम लीला से पूर्ण दिखाई देती थीं।

पश्यंस्तु तं भक्तिमयं सुदृश्यं गतो विशुद्धे यमुना तटेऽसौ ।
समावृते चारुगवां समूहैः योगीश सर्वैः परि सेव्य माने ॥ १९ ॥
तस्याः सतां चेत इवाति शुद्धं जलं प्रविश्याथ निमज्जय सम्यक् ।
स्नात्वोपविष्टः प्रवरासने सौ निवेशयामास मनो मुरारौ ॥ २० ॥

इस प्रकार सुन्दर दृश्य को देखते हुए यमुना तट पर आए और पवित्र जल में स्नान किया ध्यान किया यमुना का तट गौओं के समूह तथा योगी जनों के वृन्द से सुशोभित था।

ततः समुत्थाय महानुभावो वंशीवटे रासविधिंददर्श ।
यो गोप गोपो नित्रहानुकृत्या सद्बुद्धिभिबालगणै रकारि ॥ २१ ॥
द्रष्टुं गतः सुन्दर मन्दिरेषु कृष्णस्य रूपाणि मनोहराणि ।
दृष्ट्वा सदानन्द मयानि तानि मग्नश्चिरायैष सुखाब्धिमध्ये ॥ २२ ॥

इसके पीछे वंशीवट में रासलीला देखी जो बालकों द्वारा की गई थी फिर मन्दिरों में श्री कृष्ण जी महाराज के सुन्दर दर्शन का आनन्द लिया और चिरकाल तक यह महापुरुष आनन्द के सागर में मगन रहे।

तत्राध्युषित्वा कतिचिद्दिनानि रसं समास्वाद्य गिरामगेयम् ।
सन्तोष्य चेतांसि ब्रजौकसां च सूक्तैः प्रयातुं स ततश्चकाङ्क्ष ॥ २३ ॥
विलोकयन् चारुतराणि नाना तीर्थानि मार्गे किल पाद चारी ।
समुद्र कुक्षा वथ शोभमानां श्री द्वारिकां प्राप मुनीशमान्यः ॥ २४ ॥

इस प्रकार वहां कुछ दिन रह कर यात्रा के लिए आगे चले मार्ग में अनेक तीर्थों का दर्शन करते हुए क्रम से श्री द्वारिका पहुंचे।

मुद्रा सुतप्ता मनुजा हि केचित् हस्तैर्गृहीत्वा किल वैष्णवीयाः ।
तांद्रष्टु कामांश्च समाह्वयन्ति श्रद्धावतो यात्रिजनान् सहर्षम् ॥ २५ ॥
हे हे नराः मान्यवरा शृणुध्वं शंखादिमुद्रांकित बाहवोऽत्र ।
विशन्तु देवालय दर्शनाय सर्वेषु तुल्यो नियमो यतोऽयम् ॥ २६ ॥
निशम्य तेषां वचन तदानीं शुद्धे समुद्राम्भसि संप्रविश्य ।
स्नात्वास मुद्रांकितबाहुरीशं द्रष्टुं प्रविष्टो वरमन्दिरेऽस्मिन् ॥ २७ ॥

वहां तपी हुई मुद्रा हाथ लेकर कुछ सेवक यात्रियों को बुलाते थे कि मुद्रा का चिह्न लेकर मन्दिर में प्रवेश करो श्री महात्मा जी ने भी वैसे किया सागर में स्नान करके शंख चक्र गदा पद्म आदि मुद्रा लगवा कर दर्शन के लिए मन्दिर में प्रवेश किया।

दृष्ट्वा प्रसन्नो भगवन्तमेवं मृदं समादाय वरां ततोऽथ ।
क्षाराम्बुधेर्लोल तरंग जालं पश्यन् प्रतस्थेऽन्य वरेण्य तीर्थम् ॥ २८ ॥
चलंस्ततः कैश्चिदहोभिरेवं रामेश्वरं रम्यतमं जगाम ।
सस्मार रामस्य पुरातनीं तां मायामनुष्यस्य कथां विचित्राम् ॥ २९ ॥
श्री राम धन्योऽसि नृवेषधारी स्वधर्मशिक्षां वितरन् जनेभ्यः ।
नाना विधानीह करोषि लोके कर्माणि धर्म्याणि जगद्धितानि ॥ ३० ॥
स्नानं विधायाथ जलं पवित्रं. तदाशुतोषाय समर्प्य भक्त्या ।
पूजां शिवां शास्त्र कथानुसारं शिवाय शिवतुष्टिकरीं चकार ॥ ३१ ॥

मन्दिर में भगवान् के दर्शन किये गोपीचन्दन लेकर सागर तरंग देखते २ आगे चले कुछ दिनों में रामेश्वर पहुंच कर भगवान् राम की पुरानी पवित्र कथा स्मरण की और मंगलमयी शिवजी की पूजा की जैसा कि शास्त्रों में शंकर जी की सन्तोष जनक पूजा का विधान बताया गया है।

तीर्थान्तरं तीर्थपदात्सगच्छन् भ्रमन् सलीलं सकलेऽपि देशे ।
संदृष्टवानिष्ट समर्पकानि रम्याणि तीर्थानि बहूनि सोयम् ॥ ३२ ॥
श्री रामचंद्रस्य विहारभूमिं रम्यामयोध्या नगरीं ज गाम ।
श्री वैष्णवा यत्रा सदा भजन्ते रामं ससीतं भरतादि सेव्यम् ॥ ३३ ॥
यदंतिके कच्छप वृन्दमन्त स्तरंगमालासु सुखं बहन्ती ।
मातेव कुक्षौ पृथुकान्निधाय विराजते सा सरयू रयेण ॥ ३४ ॥
स्नानेन तस्यां परमं सुखं च स्वामी समादाय चिराय भूयः ।
विलोक्य रामं सह लक्ष्मणं स गन्तुं ततोऽन्यत्र समिच्छतिस्म ॥ ३५ ॥

परम प्रेम से इसी प्रकार अनेक तीर्थों की यात्रा करते २ श्री अयुध्यापुरी में पहुंच कर श्री सरयु नदी में स्नान किया और श्री सीता लक्ष्मण सहित भगवान् राम का शुभ दर्शन किया वहाँ कछुओं को प्रवाह में धारण करने से सरयू नदी को कोख में बच्चों को धारण करने वाली माता जैसे देखा।

काशीपुरी तेन गता क्रमेण विराजते यत्र स विश्वनाथः ।
शोभामपूर्वां भवसार भूतां स्वस्मिन् समारोप्य दयानिधानः ॥ ३६ ॥
यस्य प्रभावेण तनुं विहाय नीचातिनीचा अपि यान्ति मुक्तिम् ।
दग्ध्वा पुराजन्म कृतानि देहैः समं स्व पापानि महान्त्यपीह ॥ ३७ ॥

आगे यात्रा के क्रम से काशीपुरी में आए जहां विश्वनाथ विराजमान हैं जहां नीच से नीच भी मुक्त हो जाते हैं और शरीर के साथ २ पुराने जन्मों के सभी कर्म भी भस्म हो जाते हैं।

शाखासु शाखासु सुखं तरुणां मयूरकीरादिविहंगवृन्दम् ।
परस्परं यत्र निषीददार्य शास्त्रीय चर्चां कुरुते सहर्षम् ॥ ३८ ॥

गंगाप्रवाहे बहमान नौका शितेषु रूढ़ा पुरुषाः स्त्रियश्च ।
लोके तदीयां भवतारणार्हां शक्ति परीक्षन्त इवावभान्ति ॥ ३९ ॥

यस्यास्तटे संस्कृतपाठिवर्गः रटन् परीक्षागत पुस्तकानि ।
उत्तीर्णतां लब्धु मिवात्र तिष्ठन् संपश्यतीवोत्तरतो मनुष्यान् । ४० ॥
रुद्राक्षमाला स्वकरेषु धृत्वा तस्यास्तटे मन्दतरं चरन्तः ।
केचित्महास्थूल शरीरभारखिन्नाः शिवस्येव गणा विभान्ति ॥ ४१ ॥
भालेषु घृष्टं हरिचन्दनं च विप्रा न्यसन्तः किल यात्रिकाणां ।
बैकुण्ठ राज्यं भवतां प्रदद्म-इतीव मन्ये कथयन्त्युपांशु ॥ ४२ ॥

जहां शाखाओं पर बैठे पक्षी आपस में शास्त्र की चर्चा करते हैं गंगा की धारा में नौका पर बैठ कर यात्री परम सुख प्राप्त करते हैं जिसके तट पर विद्यार्थी सुख से पाठ याद करते हैं विप्र लोग चन्दन मस्तक पर लगाते हुए आशीर्वाद देते हैं कि आप को बैकुण्ठ लोक प्रदान करते हैं रुद्राक्ष की माला फेरते स्थूल देह वाले भक्त शिवजी के गण मालूम होते थे।

वृषा नदन्तश्च महानिनादं पुरीं मनोज्ञां परितो भ्रमन्तः ।
शिवस्य चैषा शुभ राजधानो विदेशिनस्तेत्विति सूचयन्ति ॥ ४३ ॥
पश्यंस्तदानीं नगरीं शिवस्य नाना प्रकारां रमणीय दृश्याम् ।
स्नानाभिलाषी तटिनीं जगाम तरंग भंगालि विराजमानाम् ॥ ४४ ॥

सोपान मार्गाद्विनिविश्य तस्यां सस्नौ सुखं शुद्धपयः प्रवाहे ।
तरंगबाहूंस्तरलान् प्रसार्य मातेव गंगाऽप्यमुमालिलिङ्ग ॥ ४५ ॥
ततस्दीयं सलिलं सुपात्रे मुदा गृहीत्वा शिव दर्शनाय ।
कैश्चिन्मनुष्यै रनुगम्यमानो हृष्टो ययौ मन्दिर मेव तस्य ॥ ४६ ॥
मायाश्रयेणैव न वस्तुतस्तं विभिन्नभावेन विराजमानम् ।
शिवं शिवासेव्यतमं गिरीशं ननाम नम्रः शिवभक्तिमग्नः ॥ ४७ ॥

जहां वृषभ गर्जते हुए शिवजी की राजधानी से यात्रियों को सूचित करते हैं।

श्री गंगा जी में जाकर स्नान किया और गंगा का पवित्र जल लेकर मन्दिर में दर्शन किये प्रणाम किया शिवजी के शुभ दर्शन के समय कुछ श्रद्धालु भक्त जनों ने पूज्य महात्मा जी का अनुसरण किया और परम सन्तोष प्राप्त किया।

स पुष्प दुग्धं सलिलं तदानीं तस्मै वरेण्याय समर्प-यित्वा ।
प्रीत्या परिक्रम्य विधाय पाठं पुनः पुनस्तं सतृषं ददर्श ॥ ४८ ॥

तस्याकृतिं वीक्ष्य विवेकशीलाः सत्पण्डिताश्चेतसि तर्कयन्तः ।
योगीश्वरोऽयं किमुमेश्वरोय मितीव तस्मै बहुशः प्रणेमुः ॥ ४९ ॥

स्वामी जी ने विधि पूर्वक जल शिवजी पर चढ़ाया तथा श्रद्धा से देवकी परिक्मा की पाठ किया वहां पर जो योग्य पण्डित थे वह बार बार प्रेम से इनको देख कर सोचने लगे कि यह योगीश्वर हैं क्या या स्वयं भगवान् शंकर हैं इस विचार से बहुत बार इनको प्रणाम किया।

संप्रस्थितः सोऽपि महातपस्वी तीर्थान्तरं द्रष्टुमितः सुखेन ।
विलोकयन् मार्गगतं सुदृश्यं प्राप्तो गयायां मृत तारिकायाम् ॥ ५० ॥

योग्यं च तत्रापि विधिंविधाय धर्म्यां प्रणालीं नवलां प्रदाय ।
सद्दुं मृतेभ्यः परितः पितृभ्यः ददर्श पिण्डान् ददतो मनुष्यान् ॥ ५१ ॥

ततो जगन्नाथ पुरीं दिदृक्षु रग्रे प्रयाणं स सुखं चकार ।
गत्वा मनोमोद करीं पुरीं तां दृष्ट्वा प्रसादं परमं जगाम ॥ ५२ ॥

फिर आगे यात्रा करने लगे दर्शन की आशा से गया में गए जहां श्रद्धालु मृतकों के हित वास्ते पिंड दान करते हैं वहां से श्री जगन्नाथ पुरी के शुभ दर्शन किये।

कृत्वा यथायोग्य विधिं महात्मा साक्षाद्विधातुं जगतां पतितम् ।
देवालयं दुष्कृतिना मदृश्यं जगाम मान्यो विदुषां वरेण्यः ॥ ५३ ॥

सिंहासनस्थं च निरीक्ष्य देवं सौन्दर्य सीमा चर चारु रूपम् ।
पद्यात्मकैः स्तोत्र गणैः परेशं तुष्टाव भक्त्या प्रतिभापरीतः ॥ ५४ ॥

तद्देश भूतानि तथा वलोक्य तीर्थान्तराण्येवमभिज्ञमुख्यः ।
समाददानश्चरणो दकानि नैवेद्य शेषांश्च जगाम सोऽग्रे ॥ ५५ ॥

समुद्र तीरे गिरि कन्दरासु यान्येव तीर्थानि जन श्रुतानि ।
रसां समग्रां पद पंकजा भ्यां समङ्कयन्नैष ददर्श तानि ॥ ५६ ॥

श्री जगन्नाथ जी के मन्दिर में दर्शन किये तथा श्लोकों द्वारा स्तुति की फिर दूसरे तीर्थ पैदल चलते २ देखे सब जगह चरणामृत लिया परम शांति प्राप्त की।

धन्या स्म इत्येनमखंडयात्रं महा महोराशिमिवस्थितं तम् ।
आशासु सर्वासु विलोक्य लोका व्यचिन्तयँस्तीर्थनिवासिनो हि ॥ ५७ ॥

यात्रा प्रकारः किमु वर्णनीयः तस्याल्पधी योगवता नरेण ।
पंचाब्द मात्रं समयो व्यतीतः पादाब्जयानेन महात्मनोस्य ॥ ५८ ॥

पश्यन् दिशामेष महावकाशान् प्राप्तो हरिद्वार पवित्र तीर्थम् ।
ददर्श गंगां रमणीय दृश्यां जहर्ष चित्ते च स सौम्य मूर्तिः ॥ ५९ ॥

तटे स्ववेषं तु विधाय भद्रं पुष्पाणि चादाय सुगन्धितानि ।
गंगा नितान्तं जयतीति वाचा भ्युच्चा रयन् चारु जले ममज्ज ॥ ६० ॥

परम तेजस्वी इन को देख २ कर सभी लोगों ने अपने को धन्य माना। यात्रा का वर्णन वाणी द्वारा नहीं किया जा सकता। इसी यात्रा प्रसंग में हरिद्वार पहुंचे भद्र होकर जय गंगे का घोष कर स्नान किया।

ध्यानं चकाराथ तथोपविश्य रामस्य संसार हितावहस्य ।
साँसारिकान्पुण्य पथि प्रणेतुं, धृतोऽवतारो मनुजस्य येन ॥ ६१ ॥
विप्रांस्तटेस्या स्तु तदोपवेश्य वेदादिविज्ञान् सरल स्वभावान् ।
तपः प्रभावेण विवर्धमान सद्ब्रह्म वर्चः प्रचयान् विनम्रान् ॥ ६२ ॥
मिष्टान्नपानाद्युपयोगि भोज्य, मानीय पक्कानि तथा फलानि ।
तेभ्योऽददात् प्रीति परो महात्मा सुदक्षिणां चापि ददौ सहर्षम् ॥ ६३ ॥
कुम्भस्य वेला मवलोक्य लोका देशान्तरेभ्यो बहवः समेताः ।
वासो विधेयः क्व नु सम्प्रतीह मयेति चिंताभ्युदियाय तस्मिन् ॥ ६४ ॥
विभावयंश्चैव मिमं सुभावं विनिश्चयं कंचिदवाप युक्तम् ।
गव्यूति मात्रान्तरितोऽस्ति रम्यो वराश्रमो यत्र वसन्ति सन्तः ॥ ६५ ॥
मान्यो निरीकारिक सम्प्रदायो यत्राधिकारं कुरुते सदैव ।
ख्यातोऽवधूताश्रम संज्ञया यः स्वर्गोपमो वै जगतीतलेऽस्मिन् ॥ ६६ ॥

कुम्भ मेला के कारण यात्री बहुत आए थे महात्मा जी के मन में निवास के लिए स्थान का विचार हुआ तब श्री अवधूत मण्डल आश्रम की ओर ध्यान गया।

उदासि संन्यासि मुखा समस्ता श्रीवैष्णवा धर्मवतां धुरीणाः ।
कबीर पंथानुगतास्तथान्ये सुकेशिनो निर्मल संप्रदायाः ॥ ६७ ॥

दादूमहात्मान मनूदिताश्च सन्तस्तथान्येऽपि गुण प्रपूर्णाः ।
बाला युवानो वयसाथ वृद्धा वसन्ति सर्वे सुखिनो किलात्र ॥ ६८ ।

शास्त्रीयविद्यां पठितुं तथाहि समागता दूर दिगन्तरेभ्यः ।
विद्यार्थिनो यत्र पठन्ति विद्यां लब्धाश्रयान्नादि शुभव्यवस्थाः ॥ ६९ ॥

उदासी सन्यासि सभी सम्प्रदाय के महात्मा वहां रहते हैं तथा विद्यार्थी गण सुन्दर व्यवस्था होने के कारण वहां रह कर विद्या पढ़ते हैं।

सूदाः शुभान्नानि विधायनित्यं रामाय सीता सहिताय चार्प्य ।
मध्याह्न कालेऽथ निशा प्रवेशे महात्म वर्गानिह भोजयन्ति ॥ ७० ।
अभ्यागता दीनजनास्तथान्ये सहस्त्रशस्तत्र सुसत्क्रियन्ते ।
संचालका सच्चरिता सुशीला वसन्ति सन्तः पुनराश्रमेस्मिन् ॥ ७१ ॥
सर्वाश्रयत्वात्किल पक्षपातं विना जनानां श्रमनाशनाच्च ॥
सामान्य नामाश्रम इत्यमुष्य बभूव सार्थं त्विदुषां प्रशंस्यम् ॥ ७२ ॥
प्राकाशमाना च निशावकाशे विद्युल्लता यस्य चतुर्विभागे ॥
विज्ञानदायित्वमिवाब्रवीति तस्यागतेभ्यस्तु दिगन्तरेभ्यः ॥ ७३ ॥

वहां रसोईये भोजन भगवान् को भोग लगा कर महात्मा लोगों को भोजन कराते हैं और हजारों का जहां सत्कार होता है जिसके संचालक बड़े पवित्र हैं वास्तव में यह सफल आश्रम है चारों ओर प्रकाशवान् बिजली जिसे ज्ञानदाता सूचित करती है।

प्रफुल्ल पुष्प स्तबकानताभि लताभिराढ्यं फलितैः द्रुमैश्च ।।
तस्यान्तरस्थोवपनं विभाति श्री नंदनामर्त्य वनायमानम् ॥ ७४ ॥
संतोष भावेन सदावितृप्तैः लोकैषणादि त्रितयातिरिक्तैः ।
सुरोपमैः साधुजनै स्तथाहि स्वर्गयमानः सततं विभाति ॥ ७५ ॥
इतः परस्तस्य कथं हि वाच्यो भावो महिम्नो मनुजेन वाचा ।
यान्तीतराशा ममरापगापि तदाश्रमाशां परि वर्तते यत् ॥ ७६ ॥

वेल या वृक्षों से सजा हुआ बगीचा नन्दन बन की तरह सुन्दर हैं श्री गंगा इस के प्रभाव से इस दिशा को आई है।

इत्थंविचार्यैष महानुभावः तमाश्रमं प्राप निवासकांक्षी ।
नम्रः समुत्तस्थु रमुं विलोक्य तद्वासिनः सांजलयोऽतिमानात् ॥ ७७ ॥
तत्ते जसा कृष्ट मनःप्रावाहा योगीश्वरं तं हृदि मन्यमानाः ।
विनम्य भूमावखिलाः शिरांसि प्रणेमु रेनं श्रित पाद मूलाः ॥ ७८ ॥
मध्ये स्थितः सोऽपि तदा बहूनां कान्त्या महत्यास्म तथा विभाति ।
आकाशतारासु यथा निशायां विभाति पूर्णः सुभगः शशाङ्कः ॥ ७९ ॥

तास्तु तत्रैव चिरं निवासं चकार भक्ताभिमतं कुटीरे ।
कथा प्रसंगेन ततः कदाचित् मीमांस्यमानेषु सतां मतेषु ॥ ८० ॥

ऐसा विचार करके निवास के लिए वहां आए आने पर पूर्ण सत्कार हुआ वहां चिर तक इन्हों ने निवास किया एक दिन भिन्न २ मतों पर रहस्य निर्णय के कारण मीमांसा हुई ।

उवाच कश्चित् किल संप्रदायाः सन्त्येव संमान्यतमा यतीनाम् ।
सर्वोत्तमस्तेषु विवेचनीयः सामान्य संसार हिताय कोऽस्ति ॥ ८१ ॥
देशान्तराभ्यागत सज्जनाना मन्यत्र वातत्र कृताश्रयाणाम् ।
विचारणैषा पुरतो बुधानां प्राप्ता विशेषेण बिनिश्चयाय ॥ ८२ ॥
सर्वै र्यथायोग्यतया विचार्य मतं स्वकीयं परि दर्शितंवै ।
युक्ति प्रमाणैर्विविधैश्च सद्यः दृढ़ीकृतं लोक समादराय ॥ ८३ ॥
दोलायमानानि मनांसि तत्र निशम्य जातानि तदा नराणाम् ।
नैकेषु युक्त्या सुदृढ़ीकृतेषु श्रद्धेय पक्षं किल निर्णयेत्कः ॥ ८४ ॥

किसी ने कहा कि अनेक सम्प्रदाय विद्यमान हैं परन्तु सामान्य रूप से किस का ग्रहण हो । ऐसा प्रश्न होने पर सब ने अपने २ विचार प्रगट किये परन्तु साधारण तया एक का निश्चय नहीं हुआ ।

चिरं विचिंत्याथ जनास्तदीयं विनिर्णय लब्धुमतीव सोत्काः ।
तूष्णीं समासीन मिमं विलोक्य निवेदयामासु रिमे विदंतम् ॥ ८५ ॥
हे तत्व दर्शिन्त्वयि विद्यमाने वृद्धे जगन्मान्य महानुभावे ।
कः संशयं नः प्रभवेत्प्रहर्तुं ज्योति र्यथान्यत् सति तिग्म रश्मौ ॥ ८६ ॥

इस प्रश्न के निर्णय की आशा से लोगों ने इन्हें कहा कि आपके होते हुए हमारा संशय कौन दूर करे ।

श्री स्वामि नापीति वचोऽवधाय संबोधितास्ते सुजनास्तदानीम् ।
रुचिं पुरस्कृत्य वदामि वोऽहं दत्तावधाना वचनं शृणुध्वम् ॥ ८७ ॥
ये सन्ति लोके किल वर्तमाना देशे सतां सम्प्रति सम्प्रदायाः ।
सर्वे विशुद्धा परिवन्दनीयाः समादरार्हा जगती गतानाम् ॥ ८८ ॥
श्री वैष्णवाख्यो ननु सम्प्रदायः सर्वोपयोगीति विनिर्णयोऽस्ति ।
यतोऽन्य विख्यात मतान्यपेक्ष्य बिशेषता काचिदिहास्ति सौम्याः ॥ ८९ ॥

ऐसा सुनकर महात्मा जी ने कहा कि आप सुनो सभी सम्प्रदाय लोक कल्याण के लिये हैं तो भी श्री वैष्णव सम्प्रदाय सर्वोत्तम है उसकी कोई विशेषता सुनो ।

शास्त्रीय धर्मस्य सनातनस्य लिंगानि सर्वाण्यपि तत्र सन्ति ।
उपासना चापि मनुष्यजन्म साफल्य कर्त्री वृजिनापहन्त्री ॥ ९० ॥
नरैः शरीरे किल विद्यमाने धर्मः स्वकीयः परिपालनीयः ।
शास्त्रीय सिद्धान्त इतीह सिद्धः तस्मिन् सदासौ नियमेन बोध्यः ॥ ९१ ॥
इत्यादिकैः सत्य वचोभि रेवं विज्ञापितास्तेतु यथार्थ भावम् ।
अयं यथापूर्वमवाप मौनं मितं वदन्तीह यतोहि सन्तः ॥ ९२ ॥
वरं वरं साध्विति साधु साधो प्रोक्तं त्वया शास्त्र रहस्य मेतत् ।
इत्येव सर्वे मिलित स्वरेण पूर्वार्द्ध वाक्यं जगदुः सहर्षम् ॥ ९३ ॥

श्री वैष्णव सम्प्रदाय में सभी सनातन धर्म के लिंग वर्तमान हैं उपासना भी पूर्ण है अतः यह विशेष है सुन कर लोगों ने प्रसन्नता से बार २ धन्यवाद किया ।

ख्यातिः ततस्तस्य बभूव तत्र सर्वेषु लोकेषु विवेक वत्सु ।
तद्दर्शनाशोदय माजगाम मनस्सु पुण्येषु तदातितीव्रा ॥ ९४ ॥
योगाश्रमाख्यो वरकालिजो भूत् देशे प्रचाराय हि देव वाण्याः ।
यो नित्यशो नाथमतस्य कोर्तिं तनोति बालेन्दु समां जगत्याम् ॥ ९५ ॥
स्थानैरलंकार समैर्विचित्रैः तीरस्थितैरुल्लसितेव गंगा ।
एतेन चूड़ामणि सुन्दरेण शोभा मपूर्वां लभते नितान्तम् ॥ ९६ ॥

इस कारण इनकी बहुत प्रसिद्धि हुई वहां संस्कृत के प्रचार के लिये योगाश्रम नाम का एक महा विद्यालय है जिससे श्री गंगा माता बहुत सुशोभित लगती हैं ।

निवेदयामासुरथैनमेते संचालका स्तस्य विचारशीलाः ।
हे नाथ नाथाश्रम मद्य पश्य दृष्ट्वा सनाथं कुरु चाश्रमस्थान् ॥ ९७ ॥
कृत्वा मतिं मान्यवरो महात्मा गत्वाश्रमं तं सुतरां ददर्श ।
दृष्ट्वा प्रहृष्टः प्रवरां व्यवस्थां ददौ च तेभ्याः खलु धन्यवादान् ॥ ९८ ॥
विधाय सत्कार विधिं तदीयां तेषां च तां चारुतरां गृहीत्वा ।
तदन्तिकेनैव विराज मानं गतोविशालर्षि कुलं सहर्षम् ॥ ९९ ॥

वहां के संचालकों ने दर्शन के लिये प्रेरणा की उसकी सुखद व्यवस्था से यह बहुत प्रसन्न हुए उनका समुचित सत्कार करके यह पास में ऋषिकुल आश्रम में आए ।

स्नानाय तीर्थं रचितं विलोक्य मनोरमं तत्र किलाधिकुल्यम् ।
व्यायाम भूमिं बटुवास गेहं होमाश्रमं चान्नगृहादिकं सः ॥ १०० ॥
पाठस्थलीं छात्र गणस्य रम्यां पाठस्य च प्राच्य नवां प्रणालीम् ।
विस्मापकं रोगविनाशगेहं तस्याथ दृष्ट्वा मुमुदे महात्मा ॥ १०१ ॥

प्रतोष्य विद्यार्थिगणं तदानी मध्यापकांश्चापि वचः सुधाभिः ।
स्थानानि चान्यानि ततो दिदृक्षुः दिगन्तरं संचलितो महात्मा ॥ १०२ ॥

स्नान का घाट—भोजनालय—व्यायामशाला । आदि स्थान देखकर बहुत प्रसन्न हुए तथा छात्र वा अध्यापकों से वार्ता करके वहां से आगे चले ।

पश्यंस्ततः कानखलं सुदृश्यं विस्मापकं नेत्रमतां नराणाम् ।
प्राप्तो महात्मार्य समाज भूमि मनोहरां चारुतरां विशालाम् ॥ १०३ ॥

कन्या पठन्त्येक दिशाविभागे मनोरमां जागृति बीज विद्याम् ।
बालास्तथान्यत्र पवित्र देशे पठन्ति विद्यां विविधां तथात्र ॥ १०४ ॥

नाना विधा शिल्पकला विलोक्य तैः शिक्षमाणा मुमुदे नितान्तम् ।
तेषां समुत्साह गतिं तदानीं संवर्द्धय चान्यत्र गतो यथेष्टम् ॥ १०५ ॥

स्थानान्तराणीह मनोहराणि दृष्टानि सर्वाण्यटता सुखेन ।
निवास भूमिस्तु ततः पुराणी प्राप्ता पुराकीर्तित नामधेया ॥ १०६ ॥

मार्ग में कनखल का दृश्य देखा फिर गुरुकुल में आए वहां के शुभ दर्शन करते हुए वे आगे यात्रा करते हुए अपने पहिले निवास स्थान पर आ गए ।

कियच्चिरं तत्र विधाय वासं दत्वोपदेशं समयानुसारम् ।
द्रष्टुं हिमाद्रि शिखरासनस्थं बद्रीप्रभुं सोऽभिललाष देवः ॥ १०७ ॥

जिज्ञासु वर्गेण समावृतश्च तस्यां दिशायां गमनं स चक्रे ॥
या त्यक्त गेहै गतंमान मोहैः समाश्रिता योगिजनैः समन्तात् ॥ १०८ ॥

स्नात्वा त्रिवेण्यां खलु मार्ग गायांविलोक्य रम्यं भरताश्रमं च ।
विश्राम्य किंचित् तरुमूल देशे ततः प्रतस्थेऽग्रभुवं महात्मा ॥ १०९ ॥

कुछ समय वहां निवास करने के बाद श्री बद्रीनाथ जी के दर्शन को चले रास्ता में त्रिवेणी का स्नान किया ।

तीरान्तरे चाथ विराजमानं सुरापगायाः सुषमानिधानम् ।
स्वर्गाश्रमं रम्यतमं विलोक्य तद्दर्शनार्थं मतिमाचकार ॥ ११० ॥

श्री स्वामिनं प्राह ततोऽतितृष्णो जिज्ञासु वर्गः सुगिरा विनम्रः ।
नाथामहे नाथ पुरो लसन्तं द्रष्टुं मुनीनां शुभमाश्रमं तम् ॥ १११ ॥

न नौः पुरस्ताद् प्रतिभाति काचित् यया परं पार मुपाश्रयामः ।
ततुं न विघ्नः सलिल प्रवाहे विबाधते स्मान् किल दर्शनेच्छा ॥ ११२ ॥

मध्ये महातीव्रतर प्रवाहा भागीरथी भाति तरंग लोला ।
पारं परं याम यतो दयालो पश्याम तञ्चापि तथा कुरुष्व ॥ ॥ ११३ ॥

श्री गंगा जी के दूसरे तट पर स्वर्ग आश्रम को देखा उस समय और लोगों ने कहा कि महाराज मध्य में गंगा है इस समय नौका भी नहीं तैरना भी आता नहीं ऐसा उपाय करो जिससे आश्रम में जाकर दर्शन कर लें।

महात्मना तेन तदा विमृश्य प्रोक्तं हि तेभ्यः पुरतः स्थितेभ्यः ।
ब्रवीमि सत्साधनमिद्धभावा:यूयं तदेकाग्रतया शृणुध्वम् ॥ ११४ ॥

यत्राधुना सन्ति शुभा भवन्तः कीदृग् प्रदेशः खलु वर्ततेऽयम् ।
भागीरथीतीर समीप योगात् बालुर्बिशुद्धः सुतरां विभाति ॥ ११५ ॥

चलाचलं चापि मनः स्वतोऽत्र यत्नं विनैवेति विशेष शांतिम् ।
संकीर्तनं भाव विशुद्धि मूलं यूयं कुरुध्वं मिलिताः स्वरेण ॥ ११६ ॥

महात्मा जी ने कहा कि श्री गंगा जी का तट होने से मनोहर यह देश है यहां अपने आप मन में शांति हो रही है। इसलिए सभी मिल कर यहां संकीर्तन करो यही साधन है।

तस्याशुतोषस्य कृपाकरस्य तुष्टस्य संकीर्तन भक्ति भावात् ।
संप्राप्य देवस्य परं प्रसादं सिद्ध्येद्भीष्टं निखिलं समेषाम् ॥ ११७ ॥

तस्याज्ञया देव नदी तटे ते सर्वे स्थिता नेत्रयुगं निमील्य ।
निरुद्धबाह्येन्द्रियवृत्तिमन्तः संकीर्तनं प्रेम पराः प्रचक्रुः ॥ ११८ ॥

ते शुश्रुवुः श्रोत्र सुखां तदानीं कल्याणदात्रीं गिर मंबरीयाम् ।
नेत्रे समुन्मील्य विलोकयध्वं स्वाभीष्ट देशं सुतरां भवन्तः ॥ ११९ ॥

श्रुत्वेरितां वाच मिमा मदृश्य देवेन केनापि तदा त्वकस्मात् ।
व्यलोकयंस्ते परपारमेव देवापगाया यतिसेव्यमानम् ॥ १२० ॥

संकीर्तन से प्रभु कृपा करेंगे मनोरथ पूर्ण होगा अब इनकी आज्ञा से सब ने एकाग्र होकर संकीर्तन किया आकाशवाणी हुई कि नेत्र खोल कर इष्ट स्थान को देखो।

श्री स्वामि पादाब्जयुगं प्रणम्य तेऽप्राक्षुरेतत्किमितीरयस्व ।
तस्येश्वरस्यैव कृपा ततोऽन्यत् न किंचिदस्तीति जगाद तेभ्यः ॥ १२१ ॥

यस्याश्रयं प्राप्य जना जगत्यां महासमुद्रं महतामलंघ्यम् ।
गोपाद पानीय समं तरन्ति तस्यानुकम्पा विषये नदी किम् ॥ १२२ ॥

सन्तो विजानन्ति सतां महत्वं साधारणै र्जीवगणै रबोध्यम् ।
एवं विचिन्त्याथ शुभाश्रमं तं दृष्ट्वाप्रतस्थुः पुनरग्रमार्गे ॥ १२३ ॥

श्री स्वामी जी से उन लोगों ने पूछा कि महाराज यह क्या हुआ उन्होंने उत्तर

दिया कि भगवान् की कृपा हुई है। और कुछ नहीं जिसकी कृपा से सागर का पार भी सुलभ होता है। तो वहां नदी का पार क्या कठिन है ऐसा सुन कर वे सब आश्रम को देखने लगे। फिर आगे यात्रा की।

स्रोतांसि मार्गे बिमलान्यपांच शैलेयशीर्षादवनौ पतन्ति ।
पुष्पैः फलैश्चापि युतानि पश्यन् वनानि सो भीष्ट दिशं जगाम ॥ १२४ ॥

मनोहरं मन्दिर राजमानं मनोज शोभालि मधो नयन्तम् ।
ददर्श नारायण देव मेषः क्रमेण साष्टांग नतिं चकार ॥ १२५ ॥

मार्ग में सुन्दर जल के झरने फूल फलों से भरे पौदे देखते २ श्री बद्री धाम पहुंचे दर्शन किये वन्दना की।

तदर्शनानन्द कृतार्थतायां मग्नः स मेने स्वमधीतसारम् ।
पर्जन्यवत् सार विवर्षिषु स्तु पुनः स्थलं नूरपुरं प्रपेदे ॥ १२६ ॥
समागतं वीक्ष्य तदा स्थलीयाः जनाः प्रणेमुश्च पुनः पुनस्तम् ।
संतोष्य सर्वान् मधुरैर्वचोभिः स्वामी स्थितिं तत्र पुनश्चकार ॥ १२७ ॥

सुयात्रा यस्यैवं विधविविधरूपातिरुचिरा ।
सदा संश्रद्धेया सकल जनताताप हरणी ॥
प्रपन्ना यस्यांध्रि परम सुख सन्तान मगमन् ।
महा मोह ध्वान्त ग्रसन विधुमेनं प्रणमत ॥ १२८ ॥

श्री बद्री नाथ जी महाराज के दर्शन करके इन्हों ने अपने आप को सफल जाना फिर वहां से वे अपनी कुटिया में आकर निवास करने लगे।

इस प्रकार उन्होंने सुन्दर तीर्थ यात्रा की इनकी सेवा में आने वालों ने परम शांति प्राप्त की ऐसे महा पुरुष को वार २ प्रणाम हो।

---

इति तीर्थ यात्रा वर्णनं नाम सप्तमः सर्गः ।

# अथ शास्त्र स्वाध्याय फलनिरूपणो नाम अष्टमः सर्गः ।

मनुष्य देह योग्यानि कर्माण्युक्तानि शास्त्रतः ।
लोक संग्रह रक्षार्थं चचारैष त्वलिप्तवत् ॥ १ ॥

तत्रास्तां पण्डितौ द्वौ च सदाचार रतौ सदा ।
भूसुरौ वस्तुतस्तूभौ विप्र जाति विभूषणौ ॥ २ ॥

वाराणस्यामुषित्वाभ्यां विद्याधीता च बैदिकी ।
द्वा भ्यां शिब प्रसादेनं विद्यासिद्धि रुपार्जिता ॥ ३ ॥
यथा विद्या तथा सत्य कर्माण्यपि विरेजिरे ।
ताव भूतां स्ववाक्येषु स्थायिनौ गतकल्मषौ ॥ ४ ॥
संज्ञैकस्य तयोः शुभ्रा कुलयशस्वीति गीयते ।
भक्त रामाभिधानोऽन्यः पण्डितो मान्य संमतः ॥ ५ ॥

मनुष्य जीवन में जो कर्म करने योग्य शास्त्र में बताए गए हैं इन महात्मा ज. ने वे सब लोक मर्यादा रखने वास्ते किये ।

वहां पर दो पण्डित सदाचारी रहते थे जो कि वास्तव में विद्वान् तथा ब्राह्मण जाति के भूषण थे । काशीपुरी में रह कर इन दोनों ने वेद विद्या का अध्ययन किया था शिवजी की कृपा से विद्या में दोनों ने सफलता प्राप्त की । जैसे इन्हों ने विद्य पढ़ी थी वैसे ही इनके शुभ कर्म भी थे वे दोनों सदा सत्य वाणी बोलते थे । एक का नाम श्री भक्तराम तथा दूसरे का शुभ नाम कुल यशस्वी था ।

प्रीत्या ताभ्यां महात्मासौ वेदं विश्वेश संभवम् ।
पुस्तकानि तथा न्यानि शुश्रुवे शान्त चेतसा ॥ ६ ॥
विज्ञा विचारशीलाश्च ग्राम्या नागरिका जनाः ।
श्रोतुं द्रष्टुं समचायान्ति वेदं श्री स्वामिनं तथा ॥ ७ ॥
प्रस्ताव स्तेषु तिष्ठत्सु स्वतो जातः प्रसंगतः ।
फलं कि वेदरक्तानां ततो वाक्य मुवाच सः ॥ ८ ॥
प्रणीतः पूर्वजैः मार्गः धर्म्यो यो श्रेयसे पुरा ।
तेन मार्गेण गच्छन्तो लभन्तेऽत्र सुखं नराः ॥ ९ ॥

वे महात्मा जी शान्ति से उन दोनों से वेद तथा अन्य पुस्तकों का श्रवण करते थे । ग्रामों तथा नगरों के निवासी विचार वाले लोग महात्मा जी के दर्शन तथा शास्त्रों के श्रवण वास्ते वहां आते थे । सब की उपस्थिति में एक विचार पैदा हुआ कि वे का फ़ल क्या है तब उन्होंने कहा कि पूर्वजों से अपनाया गया धार्मिक मार्ग सब क सुख शान्ति के लिए अपनाना चाहिए ।

देव वाणी प्रियैः पूर्वं सदाधर्मपरायणैः ।
पूर्वजैर्यो विनिर्दिष्टो ग्राह्यो मार्गः स सज्जनैः ॥ १० ॥
वेदो नित्यंहि वाक्येन सत्ता केनचिदीरितम् ।
मानवैः प्रत्यहं वेद पाठो लोके विधीयताम् ॥ ११ ॥
कयाचिच्चिन्तितं पूर्वं वेदानुदिश्य कन्यया ।
वेद रक्षां हि कः कुर्यात् किं करोमि क्व याम्यहम् ॥ १२ ॥

वेदलोप मवेक्ष्यास्याः शोकोऽभूद् दाहकारकः ।
वेदाध्ययनं ततो लोके नून मावश्यकं मतम् ।१३॥

संस्कृत भाषा के प्रेमी पूर्वजों का नियम धारण करना चाहिये किसी महापुरुष का कहना है कि वेद नित्य पढ़ो बौद्ध नास्तिक काल में किसी बालिका को चिन्ता हुई कि वेद रक्षा कैसे हो अतः वेद का अध्ययन आवश्यक माना है ।

अनभ्यासेन वेदाना मित्यादेशवाक्यतः ।
वेदपाठादृते लोके श्रेयो हानिः प्रकीर्तिता ॥ १४॥
पूर्वे विद्वत्तमा मान्याः शान्तिमन्तो महर्षयः ।
कथयन्ति स्म सर्वास्ते वेदे चेतो नियोज्यताम् ॥ १५॥
मनोदोष तमो हारि, सत्य वस्तु प्रदर्शकम् ।
सर्वेषां प्राणिनां शास्त्रं, तृतीयं नेत्र मीरितम् ॥ १६॥
यावज्जीवं पठेच्छास्त्रं, नरस्त्वात्महिते रतः ।
शास्त्र शिक्षा विहीनोहि पशुर्नामोच्यते बुधैः ॥ १७॥
द्रव्यं देह। परीवार। पदार्थाः सन्ति देहिनः ।
लोके नाना विधास्तेभ्यः वेद विद्या विशिष्यते ॥ १८॥

वेद के अभ्यास के बिना सुख की हानि बताई गई है पूर्वजों ने वेद पढ़ने का आवश्यक आदेश दिया तथा शास्त्र से रहित मानव को पशु कहा संसार में जितना भी वैभव है वेद विद्या सब से अधिक लाभप्रद है।

वाचा वक्तुं नवै शक्यं मानवेन कथंचन ।
जगत्यां वेद माहात्म्यं मप्रमेय रस प्रदम् ॥ १९॥
पुस्तकानां च सर्वेषां तदाधारमतां ननु ।
सुखार्थिभि रुपादान मावश्यकतमं मतम् ॥ २०॥

वाणी द्वारा वेद का गौरव कहना संभव नहीं वेद तथा उसके अनुकूल पुस्तकों का पाठ सुख की आशा वालों को करना आवश्यक है।

किमुद्दिश्य तु वेदेषु विधेथं संप्रवंतनम् ।
श्रूयता मिति वो वच्मि यतस्तत्र प्रवर्तनम् ॥ २१॥
सृष्टेस्तु दृश्यमानायाः विधाता पालकश्च यः ।
नाना रूपोऽथवाऽरूपो सच्चिदानन्द विग्रहः ॥ २२॥
वेद पुस्तक संगत्या रामं गच्छन्ति तं नराः ।
परात्मान यतो वेदो ग्राह्यः सद्भिः तथा यथा ॥ २३॥
तस्याध्ययन मुद्गीतं मानवानां कृते यतः ।
तत्वरूपस्य रामस्य प्राप्ते रन्यन्न साधनम् ॥ २४॥

किस प्रयोजन से वेद में मानव की प्रवृति हो ऐसी शंका का समाधान सुनो दृश्य जगत का जो कर्ता है साकार या निराकार सत् चित् आनन्द वह राम वेद के द्वारा प्राप्त हो सकता है।

शास्त्र शब्दादि सूत्रेण मान्य व्यासेन घोषितम् ।
वेदा देशाच्चिदानन्द राम लाभो हि केवलः ॥ २५ ॥

फलं शास्त्रस्य तत्प्राप्तिः विनिश्चेया सदा हृदि ।
तत्प्राप्ति तु बिना ज्ञेयं शास्त्रस्याध्ययनं वृथा ॥ २६ ॥

शास्त्राण्यधीयमानेन गृहीत्वा सच्चिदात्मकम् ।
सार हीनानि हेयानि गन्तव्या कृतकृत्यता ॥ २७ ॥

गृह्णाति सौरभं प्रेम्णा सरोजालौ भ्रमन्नलिः ।
यथा तथा पठन् शास्त्रं बिवेकी याति तत्पदम् ॥ २८ ॥

श्री व्यास जी ने यही कहा है कि शास्त्र का फल केवल ब्रह्म लाभ है तत्वज्ञान के बिना शास्त्र का पढ़ना वृथा है जैसे भ्रमर कमलों से सुगन्ध लेता है वैसे ही मानव शास्त्र से सत्य का ग्रहण करता है।

विनायासं तु तत्प्राप्तः कामानाप्नोति सर्वशः ।
यत्र कुत्रापि संसारे ये श्रुताः सन्ति वाश्रुताः ॥ २९ ॥

ज्ञात्वा धीमांस्तु तं देवं सततं ध्यान माचरेत् ।
न शास्त्र चिन्तना रूपं श्रमं कुर्यात् ततोवृथा ॥ ३० ॥

मरौ जलं यथाध्यस्तं भ्रान्ति सिद्धं विभाति वै ।
तथा रामे स्थितं मिथ्या भाति सर्वं चराचरम् ॥ ३१ ॥

कस्यापि शोभना सूक्ति र्विद्ययाऽमृत मश्नुते ।
विचार्यतां तु भावोऽस्याः राम एव सदात्मकः ॥ ३२ ॥

अमृतं राम एवास्ति तदन्यन्मृत मुच्यते ।
सदेव सौम्यादि गिरां भावोऽयं हि विनिश्चितः ॥ ३३ ॥

इस तत्व की प्राप्ति से सब मनोरथ सिद्ध होते हैं उसे जान लेने के बाद फिर बुद्धिमान् उसी का ध्यान करे और श्रम न करे मरु में जैसे जल की भ्रांति है वैसे ही ब्रह्म में जगत की भ्रान्ति है। विद्या से अमृत मिलता है यह वाक्य भी राम को प्राप्त करने का बोधक है।

श्रुताबित्थं प्रपंचस्य विनाशित्वं निरूपितम् ।
नित्यत्वं कथितं चास्य सच्चिदानन्द रूपिणः ॥ ३४ ॥

सेवया दं प्रसन्नेन शिवेनाशु प्रसादिना ।
प्रियायै ध्येय रूपेण राम एव निरूपितः ॥ ३५ ॥
शिष्टैः श्रेष्ठतमो वेदो ह्यत एव प्रकीर्तितः ।
रामः परात्परो देवो यतस्तेनैव प्राप्यते ॥ ३६ ॥
वेद प्राप्यस्य रामस्य स्वरूपं किं निरूप्यताम् ।
इति चेत् श्रूयतां भद्राः कथयामि समासतः ॥ ३७ ॥

श्रुति में संसार को मिथ्या तथा पर ब्रह्म को सत्य कहा गया है शिवजी ने भी पार्वती जी से यही कहा है वेद का स्वाध्याय भी इसी कारण आवश्यक माना गया है क्योंकि इसके द्वारा राम की प्राप्ति होती है राम का स्वरूप क्या है ऐसी जिज्ञासा हो तो सुनो ।

रमन्ते योगिनो यस्मिन् सच्चिदानन्द रूपिणि ।
रामः स एव विज्ञेयः सकलो निष्कलस्तथा ॥ ३८ ॥
रमन्ते योगिनो यस्मिन्वेति लक्ष्म विनिश्चिनु ।
निराकारोऽथ साकारो रामाख्याख्यापितो खलु ॥ ३९ ॥
रमते सर्व भूतेषु स रामो ज्ञायतां बुधैः ।
लक्षणं तस्य चैतद्वः स्वबुद्धौ संप्रधार्यताम् ॥ ४० ॥
स्वात्मनि रमयत्येष मानवान् योग शालिनः ।
रामः स एव विज्ञेय। तात्वजिज्ञासुपूरुषैः ॥ ४१ ॥
यं प्राप्य विरमन्ते वं रामं देवं परात्परम् ।
प्रयत्नः सर्वथा कार्यः तत्प्राप्तौ सर्वमानवैः ॥ ४२ ॥

जिस में योगिजन रमण करते हैं वही राम है वह साकार हो या निराकार यही उसका लक्षण है । अथवा जो सब जीवों में रमता है वह राम है जिसकी प्राप्ति में परम विश्राम मिलता है वही राम है ।

कर्ता भर्तास्य वा हर्ता दृश्यमानस्य योविभु; ।
प्रकृतिं स्वां समादाय स रामोऽस्ति परेश्वरः ॥ ४३ ॥
लक्षणानि तु रामस्य बहूनि सन्ति भावुका; ।
भवद्भ्यस्तु प्रसंगेन दिङ्मात्रं मत्र दर्शितम् ॥ ४४ ॥
स एव निर्गुणो रामः सृष्टेः पूर्वं तु केवलः ।
विवर्ता यस्य दृश्यन्ते भूमि वायु जलादयः ॥ ४५ ॥
द्रौपद्या ब्रह्मणः सत्याः चरितेन विनिश्चितः ।
विवर्तवादो विस्पष्टः सुधीभि र्ज्ञायतां किल ॥ ४६ ॥

मायावीब जगल्लीलां विदधाति प्रभुः स्वयम् ।
लोकर्बात्त्वति सूत्रेण व्यासेनास्ति बिवेचितम् ॥ ४७ ॥

प्रकृति के द्वारा जो इसका कर्ता भर्ता-हर्ता बनता है वही राम हैं स्वल्प रीति से लक्षण किया है यह पांच भूत जल आदि उसी में भ्रान्ति से बने हैं ब्रह्मा सती आदि की वार्ता से विवर्त वाद स्पष्ट है श्री व्यास जी ने जगत को एक लीला के रूप में कहा है ।

तथा सर्वेषु शास्त्रेषु तस्मिन् रामे तु केवले ।
निरपेक्षे हि सामग्रयाः सृष्टि रेषा निरूपिता ॥ ४८ ॥
सृष्ट्वा सृष्टिं तदर्थं च नियमास्तेन निर्मिताः ।
भंगं दृष्ट्वा च तेषां वं शिक्षाहीनैर्निशाचरैः ॥ ४९ ॥
गुणात्मिकाँ समाश्रित्य मायां मायापतिः प्रभुः ।
नियमांस्तान् दृढ़ी कर्तुं धृतवान् मानुषं बपुः ॥ ५० ॥
शास्त्रैः शस्त्रैश्च तेनेह नाशिता दैत्य पुङ्गवाः ।
साधवो रक्षिताश्चापि मायामानुष रूपिणा ॥ ५१ ॥

साधन निरपेक्ष राम में जगत का कथन किया गया है जगत के नियमों का जब राक्षस भंग करते हैं तो उनकी रक्षा के लिये वह निराकार साकार हो कर दैत्यों का नाश करके साधुओं की रक्षा करता है ।

विधातु मिच्छया शक्तो कर्म नैव विरुद्धयते ।
मर्यादां मानुषीं देवो मतः शिक्षयितुं यतः ॥ ५२ ॥
महतां वीक्ष्य कर्माणि क्रियमाणानि शास्त्रतः ।
कर्म मार्ग स्थितो लोकः तन्मार्ग मनुगच्छति ॥ ५३ ॥
अत एव विधायेह नाना रूपाणि मेश्वरः ।
करोति शुभ कर्माणि धर्म मार्ग प्रदर्शकः ॥ ५४ ॥
राक्षसीं तामसीं सत्तां दूरी कृत्य च सर्वशः ।
सर्वथा तेन संसारे वेद विद्या दृढ़ी कृता ॥ ५५ ॥
पापपुंजं समुत्सार्य जगत्पुण्यमयं कृतम् ।
येन रामः स वेदेन लब्धुं शक्यो व चान्यथा ॥ ५६ ॥

संकल्प से करने योग्य में कर्म का होना अनुचित नहीं क्योंकि मर्यादा के कारण कर्म उचित है बड़ों को देखकर और सब अनुसारि हो जाते हैं इसी कारण स्वयं अवतार लेकर प्रभु भी भिन्न २ कर्म करता हैं, वह राम वेद ज्ञान से प्राप्त होता है अतः वेद का स्वाध्याय आवश्यक है ।

नाना जन्मकृताघौघ विध्वंसेऽति पटीयसः ।
तस्य प्राप्ति करं वेदं श्रद्धयात् को न मानवः ॥ ५७ ॥

अनेक जन्मों के पाप पुञ्ज को नाश करने वाले भगवान् राम का बोध कराने वाले वेद पर मानव श्रद्धा कैसे न करे ।

गुरुणां सादरं सेवा श्रद्धयादेश पालनम् ।
दीनानां रक्षणं नाशो दुष्टानां सर्वथा तथा ॥ ५८ ॥
दैवात्समागतानां वातिथीनां सेवनं किल ।
चरित्रात् शिक्ष्यते यस्य स रामो वेदसंमतः ॥ ५९ ॥
दर्शितं समदर्शित्वं स्वलक्ष्ये त्यागरागयोः ।
धर्मं शक्ति र्महाशक्ति रिति चापीह दर्शिता ॥ ६० ॥

गुरुजनों की सेवा आज्ञा पालन दीन जनों की रक्षा दुष्टों का नाश अतिथि सेवा की शिक्षा जिस के चरित्र से प्राप्त होती है । जिस राम ने अपने कर्तव्य में राग तथा त्याग को सम जाना तथा धर्म की शक्ति को महा शक्ति बताया ।

वेदे शास्त्रे पुराणेच वेद धर्मानुसारिणि ।
सगुणं निर्गुणं यस्य रूप द्वय मुदीरितम् ॥ ६१ ॥
तं रामं शान्ति कर्तार मिष्टसिद्धि विधायकम् ।
प्राप्य श्रेयोऽभिगच्छन्तु परिपूर्णाः भवन्तुच ॥ ६२ ॥
सुविज्ञाप्य पुरस्थाँस् तान् महात्मा लोक भूषणम् ।
व्याजहार वचोभङ्ग्या छित्वा तत्संशयावलिम् ॥ ६३ ॥

वेद तथा धर्म शास्त्र में जिसके सगुण वा निर्गुण दो रूप कहे गए हैं । शान्ति वा सफ़लता देने वाले उस राम को प्राप्त कर आप लोग कल्याण भागी बनें । इस प्रकार उन सब को समझा कर महात्मा जी ने मौन कर लिया ।

विज्ञानिना निखिल शास्त्रिमतेन तेन ।
वेदस्य चेतर तदाश्रित पुस्तकानाम् ॥
सारो विविच्य कथितो मथितः समुद्रः ।
यद्वत्सुरानमृत मापयताऽच्युतेन ॥ ६४ ॥

ज्ञानवान् विद्वानों से पूज्य वेद वा शास्त्रों का सार निकाल कर लोगों को पिलाया जैसे सागर को मथ कर भगवान् ने देवताओं को अमृत पिलाया था ।

"इति शास्त्र स्वाध्याय फल निरूपणं नामाष्टमः सर्गः ॥

——

# "अथ वेदानामीश प्राप्ति को नाम नवमसर्गः ।।

परेशः सच्चिदानन्दो रामो वेदेन लभ्यते ।
श्रुत्वैतत्स्वामिनस्तेषु जगौ कश्चिज्जनः पुनः ।। १ ।।
रामप्राप्तिः कथं तेन वेदेनात्र निरूप्यते ।
ननु वेदे तु सर्वत्र कर्मयोगो निरूपितः ।। २ ।।
पृथक् पृथक् तदर्हाणि दर्शितानि फलान्यपि ।।
इति चेच्छ्रूयतां भद्र समाधानं विधीयते ।। ३ ।।

वेद के द्वारा परेश की ही प्राप्ति होती है ऐसा सुन कर किसी ने शंका की कि वहां तो केवल कर्म का वर्णन है फिर ब्रह्म लाभ कैसे समाधान सुनो।

साधनानां चतुर्णां वै निर्देशो मुनिभिः कृतः ।
तेषां प्राप्त्या नरो ब्रह्म जिज्ञासु र्भवति ध्रुवम् ।। ४ ।।
शमादिषट्क सम्पत्तिः वैराग्यं च मुमुक्षता ।
चतुर्थो गीयते शास्त्रे भेदः सदसतोः खलु ।। ५ ।।
इहामुत्र प्रसिद्धा ये सन्ति शब्दादयः किल ।
तत्परित्याग मात्रं हि वैराग्यं कीर्त्यते बुधैः ।। ६ ।।
मनो गति निरोधो यः सर्वथा विषयौघतः ।
तथोपास्यस्थितिः शास्त्रे शम इत्यभिधीयते ।। ७ ।।

मुनियों ने चार साधनों का कथन किया है उन से मानव ब्रह्मजिज्ञासु बन सकता है। शमादिषट्क संपत्तिः वैराग्य मुमुक्षता-विवेक-यह चार साधन हैं। यहां वहां के प्रसिद्ध संसार के भोगों के त्याग को वैराग्य जानना। मन को विषयों से हटा कर अपने इष्ट में लगाना शम है।

नानारूपेषु भोगेषु हृषीकाणांच गच्छताम् ।
निरोधो यः स शास्त्रेण दमनाम्ना निरूप्यते ।। ८ ।।
इयदिहानुकूलंवा प्रतिकूलमथापिवा ।
लौकिकं वस्तु तस्मात्सः शुचं हर्षं न विन्दताम् ।। ९ ।।
हित्वा सांसारिकी माशां समं भावं गतो ननु ।
प्राप्ते विषयवर्गेग्रे वैषम्यं नैतु मानवः ।। १० ।।

विषयों की ओर जाने से इन्द्रियों को रोकना दम कहा जाता है। अनुकूल अथवा प्रतिकूल वस्तु मिलने पर हर्ष वा शोक न करे। संसार का राग त्याग कर विषयों के सामने होने पर भी विकार न हो।

उष्णशीतादि युग्मानि ह्यागतानि मुहुर्मुहुः।
सहतां सर्वथैवैषा तितिक्षा कथिता बुधैः ॥ ११ ॥
विषयाशाविरक्तस्य चेतसः संस्थिति पुनः।
समाधान मिति प्राहुः यतयो योग शालिनः ॥ १२ ॥
शिष्याय गुरुप्रोक्तासु तत्वमस्यादि सूक्तिषु।
सुस्थिरा चेतसो वृतिः श्रद्धा नाम्ना निरूपिता ॥ १३ ॥
प्राप्ते शब्दादि वर्गे या रुचि र्नित्यास्ति चेतसः।
कथितोपरतिः सैव बुधै रात्म परायणैः ॥ १४ ॥
मिथ्या दृश्य मिदं सर्वं सत्यं ब्रह्म चिदात्मकम्।
प्राहु रिमं विवेकं ते ज्ञाततत्व महर्षयः ॥ १५ ॥

सर्दी गर्मी भूख प्यास आदि को सहन करनातितिक्षा है विषयों की आशा त्याग कर चित की स्थिरता को समाधान कहा जाता है। गुरु द्वारा कहे गए तत्वमसि आदि महा वाक्यों में शिष्य की स्थिर मनो वृति को श्रद्धा कहते हैं। शब्द आदि विषयों की प्राप्ति होने पर जो मन की रुचि न हो इसी को उपरति कहा गया। यह सारा जगत झूठा है और पर ब्रह्म सत्य हैं इसी को विद्वान् विवेक कहते हैं।

मिश्रिते दुग्धपानीये हंसो विभजते यथा।
विविनक्ति तथा विद्वान् सत्यासत्ये तु संगते ॥ १६ ॥
विकारी भौतिकः पिण्डो निर्विकारस्तु केवलः।
चिदात्मास्तीति हृद्वृत्तिः, विवेकः कथितो बुधैः ॥ १७ ॥
कारागारेऽत्र संसारे बद्धस्य कर्म पाशतः।
भविष्यति दशा का मे नाना योनि समाकुले ॥ १८ ॥
कथं मुक्तिर्भवेन्मेस्मात् द्वितीया भावना हृदि।
तत्वविद्भिस्तु सैवेह दर्शितास्ति मुमुक्षुता ॥ १९ ॥
चत्वारि साधनानीह धार्याण्युक्तानि देहिनाम्।
संनिवार्याश्च चित्तस्य त्रयो दोषः मलादयः ॥ २० ॥

जैसे हंस मिले हुए दूध पानी से दूध अलग कर लेता है इसी तरह विवेकी सत् या असत् को पृथक् कर लेता है। यह शरीर नाशवान् है आत्मा सत्य है इस प्रकार की वृति को ही विवेक कहा जाता है। संसार के कारागार में कर्म के जाल में बंधे

मेरी क्या दशा होगी इस से मेरी मुक्ति कैसे हो इसी भावना को मुमुक्षता कहते हैं यह चार साधन धारण करने योग्य हैं तथा मन के तीनों दोष दूर करने चाहिएं।

प्रथमौ मलविक्षेपा वन्त्य मावरणं पुनः ।
त्रिभिरेतैर्मनोजन्तो रावृतं मति नाशनैः ॥ २१ ॥
एतत्त्रयनिवृत्यर्थं त्रयो मार्गा निरूपिताः ।
वेद शास्त्रान्तरे स्पष्टं ते निषेव्या मुमुक्षुणा ॥ २२ ॥
प्रथमः कर्ममार्गोऽस्ति द्वितीयोपासना तथा ।
ज्ञाननामा तृतीयोऽस्ति क्रमाद्दोष निवर्तकः ॥ २३ ॥
कर्मणो हि स्वभावोऽयं मलं दूरी करोति तत् ।
शास्त्रिवर्ग मतं ह्येतत् भासते युक्ति संगतम् ॥ २४ ॥
मानसे निर्मलो भूते नृणां ज्ञानं प्रजायते ।
तदभावे भवेन्नैव तत्वज्ञानं कथंचन ॥ २५ ॥

मल-विक्षेप-आवरण इन तीन दोषों से जीवों का मन आवृत है। इन दोषों के निवारण वास्ते तीन उपाय कहे गए हैं जिज्ञासु को वे अपनाने चाहिएं। कर्म उपासना ज्ञान-यह क्रम से दोषों के निवारक हैं। कर्म मल दोष को मिटाता है ऐसा शास्त्र का मत है। मन के निर्मल होने से ही ज्ञान होता है।

मलिने दर्पणे यद्वत् प्रतिबिम्बो न दृश्यते ।
ज्ञान मुत्पद्यते नैव तथा मलिन चेतसि ॥ २६ ॥
लोकोक्तिरपि सिद्धेयं बुद्धिः कर्मानु सारिणी ।
कर्म कार्यं मनः शुद्धि विज्ञापयति नः स्फुटम् ॥ २७ ।
कर्त्रा श्रद्धालुना प्रीत्या कृतानि सुकृतानि तु ।
बुद्धि शुद्धि विधायास्य स्वय मस्तं प्रयान्ति च ॥ २८ ॥
अतो ज्ञेया मनः शुद्धिः केवलं कर्मणां फलम् ।
परं साध्यं तु वेदस्य राम एव चिदात्मकः ॥ २९ ॥
सिद्धि मिष्टामभीप्सन्तो मानवा जगती तले ॥
कर्म कुर्यु विवेकेन पावनं मनसः किल ॥ ३० ॥

जैसे मैले शीशे में प्रति बिंब नहीं दीखता वैसे मैले मन में ज्ञान नहीं होता। बुद्धिः कर्मानु सारिणी यह कहावत भी-कर्म द्वारा मन की शुद्धि का संकेत देती है। किये गए शुभ कर्म मन को शुद्ध करके समाप्त हो जाते हैं। इस लिये कर्म का फल केवल शुद्धि है वेद का मुख्य फल तो राम ही है अतः अपने आप को सफल करने वास्ते मनुष्य को कर्म के द्वारा मन को निर्मल करना चाहिए।

वक्ति शास्त्रमपि स्वोक्त कर्मणां विविधात्मनाम् ।
चेतः शुद्धयर्थतां तस्मात् तानि कार्याणिनित्यशः ॥ ३१ ॥

शास्त्र में नाना प्रकार के कर्मों का फल हृदय की शुद्धिः बताया है अतः कर्म करने चाहिएं । जो भी विहित किये गए हैं ।

विहितो वेदपाठोयं सुकरो ब्रह्मचारिणाम् ।
गृहस्थानां च यज्ञादि द्रव्य साध्यं निरूपितम् ॥ ३२ ॥
त्यागेनेत्यादि वाक्येषु त्यागस्य मोक्ष हेतुता ।
श्रूयते त्याग शब्दोऽतो विचार्योऽस्ति पुनः पुनः ॥ ३३ ॥
त्याग शब्देन पात्रेषु दानमेकं प्रकीर्तितम् ।
दीना हीना स्वसंपत्या संतोष्टव्या सदा नृभिः ॥ ३४ ॥
गवां रक्षा निमितं तु गोशालासु यदा तदा ।
देवं द्रव्यं सदा भक्त्या फलाभि संधि वर्जितम् ॥ ३५ ॥
पूर्वै मंहर्षिभिः प्रोक्तं विविक्तारण्य वासिभिः ।
सात्विकं गोपयो लोका भवन्त्वेतेन सात्विकाः ॥ ३६ ॥

विद्यार्थियों को वेद पाठ करना उचित है तथा गृहस्थों को यज्ञ आदि कर्म उचित है । शास्त्रों में त्याग शब्द आता है इस पर विचार करना चाहिए । त्याग शब्द का अर्थ एक तो सुपात्रों को दान है धन से दीन जनों का संतोष किया जावे । गो रक्षा वास्ते दान भी करें । पूर्वज तपस्वी महर्षियों ने कहा है कि गौ का दूध सात्विक है इस के द्वारा सत्वगुण प्राप्त करो ।

सत्ववृद्धिकरा ह्येताः देशोन्नति विधायकाः ।
जनन्याः प्रेमधाराया देव सन्तोष कारिकाः ॥ ३७ ॥
वातावरण शुद्धयाच गोमयादिक वस्तुभिः ।
स्वास्थ्य मुत्पादयन्येताः सेव्याः सर्वैस्तु धेनवः ॥३८॥
स्वदेशवंशयोर्वृद्धि विधेया जन्मधारिभिः ।
यदर्थं जन्म यातीह पशूनां पक्षिणामपि ॥ ३९ ॥
कृषि प्रधानदेशोऽयं, कृषिर्द्रव्यस्य कारणम् ।
विख्यातेय मतो भूमिः, रत्नसू रिति संज्ञया ॥ ४० ॥
कृषि कर्म विधानाय वृषा ईशेन निर्मिताः ।
धेनुभ्यस्ते तु जायन्ते सेव्या गावस्ततो मताः ॥ ४१ ॥

गौआं सत्वगुण के द्वारा देश की उन्नति करती हैं जनता में प्रेम व संतोष बढ़ाती हैं । गोबर आदि के द्वारा वातावरण को स्वास्थ्य के अनुकूल बनाती हैं ।

देश व जाति की वृद्धि करना सब का कर्त्तव्य है यह देश कृषि प्रधान है अतः यह भूमि रत्न पैदा करने वाली है खेती बैलों द्वारा की जाती है बैलों का जन्म गौओं से है इस लिये गोपालन आवश्यक है।

मर्चिका कल्पकन्यायात् सेव्याश्चेत् पशवो जनैः ।
दुग्धार्थं तद्विहायान्यान् गावः सेव्याः कथं नहि ॥ ४२ ॥
त्रयो वसन्ति देहेऽस्मिन् वातपित कफाख्यकाः ।
साम्येन वर्तनानानां त्रयाणा मपि धातुता ॥ ४३ ॥
अन्ने वाताधिके भुक्ते वातो दोषत्व मेत्यसौ ।
वृद्धिं प्राप्तश्च वैषम्यात् छादयतीतर द्वयम् ॥ ४४ ॥
यथा वातस्य वार्तेयं तथा वृत्तं तदन्ययोः ।
प्राप्य स्वस्वानुरूपं ते वृद्धिं यान्ति त्रयः क्रमात् ॥ ४५ ॥
विषमाश्चैते त्रयो दोषा वातपितकफा खलु ।
कुर्वन्ति महतींहानिं प्राणिनां प्रायशो भुवि ॥ ४६ ॥

दूध के लिये यदि पशु पालन करना ही है तो फिर अन्य की अपेक्षा गाय का पालन करना ही उत्तम है। इस शरीर में वात-पित-कफ दोष रहते हैं सम दशा में तीनों धातु हैं। वात वाला भोजन लेने से बात बढ़ कर दोनों को दबा लेता है। जैसे बात की बात है वैसे कफ वा पित्त की स्थिति समझ लेना अपने अपने अनुकूल वस्तु के मिलने से यह विषम हो कर बड़ी हानि कर देते हैं।

गोदुग्धस्य प्रभावेण त्रयस्ते देहवर्तिनः ।
न प्राप्नुवन्ति वैषम्यं हानिं कुर्वन्ति नैव च ॥ ४७ ॥
भुज्यते यादृशं ह्यन्नं तादृशं जायते मनः ।
इति शास्त्र पुराणेषु गीयते क्षेम सिद्धये ॥ ४८ ॥
दुग्ध तक्रादिकं वस्तु सात्विकं गीयते गवाम् -
तत्सेवयेह लोकानां सत्विकं जायते मनः ॥ ४९ ॥
कश्चिद्विचित्रधीः पृच्छेत् सत्वं कथमपेक्षते ।
तस्मै वाच्यं ततो भद्र भद्रं ज्ञानं प्रजायते ॥ ५० ॥
सुखं संजायते ज्ञानं हृदये सत्व संश्रिते ।
बाधहीनस्तु भावोऽयं वौ मनस्सु भवेद्दृढः ॥ ५१ ॥

परन्तु गो के दूध के प्रभाव से यह तीनों शरीर में विषम नहीं होते न हानि करते हैं। जैसा अन्न हो वैसा मन बन जाता है। गाय का दूध आदि सात्विक है इस से मन सात्विक होता है। सत्वगुण ज्ञान जनक है अतः सत्व गुण का होना जरूरी है। सात्विक हृदय में ज्ञान का प्रकाश होना निश्चित हैं।

भीति निद्रादयो भावा समा सर्वेषु जन्तुषु ।
ज्ञान हीना नरा लोके भूतले पशवो मताः ॥ ५२ ॥

भोजन-शयन आदि बातें तो मानव तथा पशु में समान हैं मानव में ज्ञान विशेष हैं ज्ञान के विना मनुष्य भी पशु हैं ।

नरपशवोः समं कर्म शास्त्रकारै र्निरूपितम् ।
विशेषता तु ज्ञानस्य पुरुषेषुमता पुनः ॥ ५३ ॥
ज्ञानं संजायते सत्वात् गोदुग्धादि भवं हितत् ।
गवां सेवा ततो लोके विधेया मानवैः सदा ॥ ५४ ॥
कृष्णरूपं विधायातः लोक रक्षा करो विभुः ।
सिषेवे गाः पराप्रीत्या वंशीनादेन मादयन् ॥ ५५ ॥
मनः शुद्धमशुद्धं च कारणं सुख दुःखयोः ।
गोपयोऽतो सदा सेव्यं शोद्धयितुं स्वकं मनः ॥ ५६ ॥
सर्वं देवालयो बोध्यो धेनुदेहः प्रमाणतः ।
तत्सेवा सर्व देवानां सेवा भवितु मर्हति ॥ ५७ ॥

नर वा पशु का अन्तर केवल ज्ञान से है वैसे तो दोनों समान हैं । ज्ञान सत्व से और सत्व गाय के दूध से होता है इस लिये गाय की सेवा परम धर्म है । भगवान् श्री कृष्ण जीने वंशी बजाते बजाते गौओं की निरंतर सेवा की । मन ही सुख दुख का कारण है अतः शुद्ध मन के लिये गाय का दूध पीना चाहिए गाय के देह में सब देव रहते हैं इस लिये गो सेवा से सब देव पूजे जाते हैं ।

श्री गुरुदत्तनामेह महात्मा लोक विश्रुतः ।
श्रेयस्कामैः सदा देयं दानं दीनेषु गोष्विति ॥ ५८ ॥
उपदिश्य बहून् शिष्यान् गो सेवायां न्ययोजयत् ।
द्रव्य दानं कृते तासां देयं योग्यैः सदा ततः ॥ ५९ ॥
गावो यथा तथा छात्रा रिक्ता ये सन्ति दैवतः ।
दान योग्या विचारेण तेभ्यो देयं स्वकं धनम् ॥ ६० ॥
त्यागशब्दार्थयोरेकं दानं पात्रेषु कीर्तितम् ।
आसक्ति शून्यता तस्य द्वितीयोऽर्थः मतो बुधैः ॥ ६१ ॥

श्री गुरु दत्त नाम के महात्मा जी ने गो रक्षा वास्ते दान करने का उपदेश अपने शिष्यों को दिया इसी प्रकार निर्धन छात्रों को धन दान देना चाहिए त्याग शब्द का एक अर्थ तो दान करना है और दूसरा अर्थ आसक्ति का अभाव है ।

ज्ञानिनोऽज्ञानिनो वापि पदार्थभोग्यता समा ।
आसक्त्या बध्यते ह्येको नेतरस्तदभावतः ॥ ६२ ॥
चरन् संसार यात्रायां मानवो भूतिमिच्छुकः ।
जह्यात् सक्ति महादुःखां निन्दनीयां विवेकिभिः ॥ ६३ ॥
शास्त्रेषूक्तं बहुत्रैव विद्यावृद्धै र्महर्षिभिः ।
द्विविधा वर्तते सृष्टिः मानसी च बहिर्भवा ॥ ६४ ॥
बध्नाति पुरुषं लोके मानस्यासक्तिजा ननु ।
न बाह्येति सदृष्टान्तं वाक्येनाग्रेण कथ्यते ॥ ६५ ॥
देशान्तरं गतं बन्धुं जीवन्तमपि वंचकात् ।
मृतमाकर्ण्य मूढोऽयं जनः रोदित्यहर्निशम् ॥ ६६ ॥

ज्ञानी में आसक्ति नहीं होती इस लिये वह मुक्त हैं अज्ञानी में आसक्ति होती हैं इस लिये वह बंधा है। संसार में रह कर मानव को आसक्ति न करनी चाहिए क्यों कि इस से दुःख होता है। शास्त्रों में दो प्रकार की सृष्टि कही है मानसी और बाह्य। उन दोनों में मानसी ही बंधन का कारण है बाह्य नहीं। जैसे बन्धु के दूर होने पर ठग की वाणी से उस का झूठा मरण सुन कर मनुष्य रोता है रोने में कारण मानसी भाव है।

नदी मुत्तीर्य यातेषु दशस्वपि यथासुखम् ।
मिथस्ते गणयामासु रात्मवर्जं नवापरान् ॥ ६७ ॥
वारं वारं शिरस्ताड़ं रुरुदे दशमो जनः ।
तत्रापि मानसी सृष्टिः कारणँ तस्य रोदने ॥ ६८ ॥
दुःखस्य हेतुभूतेय मासक्तिः सर्वशो जनैः ।
त्याज्येत्यस्य द्वितीयोर्थः त्यागशब्दस्य संमतः ॥ ६९ ॥
गृहस्थानां कृते दानं यथा शास्त्रे निरूपितम् ।
तथान्येषां कृते चेह तपः कार्यं जगौ वरम् ॥ ७० ॥
पूर्वोक्त कर्म वर्गोऽयं मल दोषनिवारकः ।
श्रद्धया सर्वदा कार्यः मनःशुद्ध्यभि लाषिभिः ॥ ७१ ॥

कहीं दस लोगों ने नदी पार की फिर गिना तो नौही बने क्यों कि गिनने वाले ने अपने को नहीं गिना और रोने लगे। अतः यह आसक्ति दुःख रूप हैं इस का त्याग करना चाहिये यह त्याग शब्द का दूसरा अर्थ है। गृहस्थों के लिये जैसे दान कहा गया है वैसे ही औरों वास्ते तप करना कहा है अतः मन की शुद्धि चाहने वाले शुभ कर्म अवश्य करें।

कर्मणां चेतसः शुद्धिः केवलं मन्यतां यदि ।
फलं पुत्रादिकं तेषां कथं शास्त्रेषु कीर्तितम् ॥ ७२ ॥
कृतामेतां समाकर्ण्य शंकां श्रोतृषु केनचित् ।
जगादैभ्यस्तदा स्वामी श्रूयतां कथयामि तत् ॥ ७३ ॥

मन की शुद्धि यदि कर्मों का फल है तो शास्त्रों में पुत्र धन आदि फल क्यों कहा गया है इसका उत्तर देते हुए महात्मा जी ने कहा कि आप की शंका का समाधान मैं करता हूँ आप श्रोता जन ध्यान से सुनें।

रोगिणं बालकं माता दृष्ट्वादित्सति ह्यौषधिम् ।
नाददाति त्वसौ बालो ब्रुवन् कटु कटु त्विति ॥ ७४ ॥
माता याति ततश्चिन्ता मौषधिं नु कथं पिबेत् ।
निवर्तेत् कुरोगोऽयं स्वस्थो मे बालको भवेत् ॥ ७५ ॥
पिब पुत्रक दास्यामि मोदकं यदि पास्यसि ।
मातुरेद्वचः श्रुत्वा बालः पिबति सादरम् ॥ ७६ ॥
रोगस्तस्य गतो नाशं पूर्णो मातृ मनोरथः ।
गदे नष्टे तुबालोऽसौ स्वस्थो विक्रीड़ति स्फुरन् ॥ ७७ ॥
रोगनाश स्तदानींतु मातुरिष्टं न मोदकम् ।
गौणं तु मोदकादान मेवमत्रापि बोध्यताम् ॥ ७८ ॥

रोगी बालक को देख कर माता दवाई देना चाहती है परन्तु बालक कड़वी दवाई नहीं लेता माता सोचती है कि यह दवाई कैसे पीवे ताकि रोग दूर हो। माता कहती है कि बेटा दवाई पीलो तो लड्डू मिलेगा तब वह खुशी से दवाई पी लेता है रोग चला गया माता प्रसन्न हो गई अब बालक खेल रहा है यहां पर माता का विचार रोग का नाश में था लड्डू का विचार तो मुख्य नहीं था ऐसे ही यहां समझ लें।

वेदो माताहितैषित्वात् बाला सर्वेपि जन्तवः ।
अज्ञान रोग संग्रस्ताः भवन्ति व्याकुला भृशम् ॥ ७९ ॥
वेदो माता तदानीं तु कर्मरूपां महौषधिम् ।
दित्सतीमे न गृह्णन्ति चिन्तयन्तो व्यथामिव ॥ ८० ॥
चित्रं फलं वदत्यग्रे पुत्र दारादिकं किल ।
हृदयाकर्षकं चेह माता तन्मोदकं यथा ॥ ८१ ॥
लोभग्रस्ताः भवन्तीमे कर्मौषधिजिघृक्षवः ।
रोग मुक्ति च संप्राप्य सुखं गच्छन्ति सर्वथा ॥ ८२ ॥

वेद सब को माता है सभी जीव बालक हैं अज्ञान का रोग सब को लगा है वेद ने कर्म की दवाई बताई किन्तु इसे इन्होंने माना नहीं कि पीड़ा होगी तो वेद माता ने पुत्र धन आदि फल आगे रख दिया जैसे माता ने मोदक रखा था तब लोभ से कर्म को करना मान लिया अज्ञान रोग गया और सुखी हुए।

शास्त्रोदितं विधिं कृत्वा पुरस्तात् मानवः किल ।
करोति चेत् सुकर्माणि फलं याति तदामलम् ॥ ८३ ॥
पुत्रदारादि निर्देशः प्रवृत्यर्थः स केवलः ।
फलं वास्तविकं शुद्धिः कर्मणा मवगम्यताम् ॥ ८४ ॥
अथवा क्षीणदृक् शक्ति प्रतिपच्चन्द्र दर्शकः ।
प्रासादाद्यं समाश्रित्य चन्द्रं दर्शयति क्रमात् ॥ ८५ ॥
अणोरणीयानित्यादि वाक्यै स्तस्यास्ति सूक्ष्मता ।
स्थूलैरुपाधिभिस्तस्य स्थूलबुद्धि प्रदर्शनम् ॥ ८६ ॥
वेदोऽप्यतः पुरस्कृत्य कर्मकाण्डादिकं किल ।
क्रमशो दर्शयत्येव सूक्ष्मं रामं परेश्वरम् ॥ ८७ ॥

शास्त्र में कही गई विधि से किये गए कर्मों का फल मन की शुद्धि ही है। पुत्र स्त्री आदि का कथन तो केवल प्रवृत्ति के लिए है कर्म का असली फल तो शुद्धि ही है। अथवा जैसे मन्द नजर वाले मानव को कोई दूसरा द्वितीया के चांद को मकान आदि के द्वारा दिखाता है। इसी प्रकार सूक्ष्म ब्रह्म को स्थूल कर्म काण्ड आदि उपाधि के द्वारा दिखाया गया है।

विक्षेपाख्य द्वितीयस्य दोषस्य विनिवृत्तये ।
कथितोपासना शास्त्रे बुधै स्तत्वविशारदैः ॥ ८८ ॥
उपासना स्वरूपं तु कथितं शास्त्र पारगैः ।
व्यवधानान्तरायुक्ता चेतसो ध्येय संस्थितिः ॥ ८९ ॥
तथाऽऽवरण दोषोऽपि तृतीयो नश्यति क्रमात् ।
ज्ञानेन वेद जातेन तदानन्द मयो भवेत् ॥ ९० ॥
साधूनां यन्मतं सत्यं तन्मया वो निरूपितम् ।
साधकानां त्वसौ मार्गो, निःश्रेयस्करो मतः ॥ ९१ ॥
विविच्यैवं महात्मासौ तेषां जिज्ञासिते पदे ।
तूष्णीं बभूव सन्तुष्टो हृष्ट श्रोतृ विलोकनात् ॥ ९२ ॥

विक्षेप नाम का दूसरा दोष उपासना के द्वारा दूर होता है । लगातार इष्ट देव के ध्यान को उपासना कहा जाता है। आवरण नाम का तीसरा दोष ज्ञान के द्वारा दूर होता है यह साधु जनों का मत कहा गया है आप लोग इसे धारण करें। महात्मा जी ने इस प्रकार श्रोताओं की जिज्ञासा पूर्ण की और मौन कर लिया।

इति विभुगदितस्याशेष वेदस्य तत्वम् ।
मधु मधुरिम वाचा स्वामिना भाष्यमाणम् ॥
मुदमधिगतपारां प्राप्नुवन्तो निशम्य ।
शम दम सहनादि प्रार्थयन्तः प्रणेमुः ॥ ६३ ॥

इस प्रकार महात्मा जो के द्वारा बताये गए वेद के सार को मीठो २ भाषा में सुन कर सब को बहुत हर्ष हुआ और हित की प्रार्थना करते हुए सब ने प्रणाम किया।

इति वेदाना मीश प्रापकता प्रदर्शनं नाम नवमः सर्गः ।

---

# अथ वेदानां राम प्राप्ति द्वारा मोक्षहेतुता कथनं नाम दशमः सर्गः ।

चिरं विचार्य तेऽपृच्छन् स्वामिनं सामसेवितम् ।
करुणावरुणागार न तृप्यामस्तवोदितैः ॥ १ ॥
ब्रूहि नो वेदमाश्रित्य लब्धरामस्य योगिनः ।
कः स्यात्सुख विशेषोऽत्र कावा स्यात्सिद्धि रुत्तमा ॥ २ ॥
इति जिज्ञासुभिः पृष्टः प्राह श्रीमान् हसन्मुखः ।
तापत्रयनिवृत्तिं तत् मुख्यसाध्यं निबोधत ॥ ३ ॥
संचितः कर्मवर्गस्तु प्राणिनो बन्धकारकः ।
तस्मिन् साक्षात्कृते देवे समूलं क्षीयते खलु ॥ ४ ॥
रामप्राप्तेः फलं भद्राः वाक्येनानेन दर्शितम् ।
कथ्यतेऽग्रेऽपि यतन्मे सावधानैर्निशम्यताम् ॥ ५ ॥

बहुत विचार के बाद उन्होंने स्वामी जी से पूछा हे दयालो । हम आप के शब्दों से तृप्त नहीं होते। आप बताएं कि वेद के द्वारा राम को पाकर क्या सुख और सिद्धि होती है। ऐसा पूछने पर महात्मा जी ने हंसते हुए कहा कि तीनों तापों की

निवृत्ति ही मुख्य फल है उस देव का दर्शन होने पर कर्म जाल समाप्त हो जाता है, यही फल राम की प्राप्ति का है। कुछ और भी सुनो।

पुरुषैः पौरुषेणेह लभ्या भावा मता इमे ।
चत्वारो धर्मकामाद्या मोक्षस्तेषु परो मतः ॥ ६ ॥
नाशशीलाः त्रयः पूर्वे मोक्षो नित्योविनिश्चितः ।
त्रितयापेक्षया श्रेया न्नत एवैष रूपितः ॥ ७ ॥
सर्वथा दुःखरूपस्य संसारस्य निवर्तनम् ।
विनिर्णीतं तु शास्त्रज्ञैः मोक्षं जानीत सज्जनाः ॥ ८ ॥

जीवों का चार पदार्थ प्राप्त हैं धर्म, अर्थ, काम, मोक्ष, चारों में मोक्ष उत्तम है। क्योंकि पहिले तीन नष्ट होते हैं मोक्ष नित्य है इस लिये यह तीनों में श्रेष्ठ है। सर्वथा संसार की निवृति को मोक्ष कहा गया है।

इतीष्टानिष्ट भावानां विचारेणावधार्यताम् ।
वियोगयोग रूपत्वात् संसृतिर्दुःखरूपिणी ॥ ६ ॥
संयुक्तो दुःखदोऽसाधुः वियुक्तः साधुरेवच ।
दुःखदौ द्वौ प्रतीयेते तथान्येऽपि पदार्थकाः ॥ १० ॥
योगेन जायते दुःखं दोष संयुक्त वस्तुनः ।
वियोगेन तथान्येषां विषादी जायते ध्रुवम् ॥ ११ ॥
नियमोऽयं न चैकत्र सर्वत्रैव समो मतः ।
विविधेषु शरीरेषु सर्वदा मति शालिभिः ॥ १२ ॥
वियोग योगरूपेयं दुःखदा संसृतिः किल ।
जन्मादिक विकारैश्च गर्भावासादिभिस्तथा ॥ १३ ॥

बुरे और भले भावों के योग तथा वियोग के कारण संसार दुःख रूप है। दुष्टों का योग दुःख देता है और सजनों का वियोग दुःख देता है यही दशा सब पदार्थों की है। दोष वान् के योग से और गुणवान् के वियोग से दुःख होता है यह नियम सब में एक जैसा माना गया है। योग-वियोग तथा जन्म आदि विकारों से यह संसार दुःख पूर्ण है।

पुष्पितां सृष्टि मालोक्य तादृगाशो भवेज्जनः ।
प्राप्तौ प्रयत्नशीलेन कष्ट भूयोऽनु भूयते ॥ १४ ॥
महादुःखेन लब्धाना मर्थानां सुख हेतुता ।
न दृष्टास्ति यतश्चान्ये नरा ईर्ष्या परायणाः ॥ १५ ॥

लब्धा अपि न तिष्ठन्ति यतश्चैते रसादयः ।
वियुक्तस्य हि यद्दुखं वक्तुं तन्नैव शक्यते ॥ १६ ॥
स्थायिनोऽपि भवेयुश्चेत् कंचित् कालं कथंचन ।
ध्रुवं स्वरूप कार्श्यं स्यात् विषयैः सहवासिनः ॥ १७ ॥

फूल की तरह सृष्टि को देख कर मन में आशा होती है फिर प्राप्त करने वाला यत्न करता है । कष्ट के द्वारा मिले पदार्थों में भी सुख नहीं क्योंकि दूसरे ईर्षा करते हैं फिर यह पदार्थ टिकते नहीं यदि टिकें भी सही तो शक्ति का नाश करते हैं ।

त्यजन्तं मांस पिण्डं वै दृष्ट्वा चीलक मेककम् ।
दत्तात्रेयाभिधो योगी गुरुं मेने तु तं खगम् ॥ १८ ॥
येषां केषांचिदेवेह चेतसि स्यात् सुखस्पृहा ।
विषया विषतुल्या हि हेया ध्येया न कर्हिचित् ॥ १९ ॥
अत एव विचार्येत्थं सज्जना जगती तले ।
हातु मेतान् समीहन्ते वसन्तोऽपि यथा तथा ॥ २० ॥
संयोज्य चेतसा वृत्तीः सर्वाः खानां बलेन वै ।
तमेकं परमानन्दं चिन्तयन्ति मनस्विनः ॥ २१ ॥

मांस का टुकड़ा फेंकने वाली चील को दत्तात्रेय जी ने इसी कारण गुरु माना था । जो भी जीव सुख चाहते हों उनको विषय विष की तरह त्याग देने चाहिएं । इसी विचार से भले आदमी जैसे तैसे इनका त्याग करते हैं बुद्धिमान् सब वृत्तियों को एक करके परमानंद का ध्यान करते हैं । कच्छप जैसे इन्द्रियों का संयम करके जगत का त्याग कर परमात्मा में लीन हो ।

वशीकृत्येन्द्रियग्रामं काच्छपीं वृति मास्थिताः ।
उदासीना जगज्जालात् सज्जन्ते परमात्मनि ॥ २२ ॥
त्यागभाव रसज्ञा ये सन्ति सन्तस्तु भूतले ।
लोकेभ्यस्तै रयं सत्यः सिद्धान्तो ह्युपदश्यते ॥ २३ ॥
श्रूयते हि पुरा कश्चित् महात्मा मोह मागतः ।
हित्वासौ मानुषं देह मृष्यशृङ्गोभ वत्किल ॥ २४ ॥
तथा सम्बन्धिनोऽप्येते सर्वे स्वार्थ परायणाः ।
तत्र कल्याणबुद्धिर्या सैव ज्ञेयाति मूर्खता ॥ २५ ॥
विहंगमाः समायान्ति फलपुष्पान्विते तरौ ।
तद्विहीनं तु मुञ्चन्ति तथा सम्बन्धिनोऽप्यमी ॥ २६ ॥

इस रस को जानने वाले सन्त जन इस सिद्धान्त को कहते हैं। सुना जाता है कि कोई महात्मा मोह के कारण मानव तन का त्याग कर सींग वाले बने थे। सम्बन्धि लोग भी सब स्वार्थी होते हैं सुख की आशा उनसे नहीं करनी चाहिये जैसे फले फूले पेड़ पर पक्षी आते हैं वैसे ही सम्बन्धी भी स्वार्थ के कारण पास आते हैं।

भिलजातीयकः कश्चित्, युवा वाल्मीकि संज्ञकः।
बुबुधे भाव मेतस्य पुरा सप्तर्षि वाक्यतः ॥ २७ ॥
रघोः कुले समुत्पन्नः सार्वभौमो नृपो ह्यजः।
वियोगजं महादुःखं भुक्तवान् भूपतिर्महत् ॥ २८ ॥
विषाक्तान्नमिवास्तीदं भोग्यजालं जगत्त्रये।
ज्ञायते चानया रीत्या दुःख हेतुत्व मस्य वै ॥ २९ ॥
सज्जनैः सह संगत्या वेदवेदार्थ सेवया।
यान्ति देवं यदा रामं चराचर निवासिनम् ॥ ३० ॥
तदात्यन्तविनाशो यः सृष्टेर्मोक्षो निरूपितः।
पुरुषार्थं परं तं तु सुख माप्नोति मानवः ॥ ३१ ॥

युवा भील बाल्मीकि ने सप्तऋषियों की बाणी से इस बात को जाना था। रघुकुल के महाराजा अजने वियोग के कारण महान् दुःख सहा था। संसार के भोग विष वाले अन्न की तरह हैं। सत्संग से वेद श्रवण से जब जीव राम को पा लेता है। तब संसार का सर्वथा नाश होने पर मोक्ष होता है।

विना सत्संगते नान्यत् साधनं वर्तते खलु।
समूलं प्राप्नुयादस्य यतस्तापत्रयं क्षयम् ॥ ३२ ॥
नारदाय समादिष्टो मोक्ष एवंविधः पुरा।
मुनिभिः सनकाद्यैश्च प्रपन्नायात्मबुद्धये ॥ ३३ ॥
हृदयस्था यदा कामा निवर्तन्तेऽस्य देहिनः।
तदा यातः परं ब्रह्म स्वतन्त्रो जायते किल ॥ ३४ ॥
चूड़ाला कापि तत्वज्ञा शरच्चन्द्रनिभानना।
तथाविधं विविक्तस्था मोक्षं भर्त्रे दिदेशह ॥ ३५ ॥

सत्संग ही तीन ताप मिटाने का मुख्य साधन है सनत्कुमार जी नें नारदमुनि को इसी प्रकार मोक्ष का रूप बताया है। जब सब कामना समाप्त होती हैं तब जीव भगवान् को पा कर सुखी होता है। चुड़ाला रानी ने कभी अपने राजा को इसी प्रकार से मोक्ष बताया था।

नामृतत्वं भवेद्येन तेन नास्ति प्रयोजनम्।
भर्त्रे निवेदयामास मैत्रेयी सत्परायणा ॥ ३६ ॥

हित्वा संसार भोग्यानि प्राप्यात्मानं तथैवच ।
मोक्षं प्राप्य तु मैत्रेयी नित्यं सुखं समन्वभूत् ।। ३७ ।।
व्यापकं सच्चिदानन्दं यदा पश्यति मानवः ।
कारणे बिलयं याते तापाँस्त्रीन्नाभिपश्यति ।। ३८ ।।
मायानिद्रावृता लोके विश्वं पश्यन्ति निश्चलम् ।
जागृतास्तु न पश्यन्ति स्वप्नं निद्राविनाशतः ।। ३९ ।।
साक्षात्काराय रामस्य यदा वेदः प्रकाशते ।
छित्वा संसारजं दुःखं, तदा मोक्षो ह्यवाप्यते ।। ४० ।।

मैत्रेयी ने पति से कहा था कि मैं धन को क्या करूं जिस से मैं अमर न हो सकूं । मैत्रेयी ने विषयों को त्याग कर ज्ञान के द्वारा मोक्ष को प्राप्त किया था । जब जीव प्रभु को पा लेता है तब इस के तीनों ताप नष्ट हो जाते है। माया के मतवाले संसार को सत्य मानते हैं परन्तु ज्ञानि जन इसे सपना जानते हैं। जब वेद के ज्ञान द्वारा राम का ज्ञान होता है तब मोक्ष मिलता है ।

सर्वथैव परित्यज्यास्योपाधीन् भेदकारिणः ।
तदेति ध्यायते बुद्धया मूलतत्त्वं यदा नरः ।। ४१ ।।
पुरस्कृत्य तदैक्याय भागत्यागाख्य लक्षणाम् ।
मनुते तद् यदा मत्या तदभेदं तदैत्ययम् ।। ४२ ।।
कृत्वैकाग्रां स्वकां बुद्धिं हित्वा संसारजां दशाम् ।
भावयन् भाव मेकान्तं तरतीमं भवं खलु ।। ४३ ।।
ईदृगस्ति पदं तत्तु भेदहीनं समेति यत् ।
जराजन्मादि भावानां यत्र लेशो न विद्यते ।। ४४ ।।

भेद जनक उपाधि का त्याग कर इसका ध्यान करें भाग त्याग लक्षणा के द्वारा विचार करने से मानव को सही ज्ञान होता है। एकाग्र बुद्धि के द्वारा संसार दशा का त्याग करने से मानव संसार सागर को तर जाता है। यह ऐसा पद है जहां जन्म मरणादिक भावों का लेश भी नहीं रहता ।

वेदचिन्तन शीलस्य लब्धरामस्य धीमतः ।
लाभोऽयं कथितो मोक्षः पुरुषार्थः परो मया ।। ४५ ।।

मानवा विरलाः केचित् पुण्यपुञ्जविवेकिनः ।
प्रजर्तन्ते विहायैतत् सदाश्रेयस्करे पथि ।। ४६ ।।

भाग्यशीला भवन्तोऽपि प्रवर्तन्ताम् मयेरिते ।
शुभे मार्गेऽस्य दृश्यस्य चिन्तयित्वा त्वनित्यताम् ।। ४७ ।।

तेषां प्रश्नानुरूपं वै वाक्यमुक्त्वा समासतः ।
श्री स्वामी शान्तचेतस्को मौनमेवाश्रितस्ततः ॥ ४८ ॥
तेषां मनांसि लीनानि तदुक्ते केवले रसे ।
गतो मोहो गता चिन्ता वासनाजालहैतुकी ॥ ४९ ॥

वेद के द्वारा राम को पाने वाले का परम लाभ मोक्ष कहा गया है । कुछ विरले धर्मात्मा लोग ही इस ओर आते हैं आप लोग भी संसार को मिथ्या जान कर इसी मार्ग में प्रवृत्त हों । इस प्रकार उनके प्रश्न का उत्तर देकर स्वामी जी ने मौन धारण किया । उनका मन उसी रस में लीन हुआ न मोह रहा न चिंता रही ।

निधानं विद्यानां गतविकृतितत्वस्य निलयात् ।
कृपागारस्यास्यात् श्रुतिविदितभावैकजलधेः ॥
निशम्यैतत्तत्वं विशदहृदयासेव्यममलम् ।
जनास्ते वेदानां जय जय जयेत्येव मवदन् ॥ ५० ॥

कृपालु निर्विकार ज्ञान के सागर महात्मा जी से इस विमल तत्व को सुन कर सब ने वेदों का जय जय कार किया ।

इति वेदानां रामप्राप्ति द्वारा मोक्ष हेतुता कथनं नाम दशमः सर्गः ।

---

# अथ भगवद्दर्शनं नामैकादशः सर्गः ।

गोपालदासस्य पुनीत लीला पुनन्ति सांनिध्यवतो मनुष्यान् ।
तास्वेव काचित्तु प्रदर्श्यतेऽत्र चेतः पुनीतं पठतो यतः स्यात् ॥ १ ॥
मार्गे परानन्दफले दयालुः लोकान् समानेतुमिहेहमानः ।
शास्त्रानुरूपं विविधं सुकर्म कुर्वन्महात्मा व्यलसच्चिरेण ॥ २ ॥
तद्दर्शनार्थं बहवो मनुष्या नार्यो नरा वा सततं समेयुः ।
दृष्ट्वैव लब्ध्वा कृतकृत्यतां ते सर्वेऽपि गेहान् प्रतिजग्मु रेते ॥ ३ ॥
रामस्य संसारहितावहस्य भूभारदैत्यौघविनाशकस्य ।
मूर्तिं ससीतानुजवायुपुत्रां मनोहरां पूजयतिस्म भक्त्या ॥ ४ ॥

स्वामी गोपाल दास जी की पवित्र लीला लोगों को पवित्र करती हैं अतः किसी लीला का यहां वर्णन करता हूं । सुख के मार्ग में लोगों को लाने वास्ते महात्मा

जी ने चिरकाल तक सभी शुभ कर्म किये। स्वामी जी के दर्शन के लिए रोज नर नारियां आया करते थे। सब के हितकारी दैत्य नाशक राम तथा सीता लक्ष्मण की प्रतिमा का पूजन करते थे।

शीततु काले तपनाय नित्यं वह्नि ज्वलन्तं निकटे न्यधत्त ।
दुग्धं तथोष्णं समयानुसारं विशुद्ध भावः समपाययत्तम् ॥ ५ ॥
हेमन्त योग्यानि समानयित्वा वस्त्राणि शीतस्य निरोधकानि ।
हे राम ते तुभ्यमिहार्पयामी त्युच्चारयन् वासयतिस्म भक्त्या ॥ ६ ॥
ग्रीष्मे सुखं स व्यजनेनवायु पार्श्वस्थितः प्रेमपरः करोति ।
स्नानं तथा शीतजलेन नित्यं श्रद्धामयः कारयतिस्म देवम् ॥ ७ ॥
सूक्ष्माणि वस्त्राणि मनोहराणि कालानुकूलं समधापयत्तम् ।
स्नानादिकं नित्यविधि विधाय स प्रत्यहं ध्यायपरायणः सन् ॥ ८ ॥
मृद्गोमयालिप्तगृहे विधाय रम्यं सुरीत्या विविधं वरान्नम् ।
परानुरागेण पुरो निधाय सीतायुतं भोजयतिस्म नित्यम् ॥ ९ ॥

सर्दी में अंगोठी जला कर तपने के लिये पास में रखते थे समय पर गर्म दूध का भोग लगाते थे। गर्म वस्त्र भी पहराते थे। हे राम आपकी वस्तु आप के अर्पण है ऐसी प्रार्थना करते थे गर्मी में पास बैठ कर पंखे से पवन करते थे शीतल जल से स्नान कराते थे सूक्ष्म वस्त्र पहिराते और फिर ध्यान करते थे। लिपे हुए स्थान पर भोजन बना कर भोग लगाते थे।

पूजावसाने निजदेवतायाः वस्त्रेण संछाद्य निवेशमार्गम् ।
निरुद्धसर्वेन्द्रियवृत्तिरेष एकान्ततोऽसेवत साधुयोगम् ॥ १० ॥
कस्मिश्चिदह्नि प्रचितोपहारैः पूजाविधिं कुर्वति माननीये ।
श्रद्धान्वितौ कावपि भक्तवर्य्यौ समागतौ श्रीयति दर्शनाय ॥ ११ ॥
तत्रागतौ तौ किमपश्यतां यल्लीला नवीना लसतीह काचित् ।
वस्त्रेण कृत्वा व्यवधानकार्यं पूजाप्रसक्तः सुतरां महात्मा ॥ १२ ॥
स श्रीमता मूर्तिमयेन वार्तां रामेण सार्द्धं कुरुते स्म भक्त्या ।
दृष्ट्वा तयो मानस विस्मयस्य सद्यः प्रभूतस्य न मानमस्ति ॥ १३ ॥
रामोऽपि तं पृच्छति हे महात्मन् मां सेवसे लग्नमनाः किमर्थम् ।
समीहसेऽभीष्टतमं यमर्थं गृहाण सन्तोषकरं यथेष्टम् ॥ १४ ॥

पूजा के बाद द्वार पर पर्दा डाल कर एकांत में ध्यान करते थे। किसी दिन पूजा के समय में दो भक्त दर्शन के लिए वहां आए आज तो उन दोनों ने एक नई लीला देखी परदे के भीतर महात्मा जी पूजा में लगे थे तथा भगवान् से वार्ता कर रहे थे ऐसा देखकर उनके मन में बहुत विस्मय हुआ। श्री राम भगवान् पूछ रहे थे कि लगातार पूजा क्यों करते हो क्या चाहते हो।

श्रुत्वोत्तरं तत्र महात्मनोक्तं तुष्टेन वाग्भिर्मधुराभिरस्य ।
भक्तं प्रभो लोभयसे सुवाचा भक्तानसारोतिनिदर्शयन् स्वम् ॥ १५ ॥
सेवैव काम्या नरजन्मनीयं पुष्पोपहारादि मनोहरा मे ।
याच्यं वरं विज्ञतमैरपीतो भिन्नं परं किं वदविश्वनाथ ॥ १६ ॥
साक्षात्कृतिर्या भवतो दृशैव मनोमहाह्लादकरी दयालो ।
तस्याः परं हे भगवन्नभीष्टं कस्यापि धीरस्य न किंचिदस्ति ॥ १७ ॥
तुष्टस्य दित्सा यदि वर्ततेते हे राम याचेऽद्य वरं यथेष्टम् ।
मनो मदीयं भवदंघ्रि युग्मे भवेदन्याभिरुचि प्रसक्तम् ॥ १८ ॥
सेवां सदाहं, स्वकरेण कुर्यां ध्यानं त्वदीयं मनसाऽऽचरेयम् ।
नामानि वाचा सततं पठेयं हे दीनबन्धो वरमाशुदेहि ॥ १९ ॥

ऐसा सुन कर महात्मा जी ने कहा कि भगवन् मुझे लोभ देते हो आपकी पूजा ही नर जन्म का फल है इस से अधिक कोई वस्तु उत्तम नहीं है । नेत्रों से आप का शुभ दर्शन ही जीव का सब से अधिक लाभ है तो भी मैं आप से वर माँगता हूँ मेरा मन लगातार आप के चरणों में लगा रहे, मैं सदा सेवा करता रहूँ ध्यान करता रहूँ यही वर दो ।

कुड्यैकदेशात्सुकृतौदयौतौ भक्तौ समग्रां शृणुतःस्म वार्ताम् ।
धन्योसि धन्योसि तदाहतुस्तौ हे राम हे राघव हेमहात्मन् ॥ २० ॥
वार्तासमाकर्ण्य ततश्चतौद्वौतदालयाद्वाह्यभुवं प्रयातौ ।
स्थल्यां यथापूर्व मवस्थितौ च संगोप्य तच्चेसि चारुहस्यम् ॥ २१ ॥
वस्त्रान्तरस्थोऽपि यथेह दीपो गुप्तः स्वसत्तां प्रकटी करोति ।
सूक्ष्मैर्बहिर्देशगतांशुजालैः पार्श्वागतेभ्यः परिदर्शकेभ्यः ॥ २२ ॥
भावस्तु ताभ्यां हृदि गोपितोऽपि यत्नेन मौनादिविधानतश्च ।
तदन्तरंगं तु विवेकवद्भिः प्रतीयते स्मानन शोभयैव ॥ २३ ॥
सामान्य रूपेण तयोः प्रसादं ज्ञात्वा विशेषेण बुभुत्सवस्ते ।
सर्वे तदा प्राक्षुरिमौ पुरःस्थौ किमर्थकोऽयं भवतोः प्रसादः ॥ २४ ॥

इस लीला को वे दोनों भक्त एक ओर से देख रहे थे तथा भगवान् वा स्वामी जी का धन्यवाद कर रहे थे । इस वार्ता को सुन कर वे दोनों मन्दिर से बाहर आकर बैठ गए । वस्त्र से ढका दीपक जैसे किरणों द्वारा अपने को प्रगट करता है । इसी तरह मन में छुपाया हुआ भी यह भाव मुख शोभा से प्रगट हुआ लोगों ने उनको प्रसन्न देखकर इसका कारण जानना चाहा पूछा कि आप को किस कारण खुशी है ।

तौ तद्गृहस्थं हृदये निधाय व्याजेन वाचावदतां पुरःस्थान् ।
महात्मनोऽयं महिमाविशेषः सुखालयस्थस्य तदाश्रितस्य ॥ २५ ॥
पूजा विधानाद्विनिवृत्य तत्र गतो महात्मापि बहिः प्रदेशे ।
विलोक्य तं भक्तगणोऽतितुष्टः पुरोन्यषीदत्त्वरयातदानीम् ॥ २६ ॥
तस्योपदेशामृत माददानः कियच्चिरं तत्र सुखेन तस्थौ ।
पश्चात्तदाज्ञा मनुसृत्य सर्वो नम्रो नमस्कृत्य पुरीं जगाम ॥ २७ ॥
स्वामी पुनः शेषविधेर्विधानं भोजादिकं देवकृते चकार ।
ततः कुटीरे समलंचकार विश्राम भूमिं समयानुसारम् ॥ २८ ॥
ऐकान्त वेलामवलोक्य भक्तौ श्रद्धापरौ तस्य समीपमाप्तौ ।
विशेष भावेन नतिं निवेद्य मुदामुदारास्थितिमुद्गिरन्तौ ॥ २९ ॥

उन दोनों भक्तों ने उत्तर दिया कि यह सब महात्मा जी की कृपा है । पूजा के बाद महात्मा जी बाहर आए और सब भक्त लोग उनके सामने बैठ गए । कुछ काल तक उनके आदेश का अमृत रस पीते रहे । फिर आज्ञा लेकर नगर को चले गए । स्वामी जी ने फिर शेष देव पूजा विधि को करके विश्राम किया ।

वेलामतीत्याद्य समागतौतौ पप्रच्छ शान्तः स महानुभावः ।
अपि प्रसन्नौ किमिति प्रपन्नौ किमद्यकिंचिद् युवयोरभीष्टम् ॥ ३० ॥
पृष्टौ तदा तेन महात्मनेत्थं नम्रोत्तमाङ्गौ तमनूक्तवन्तौ ।
जानन्नपि प्रश्नमिमं यदेषि निवेदयावो भवदाज्ञया तत् ॥ ३१ ॥
स्वामिन् भवत्पाद समाश्रयौ स्वो नान्या गतिर्नौ भवतोऽतिरिक्ता ।
सिद्धयेत्कुतोऽभीष्ट मनोरथो नौ बिना भवन्तं भगवन्निदानीम् ॥ ३२ ॥
संप्रेरितौ नाथ हृदाशायाद्य प्राप्तौ त्वदीयांघ्रि युगं वरेण्य ।
त्वयाभिलाषा परि पूरणीया सर्वोपकारैकपरोऽसि यस्मात् ॥ ३३ ॥

स्वामी जी ने पूछा कैसे आए हो बहुत प्रसन्न भी हो क्या लाभ हुआ । तब दोनों ने सिर झुका कर कहा कि आप की आज्ञा से हम कहते हैं । हे स्वामिन् हम आप के दास हैं—आप हमारा मनोरथ सफल करें इसी आशा से हम आप के पास आए हैं । आप तो परोपकारी हैं ।

श्री रामचंद्रेण सहानुगेन वार्ता परां प्रेम मयीं करोषि ।
पूजावकाशे मधुरां महात्मन् संतोषयन् साधुमनः स्वकीयम् ॥ ३४ ॥
तद्दर्शनाशा महती दयालो जातावयोः भाग्यवशादिदानीम् ।
तामद्य वात्सल्य गुणालयत्वं रीत्या कयाचित् सफली कुरुष्व ॥ ३५ ॥
वार्ता यथा प्रेममयीं करोति रामः सुरेशो भवता सहेह ।
प्रश्नोतराणीह बहूनि तावत् भवादृशाँ तत्वदृशां हि वश्यः ॥ ३६ ॥

चर्चां तथा तोषकरों परेशः साक्षात्करोत्वेव स नौ प्रसन्नः ।
एषोऽभिलाषः किल केवलोऽस्ति तं दीनबन्धो परिपूरयस्व ॥ ३७ ॥
श्रुत्वा तयोस्तां मधुरां गिरं स तुष्टो महात्मा निजगाद वाक्यम् ।
श्रद्धां समालोक्य मुदान्वितोऽहं मार्गं भवत्सिद्धिकरं दिशामि ॥३८॥

पूजा के समय आप भगवान् से बातें करते हैं यही आशा हमारे मन में बनी है आप इसे पूर्ण करें । जैसे भगवान् आप से वार्ता करते हैं वैसे हमारे साथ भी प्रेम भरी बातें करें यही अभिलाषा है आप इसे पूरा करें उन दोनों को यह बात सुन कर स्वामी जी ने कहा कि मैं सिद्धि का मार्ग कहता हूँ श्रद्धा से सुनो ।

भाग्योदयेनैव तु दर्शनेच्छा रामस्य जायेत सतां जगत्याम् ।
कृतप्रयत्नैरपि चाबुदैस्तु कश्चिन्महाभाग्यतया तमीयात् ॥ ३९ ॥
भावानुसारी भगवान् दयालुः भावेन संतुष्यति सर्वथैव ।
तुष्टो यथेष्टं स्वजनानुसारी संभाषणाद्यं निखिलं करोति ॥ ४० ॥
सर्वं जगज्जाल मिमं विहाय निवातदीपानुगतं च चेतः ।
कृत्वा यदैकान्तपदे मनुष्यो ध्यायेत्तदा तं सुतरामुपैति ॥ ४१ ॥
कश्चिन्निमग्नस्तु यथा पयोधौ चिन्ताः समस्तामनसोऽपहाय ।
विनिर्गमं चिन्तयते न चान्यत् ध्याता जनोऽप्यत्र तथाविधः स्यात् ॥४२॥
सिद्धं महामंत्र महं दिशामि वेदस्य सांगस्य रहस्य भूतम् ।
धारा प्रवाहं जपतां भवन्तौ शान्ते विविक्ते विजने प्रदेशे ॥ ४३ ॥

भाग्य से ही यह आशा बनती है भाग्य से ही कोई भगवान् को पाता है । भगवान् भावना से प्रसन्न होता है और भक्त की आशा पूर्ण करता है । जगत को भुला कर मन को टिका कर ध्यान द्वारा भक्त उसे पा लेता है । जैसे डूबने वाला जीव सब कुछ भूल कर निकलना चाहता है वैसे ही भक्त ध्यान करे । सिद्ध मंत्र बताता हूं लगातार जाप करो ।

क्षुधापिपासादि विवेक हीनौ गेहादि बन्धं मनसोऽपसार्यं ।
मंत्रं मयादिष्ट मिमं जपन्तौ रामं स्वनेत्राध्वगतं नयेताम् ॥ ४४ ॥
तदाज्ञया तौ तु विविक्तदेश, माश्रित्य बुद्धिं च निवेश्य रामे ।
यातानुयातैः रहितं जनानां मंत्रं तमेवाजपतां सुखेन ॥ ४५ ॥
सर्वोऽति यामो दिबसो द्वयोः सः पीतं न भुक्तं शयितंन ताभ्याम् ।
लग्नस्य कुत्रापि जनस्य यस्मात् पानान्नचिन्ता स्वयमेति शांतिम् ॥४६॥
निशाव्यतीताऽतिगतं यथाहः ध्यानस्थयो रेव परेश्वरस्य ।
मध्याह्न मार्तण्डशुभांशुवर्गः तौ चालयामास दिने द्वितीयेः ॥ ४७ ॥
श्रांतावनभ्यासवशात्ततस्तौ क्षुधा तृषा व्याकुलितावभूताम् ।
शुष्यन्मुखौ क्षामगलावुभौ तौ भक्तौ तितिक्षाभ्यसनेनिविष्टौ ॥ ४८ ॥

भूख, प्यास, घर, परिवार को भुला कर इस मन्त्र को जपने से आप देवता का दर्शन कर लोगे। स्वामी जी की आज्ञा से उन दोनों ने एकान्त में बैठ कर उस मन्त्र का जाप किया सारा दिन बीत गया न खाया न पीया न सोये । दिन की तरह रात भी वैसे बीत गई। दूसरे दिन दोपहर को धूप से घबरा गए व्याकुल हो गए सूख, गए, परन्तु सहते रहे ।

किंचित्क्षणं तौ चलितौ स्वलक्ष्यात् निरूद्धय चेतः पुनरेव तस्मात् ।
पुरातनीं जापगतिं प्रयातौ तद्दर्शनोत्साह परौ भवन्तौ ॥ ४९ ॥
रात्रावपीत्थं जपतोः सुमंत्रं कश्चिद्गृहीत्वा भुजयोरकस्मात् ।
संचालयित्वानिजगाद वाक्यं हे भक्तवर्यौ शृणुतं वचो मे ॥ ५० ॥
संभुज्यतां भोजन मेतदस्ति प्रेम्णा मयानीतमिदं युवाभ्याम् ।
जापं पुनर्वै क्रियताँ सुखेन रक्षा शरीरस्य यतो हि धर्मः ॥ ५१ ॥
एवं प्रकारेण निवेद्यमानौ भोक्तुं परं विस्मय मागतौ तौ ।
दातार मेनं वरभोजनस्य वाक्यं मनोहर्ष करं वदन्तम् ॥ ५२ ॥
हस्तस्य संस्पर्श सुखैर्हरन्तं, चेतः प्रभु ध्यान परं तयोश्च ।
स्नेहं परं चापि निदर्शयन्तं वाक्यं यथायोग्यमवोचतां तौ ॥ ५३ ॥

थोड़ी देर हिल गए थे फिर उत्साह से जाप करने लगे, रात का जाप करते समय किसी ने भुजा से हिला कर कहा कि भक्तवर्य भोजन करो मैं लाया हूं । फिर जाप करना शरीर की रक्षा करो ऐसीं बाणी सुन कर वे दोनों हैरान हो गए कि यह भोजन देने वाला कौन है तब समय के अनुसार दोनों ने उस से कहा ।

कोऽसीति पूर्वं परिबोधयस्व जानासि कस्मादशितं न चेति ।
का तेस्ति सम्बन्ध विशेषतेह हितं यतो नो कुरुषे प्रसह्य ॥ ५४ ॥
श्रुत्वा तयोः साधुवचस्तदानीं व्यापी विशेषाकृति रद्य रामः ।
गम्भीर भावां मधुरां गिरं स गूढ़ां ततो ज्ञान मयीं जगाद ॥ ५५ ॥
वास्यस्मि देशस्य खगोचरस्य पश्यामि लोकान निखिलान् यथेष्टम् ।
दिनद्वयाद्वां तु विविक्त संस्थौ ज्ञातं समालोक्य रहस्य मेतत् ॥ ५६ ॥
सामान्यसम्बन्ध पुरःसरोऽहं कर्तव्यताध्यान परायणश्च ।
साधारणं खाद्यमिद हि भद्रौ समानयं वामदनाय शुद्धम् ॥ ५७ ॥
प्रोक्तस्तदासा वपि निश्चयेन ताभ्यां हितैषी कुशलोऽन्नदाता ।
भोक्तव्य मस्येह मनःस्थितस्य रामस्य साक्षात्करणं विना न ॥ ५८ ॥

आप कौन हैं कैसे जानते हो कि हमने भोजन नहीं किया आप हम से प्रेम क्यों करते हो । ऐसी बात सुन कर गूढ़ बाणी से देवता ने कहा कि मैं आकाश में रह

कर सब को देखता हूँ मुझे पता है आप ने दो दिन से भोजन नहीं किया इसी लिये आप के लिए शुद्ध भोजन लाया हूं । तब उन दोनों ने कहा कि हम तो राम का दर्शन किये बिना कुछ न खाएंगे ।

धन्योऽसि भो यत्कुरुषे जनानां श्रेयोऽनपेक्ष्यैव हितं स्वकीयम् ।
गच्छ स्वगेहेऽन्नमिदं नयस्व दृष्ट्वैव यातौ परितोषमावाम् ॥ ५९ ॥
लीलाकरोऽसावपि रामचन्द्रः मायाविलासी भगवान् दयालुः ।
भावं तयोः पूर्णतमं विलोक्य संदर्शयामास तदिष्ट रूपम् ॥ ६० ॥
रामोऽह मस्मीति परीक्षणाय रूपान्तरेणेह समागतोऽस्मि ।
तुष्टोऽधुनाहं भवतोः पुरस्तात् तिष्ठामि वामिष्ट वरं प्रदातुम् ॥ ६१ ॥
यस्य प्रतीक्षा चिरकालिकीह द्वाभ्यां कृतासीत् पुरतो लसन्तम् ।
दृष्ट्वैव तं देवमति प्रमाणो हर्ष स्तयोर्वर्णयितुं न शक्यः ॥ ६२ ॥
शिरश्चिरं तस्य पदाग्रभागे संस्थाप्य हर्षं परमं प्रयातौ ।
पादौ तदेष्टस्य मुदा स्रुतेन प्रक्षालितौ नेत्रजलेन ताभ्याम् ॥ ६३ ॥

आप धन्य हो जो सब का हित करते हो जाओ भोजन ले जाओ हम आपको देखकर प्रसन्न हैं । तब भगवान् राम ने अपना रूप दिखा दिया और कहा कि मैं ही राम हूँ, दूसरे रूप से आया था, मैं प्रसन्न हूँ वर मांगो चिर काल से जिस की प्रतीक्षा थी उसे सामने देख कर वे बहुत प्रसन्न हुए, देर तक दोनों ने अपना सिर उनके चरणों में रखा और आंसुओं के जल से चरणों को धोया ।

सगद्गदं वाच मवोचतां तौ रामं रमेशं कृपया परीतम् ।
सर्वेश यांचा किल केवलेयं मनः स्थितिं यातु तवांघ्रियुग्मे ॥ ६४ ॥
अस्त्ववेमुक्त्वा भगवांस्तदानीं संगोपयामास निजस्वरूपम् ।
हर्षावृतौ तावपि तूर्ण मेव महात्मनस्तस्य गतौ समीपम् ॥ ६५ ॥
मूर्ध्ना नतौ बद्धकरौ पुरोगौ निवेदयायासतु रात्म तृप्तौ ॥
स्वामिन् कृतार्थौ कृपया तवावां नेत्रैरपश्यावनिजेष्टदेवम् ॥ ६६ ॥
इत्यादिकं तद्वचनं निशम्य सम्मानयंस्तौ स मुदा जगाद ।
मनुष्य देहस्य फलं प्रलब्धं धन्यौ भवन्तौ भगवत्कृपातः ॥ ६७ ॥
गन्तुं पुनस्तौ मुनिराह गेहं गृहस्थ धर्मस्य सुरक्षणाय ।
ताभ्यां विचारस्तु कृतः किमद्य गेहे न रामस्य कथास्ति यत्र ॥ ६८ ॥

फिर गद्गद वाणी से उन्हों भगवान् से कहा कि हमारा मन सदा आप के चरणों में रहे । एवमस्तु कह कर भगवान् अन्तंध्यान हो गए और वे दोनों महात्मा जी के पास आए । सिर झुका कर कहा कि हम कृतार्थ हो गए । ऐसी बात सुन कर

महात्मा जी ने कहा कि आप धन्य हैं अब आप घर जावो परन्तु वे घर जाने में तैयार न हुए।

इति स्वपुत्रेषु गृहस्थभारं वैराग्यशीलो सुतरां समर्प्य ।
तपोमये तत्र गतौ प्रदेशे गुरुर्महात्मा वसतिस्म यत्र ॥ ६९ ॥
जापेन सेवाकरणेन तस्य तथा कथायाः श्रवणेन वेलाम् ।
संयापयामासतु रेव मायुः शेषं तयोः सत्वमयं व्यतीतम् ॥ ७० ॥
दैवेन लोकस्य कृते कृतां तां प्रथां पुरस्कृत्य तु भूतपिण्डे ।
हित्वा प्रयातौ सुखदं पदं तौ साकेतलोकं किल निर्विकारम् ॥ ७१ ॥

इसके बाद वे सन्तान पर घर का भार छोड़ कर महात्मा जी के पास रहने लगे। जाप सेवा श्रवण आदि में शेष समय उन्होंने बिताया। फिर दैववश शरीर त्याग कर वे साकेत लोक में चले गए।

वैकुण्ठ लोकं गतयो स्तयोश्च संतानवर्गः पृथिवी निवासी ।
बभूव विश्वेश कृपैकपात्रं धनेन धान्येन च पूर्णकामम् ॥ ७२ ॥
धर्म्य सदाचार मितः सदैव सेवां सतां सन्तत माचरंश्च ।
मान्यो जगत्यां विदुषां सुमार्गे प्रतिष्ठितोऽभूद्भगवत्कृपातः ॥ ७३ ॥
कामादयो हानिकरास्तुदोषा मनोपहर्तार इमे प्रसिद्धाः ।
हित्वा तयोः सत्वपरीतगात्रां सुसंतर्ति दूरगता अभूवन् ॥ ७४ ॥
न कस्यचिद्दोष कथा कृतात्र प्रकीर्तिता नैव गुणावलिश्च ।
धर्मे नियुक्ता च मतिः सदास्याः सा संततिः पूर्वज मन्वियाय ॥ ७५ ॥
यस्यैवं कृपया नरा सुकृतिनः सिद्धिं परां संययुः ।
सर्वानात्मतयैव यश्च मनुते सांसारिकान् प्राणिनः ॥
श्रद्धेयो विदुषां सतां मतिमतां यः सर्वदा सर्वथा ॥
श्रेयो नो विदधात्वसौ समदृशां मान्यो महात्मा खलु ॥७६॥

उनके वैकुण्ठ जाने पर उनकी सन्तान भी प्रभु भी कृपापात्र बनी धर्म के मार्ग पर चलते हुए लोक में प्रतिष्ठा प्राप्त की काम आदि दोष उनकी सन्तान में कभी नहीं आए स्तुति वा निन्दा का मार्ग छोड़ कर वे धर्म मार्ग पर चले। जिस की कृपा से भक्त तरे और सभी जिस के आत्मा थे जिस पर सब की श्रद्धा है वह महात्मा सब का कल्याण करें।

इति भगवद्दर्शनं नामैकादशः सर्गः ।

——

# अथ राम नाम माहात्म्य वर्णनं नाम द्वादश सर्गः ।

विद्वन्मान्यो महातेजाः स्वामी गोपालदासकः ।
भक्तौ शास्त्रीय धर्मे च क्रमाल्लोकान्निनाय सः ॥ १ ॥
वर्षन्वै शीतलं वारि वारिदो वारि संभृतः ।
तपनातपसंतप्त भूतापं हरति यथा ॥ २ ॥
कृपामयी गिरां धाराः कृपापूर्णो वदंस्तथा ।
कामादि तापतप्तानां तापं हृत्वा ततान शम् ॥ ३ ॥
दुरात्मानोऽतिमूढ़ा ये महामोह तमोवृताः ।
गता स्तेऽपि पुरस्तस्य हृतपापा बभुः खलु ॥ ४ ॥

स्वामी गोपाल दास जी ने लोगों को भक्ति वा धर्म की ओर प्रेरित किया। जैसे मेघ वर्षा से भूमि को शीतल करता है। इसी प्रकार कृपा पूर्ण बातों से लोगों को इन्होंने शान्ति दी, मूढ़ जन भी इनके दर्शन से पवित्र हुए।

संयमादिन्द्रियाणांवा गवां यत्नेन पालनात् ।
सत्यधर्मं प्रचाराच्च जीवानां रक्षणादथ ॥ ५ ॥
स्वोपकारैर्विचारैर्वा गत्याःसर्वत्र भौतिके ।
संज्ञा गोपालदासोस्य यथार्थाभूत् भुवस्तले ॥ ६ ॥
तस्यानेकै गुणैं दिव्यै हृष्टा भूलोक मानवाः ।
चेतसान्यानि वस्तूनि हित्वैनं सर्वशो ययुः ॥ ७ ॥
श्रेयो विधायकोऽस्माकं कृपावानेष केवलः ।
जगामैतं मनस्तेषां निश्चयं सर्वदा स्थिरम् ॥ ८ ॥
कदाचित्संगतास्तेतु विविक्त स्थान माश्रितम् ।
गत्वा नत्वा महात्मानं प्रार्थयामासु रित्यमुम् ॥ ९ ॥

इन्द्रियों के संयम से गो सेवा से सर्वत्र गति होने से इनका नाम गोपाल दास सार्थक हुआ। इनके गुणों के कारण सभी लोग इनकी शरण में थे। सब के मन में विचार था कि यह हमें सुख देने वाले हैं। किसी दिन सब ने इन से प्रार्थना की।

दीनबन्धो यथा तत्वं शास्त्राणां दिशसीह नः ।
कृपाहेतो स्तथाशां नः कांचिदन्यां प्रपूरय ॥ १० ॥
विद्यमानेषु मंत्रेषु श्रीश प्राप्ति करेष्वथ ।
मंत्रमाधारभूतं त्व मेक मेव समादिश ॥ ११ ॥
यं लब्ध्वा नापराकांक्षा जायेतात्र कदाचन ।
तरेमास्मान्महाघोरात् संसारार्णवतस्तथा ॥ १२ ॥
दास भावेन पश्यन्नः मंत्रं तं त्वं समादिश ।
यतो जायेत संतोष श्चेतसश्चंचलस्य नः ॥ १३ ॥
यत श्चेतांसि नः स्वामिस्त्वां-प्रपन्नानि सर्वशः ।
अतो दयानिधे देहि वाञ्छितं मंत्र मद्भुतम् ॥ १४ ॥

हे दयालो जैसे शास्त्रों का भाव आप बताते हैं हमारी एक और आशा पूरी करो। अनेक मन्त्रों में मुख्य मन्त्र का उपदेश आप हमें करें! जिसको जप कर हम संसार से तर जावें। हमें दास जान कर शान्ति वास्ते मन्त्र दो हम आपकी शरण में हैं आप भी हम पर कृपा करें।

प्रतीक्षन्तो वचस्तस्य पश्यन्तस्तन्मुखांबुजम् ।
एवमाशावृतास्तेतु सर्वे मौनंसमाश्रिताः ॥ १५ ॥
निशम्यैषां वचः स्वामी तथा श्रद्धामयं किल ।
स्वतः कृपापरीतोऽपि जगामातः परां कृपाम् ॥ १६ ॥
हित्वा तमो जगज्जालं सत्येप्सु सज्जनान्भुवि ।
वीक्ष्य सन्तः प्रसीदन्ति स्वभावस्तद्विधः सताम् । १७ ॥
तथाविधश्च तान्नाह जिज्ञासूननया गिरा ।
श्रूयतां कथयामीष्टं मंत्रं सर्वार्थं साधकम् ॥ १८ ॥
श्री राममंत्र एवास्ति मंत्राणा मुत्तमो ननु ।
स एव सर्वदा गेयो भवद्भिः सर्वथा शुभाः ॥ १९ ॥

इसके बाद उत्तर की प्रतीक्षा में वे सब उनकी ओर देखने लगे। स्वामी जी उन की यह बात सुन कर बहुत प्रसन्न हुए। सन्त जन धर्मात्मा लोगों को देख कर प्रसन्न होते हैं। तब महात्मा जी ने उनसे कहा कि मैं सिद्ध मन्त्र कहता हूं। श्री राम मन्त्र ही उत्तम मन्त्र है आप उसे ही जपा करें :

षडक्षराद्राममंत्रात् वरो मंत्रोऽस्ति नापरः ।
जापकस्य भवेन्मुक्ति : लोके नास्त्यत्र संशयः ॥ २० ॥
माहात्म्यं राममंत्रस्य सर्वशास्त्रेषु घोषितम् ।
दिङ्मात्रं कथयाम्यद्य श्रेयसे भवता महम् ॥ २१ ॥

श्रूयतां ध्यानमाधाय रहस्यं साधुसंमतम् ।
तदाश्रित्य परं श्रेयो लभध्वं भक्तिसंयुताः ॥ २२ ॥
तारणाद्धे भवाम्भोधेः तारको योबुधैः मतः ।
शंकरेण धृतो भक्त्या मृतानां मुक्तये किल ॥ २३ ॥
यथा श्रेष्ठतमो लोके खगानां विष्णुवाहनः ।
तथा सर्वेषु मंत्रेषु राममन्त्रो वरो मतः ॥ २४ ॥

राम मन्त्र ही सब से उत्तम है। इसके जाप से मुक्ति होती है राम मन्त्र की महिमा बहुत है थोड़ा ही कहता हूँ। आप ध्यान से सुनें तथा कल्याण प्राप्त करें। इस मन्त्र को तारक मन्त्र कहते हैं। शिवजी ने मृतकों की मुक्ति के लिए यही मन्त्र धारण किया हैं। पक्षियों में जैसे गरुड़ वैसे ही मन्त्रों में राम मन्त्र श्रेष्ठ है।

सन्त्यनेकेहि मंत्रास्तु लोक कल्याण कारिणः ।
मूलं तेषां तथापीमे राममंत्रं वदन्त्यमुम् ॥ २५ ॥
बहूनि तस्य नामानि कथितानि मुनीश्वरैः ।
सर्वेभ्यो गीयते किंतु रामनामाधिकं खलु ॥ २६ ॥
षडक्षरात्मको मंत्रः पापपुञ्ज विनाशकः ।
रसनाग्रे परप्रीत्या धारणीयः प्रयत्नतः ॥ २७ ॥
नाना जन्मार्जिता येऽघाः मानवस्य भयावहाः ।
जिह्वया गीयमानेऽस्मिन् नाश मायान्ति तत्क्षणात् ॥ २८ ॥
यस्यादौ राजते रेफो मकारश्चान्तिमो ध्वनिः ।
तस्य मंत्रस्य माहात्म्यं शक्यं वक्तुं न वाचया ॥ २९ ॥

भगवान् को पाने के वास्ते अनेक मन्त्र हैं परन्तु यह तो मूलमन्त्र है। प्रभु के नाम अनेक हैं सब में राम नाम विशेष है। राम मन्त्र पाप पुंज का नाश करता है। राम का नाम लेते ही कई जन्मों के पाप नष्ट होते हैं। जिसके आदि में र और अन्त में म उसकी बड़ी महिमा है।

दृश्यमानं जगत्सर्वं मायाजालनियंत्रितम् ।
प्रभावाद्राममंत्रस्य मुच्यते कर्म बन्धनात् ॥ ३० ॥

यह सारा जगत कर्म का बना हुआ जाल है। राम नाम लेते ही यह सब जाल टूट जाता है।

राम नाम्नोऽधिकं तत्वं न जातु क्वापि दृश्यते ।
सर्वथा वेद शास्त्रेषु मार्गणेनापि भावुकाः ॥ ३१ ॥
काश्यां भागीरथीतीरे मणिकर्ण्यां महेश्वरः ।
मृतेभ्यो रामनाम्नैव मुक्तिं यच्छत्यखण्डिताम् ॥ ३२ ॥

समीरितं हि रामेण त्रैलोक्य स्वामिना स्वयम् ।
राममंत्रं जपन्ते ये सिद्धास्ते यान्ति मत्पदम् ॥ ३३ ॥
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमाः ।
रामनाम जपेनैव महा पापानि यान्ति शम् ॥ ३४ ॥
शरीरेऽस्मिन् कृतं यद्वा पूर्वं जन्मस्वनुष्ठितम् ।
मानवेन महत्पापं क्षीयतेऽनेन मूलता ॥ ३५ ॥

राम नाम से बड़ा तत्व कोई नहीं है। काशी में शिवजी राम नाम से ही जीवों को मुक्ति देते हैं। राम मन्त्र का जाप करके भक्त परम पद पाते हैं। हत्या, चोरी, व्यभिचार जैसे पाप राम नाम से नष्ट होते हैं। इस जन्म के तथा पूर्व जन्मों के पाप राम नाम से भस्म हो जाते हैं।

राममन्त्र प्रभावेण भीता धावन्ति दूरतः ।
भूतप्रेतादयो दुष्टाः दुःखदा कारणं बिना ॥ ३६ ॥
साधको राममंत्रस्य जनोर्थं यं लमीहते ।
विलोकते विनायासं हस्तामलकवत्तुतम् ॥ ३७ ॥
निरादरः कृतो येन गुरूणां वै प्रमादतः ।
ततो जातं महापापं रामनाम्ना विनश्यति ॥ ३८ ॥
हरि द्वारादि तीर्थानां यात्राया यन्महत्फलम् ।
अस्मिन्नन्तर्हितं सर्वं विद्यते श्रूयते हि तत् ॥ ३९ ॥
हृदयाह्लादको मन्त्रो नेदृगन्योऽत्र विद्यते ।
जपन्तो नैव विश्रांति मिमं गच्छन्ति सज्जनाः ॥ ४० ॥

राम मन्त्र के प्रभाव से भूत प्रेत आदि सब भाग जाते हैं राम नाम का जाप करने से सब कामना पूर्ण होती हैं। गुरु का अपमान करने से होने वाला पाप राम नाम से दूर होता है। सभी तीर्थों का फल राम नाम में निहित है। इस जैसा आनंद-दायक मन्त्र और नहीं है।

पुमांसो योषितो वापि पुरा चैनं समाश्रिताः ।
विनाश्य पापकर्माणि गता रामस्य सन्निधिम् ॥ ४१ ॥
सूर्यो यथोदितो घोरं हन्ति संसारगं तमः ।
नरस्यान्तःस्थितं हन्ति तथाज्ञानतमस्त्वयम् ॥ ४२ ॥
महामूढो नरो जातु जपेतेकाग्र मानसः ।
मंत्र मेतं त्रिकालज्ञो भवेन्नैवात्र संशयः ॥ ४३ ॥

भजते यो वशी भूत्वा राममंत्रं षडक्षरम् ।
सिद्धयो निधयश्चैनं सेवन्ते बद्धपाणयः ॥ ४४ ॥
रामजापान्नरो लोकान् दृष्ठि गोचरतांगतान् ।
पुनाति दर्शनेनैव स्वयं पूतो नरोतमः ॥ ४५ ॥

नर नारी इसके जाप से राम को पा लेते हैं। सूर्य जैसे तम को मिटा देता है, वैसे ही यह अज्ञान को मिटाता है। महा मूढ़ यदि इसे जपे तो वह त्रिकाल दर्शी हो जाता है। इस मन्त्र को जपने से सिद्धि वा निधि प्राप्त होती हैं राम नाम का जाप करने वाला दर्शन से औरों को पवित्र करता है।

विश्वेश्वरं यथा सर्वे नमस्कुर्वन्ति जन्तवः ।
प्रणमन्ति तथा भक्तं प्रणतास्तस्यतेजसा ॥ ४६ ॥
जप्तारो राममंत्रस्य यस्मिन् देशे बसन्ति च ।
प्रवेशस्तत्र भीतीनां जायते न कथंचन ॥ ४७ ॥
तुष्टो रामस्तु जापेन शीघ्र मागत्य सन्निधिम् ।
प्रसादयन् मनस्तस्य ददातीष्ट फलं शुचि ॥ ४८ ॥
जात भाग्योदयः कश्चित् राम दर्शन लालसः ।
जितेन्द्रियो राममंत्रं जपत्येकाग्र मानसः ॥ ४९ ॥
महादेवादयो देवा वेदविज्ञान शालिनः ।
त्वराभीष्ट प्रदं राम मंत्रमेक मुपासते ॥ ५० ॥

सभी लोग भगवान् की तरह राम नाम जपने वाले को भी प्रणाम करते हैं। राम मन्त्र जपने वाला जहां रहे वहां कोई भय नहीं होता । स्वयं राम इसको जपने वाले के पास आकर सफल करते हैं। कोई २ भाग्यवान् ही इस मन्त्र को जपता है। सभी देवता भी इस मन्त्र का जाप करते हैं।

रसनायां तु यस्याय मेकदापि पदं लभेत् ।
शारदा तस्य संतुष्टा निवासं कुरुते मुखे ॥ ५१ ॥
धीमतां विदुषां लोके मानसोज्ज्वलमानसे ।
राजहंसायमानोऽयं राजते मंत्र शेखरः ॥ ५२ ॥
दिवा रात्रावधश्चोर्ध्वं दिक्षु सर्वासु सर्वदा ।
मंगलं सर्वथा तस्य मंत्रोऽयं यस्य चेतसि ॥ ५३ ॥
विविक्तमाश्रितो योऽमुं राममंत्रं जपेन्नरः ।
वरीयसीं ध्रुवां याति संस्थितिं सर्ववन्दिताम् ॥ ५४ ॥
कामक्रोधादयो दोषा नायान्त्येतस्य सन्निधिम् ।
यथाकाशमणेर्नैति पश्वें नैशं तमः क्वचित् ॥ ५५ ॥

जिसकी रचना पर एक बार राम नाम आता है उसमें शारदा वास करती है। विद्वानों के मन मानस में यह मन्त्र राजहंस है। इस मन्त्र को जपने वाले को सदा मंगल रहता है। जो भी एकांत में इसे जपता है वह ध्रुव गति को पाता है। काम आदि दोष उसके पास नहीं आते जैसे सूर्य के पास तम नहीं आता।

जप्तारं राममंत्रस्य पश्यन्तः पुरुषा जनम् ।
बाधौघ बाधनाबाध्यां परां शांति प्रयन्ति च ॥ ५६ ॥
गताः साकेतमन्ते ते बसन्तो राम सन्निधौ ।
परं श्रेयोधिगच्छन्ति यद्वाचां गोचरं नहि ॥ ५७ ॥
शिवप्रार्थनयापूर्वं रामेण कथितं स्वयम् ।
माहात्म्यं राममंत्रस्य पुष्टितुष्टि विधायकम् ॥ ५८ ॥
मंत्रोऽयं मे श्रुतः सर्वान् तारयिष्यति प्राणिनः ।
एवंविधैः शुभैर्वाक्यैः तस्मै रामः स्वयं जगौ ॥ ५९ ॥
दयानिधिर्महात्मासौ यथा जिज्ञास मेव तान् ।
उपदिश्य महामंत्रं मौनं स्वीकृतवान् मुनिः ॥ ६० ॥

राम मन्त्र के जपने वाले को देख लेने ही से परम शान्ति मिलती है। अन्त में साकेत लोक में जाकर परम सुख पाते हैं। श्री राम ने स्वयं राम मन्त्र की महिमा कही है। इस मन्त्र को सुनने से नीच भव सागर को पार कर जावेंगे। दयालु महात्मा जी ने इस प्रकार राम मन्त्र का उपदेश देकर मौन कर लिया।

गुरोस्तस्माद्गृहीत्वाते राममंत्रं परात्परम् ।
धन्यवादं जगुस्तस्य स्वामिनो मुदिता भृशम् ॥ ६१ ॥
अहो धन्याः सन्तः परहित परा धीरमतयः ।
विना हेतुं मग्नाः निखिल जनताभव्य करणे ॥
इति स्तुत्या पूर्णैः विविधविधशब्दैर्यतिवरम् ।
नमन्तस्ते सर्वे विमलमतयो गेह मगमन् ॥ ६२ ॥

इस प्रकार राम नाम की महिमा सुन कर सब ने महात्मा जी का धन्यवाद किया वे जिज्ञासु कहने लगे, कि सन्त धन्य हैं बिना कारण सब का भला करते हैं इस प्रकार स्तुति की नमस्कार की फिर आज्ञा लेकर निवास स्थान पर गए।

इति राम नाम माहात्म्य कथनं नाम द्वादशः सर्गः।

---

# अथ भक्ति तत्व निरूपणो नाम त्रयोदशः सर्गः ।

अथोदियाय तेषां वै जिज्ञासा क्षेम कारिणी ।
भक्तितत्वोपदेशस्य परपार दिदृक्षया ॥ १ ॥
तया संप्रेरितास्तस्य पादमूल मुपागता ।
पुनस्ते प्रणताः सन्तो वदन्ति स्म मनोगतम् ॥ २ ॥
बन्धनाश करी भक्तिः रामस्योदाहृता पुरा ।
स्वयं कृपापरीतेन श्रेयसे नो दयानिधे ॥ ३ ॥
श्रुत्वा सामान्यरूपेण भक्तिगाथाँ भवन्मुखात् ।
विशेषतोऽभिलाषेयं श्रोतुं तामद्य वर्तते ॥ ४ ॥
रमयन्ति यतो वाचो मानसं भवदीरिताः ।
प्रार्थयामस्ततो नाथ पुनर्भक्ति वदाधुना ॥ ५ ॥

इस समय इन लोगों के मन में भक्ति तत्व जानने की इच्छा हुई । फिर स्वामी जी के पास आकर प्रार्थना की । आप ने हमारे कल्याण वास्ते पहिले राम की भक्ति कही है । इसलिये अब विशेष रूप से भक्ति को सुनना चाहते हैं आपकी बाणी मधुर है इसलिये आप भक्ति का वर्णन करें ।

तेषां प्रेममयोमेतां वाचं श्रुत्वा मनोरमाम् ।
परं हर्षं जगामासौ महात्मा भक्त वत्सलः ॥ ६ ॥
कथयामीष्ट तत्वंवः श्रृण्वन्त्वेकाग्र मानसाः ।
समुत्साह्येति वाचा तान् कथयामास तत्ववित् ॥ ७ ॥
शुश्रूषा वः समुत्पन्ना भक्तेः सौभाग्यतो खलु ।
भवद्बुद्धिः प्रशंस्यातः सदा सन्मार्ग गामिनी ॥ ८ ॥
संसारे वर्तमानां जीवानां हितहेतवे ।
साधनानि बहूनीह दृश्यन्ते लोक शास्त्रतः ॥ ९ ॥
सर्वश्रेष्ठ तमा तेषु भक्तिरेवानपायिनी ।
सैव चेतसि निश्चेया धारणीया प्रयत्नतः ॥ १० ॥

उनकी बात सुन कर महात्मा जी बहुत प्रसन्न हुए । फिर उनके हित के लिए कहने लगे कि आप लोग ध्यान से सुनो आप भक्ति सुनना चाहते हो बड़े भाग्यवान् हो । संसार में जीवों की भलाई वास्ते बहुत साधन हैं परन्तु भक्ति विशेष है भक्ति की भावना आप दृढ़ बनावें ।

त्रिनैनां निष्फलं वित्त वपुर्मानुष्यकं किल ।
चिरेणाप्त ममूल्य यत् वांच्छनीयं सुरासुरैः ॥ ११ ॥
प्रवृत्तिस्तत्र संजाता पुण्य पुञ्ज वशादियम् ।
सविस्तारवदाम्यस्मात् भक्ति सर्वार्थं साधिकाम् ॥ १२ ॥

बिना भक्ति के मानव का जन्म बेकार है, पुण्यों के कारण आप में भक्ति का भाव आया है । अब विस्तार से श्रवण करो ।

नानविधानि कर्माणि वेदे प्रोक्तानि सिद्धये ।
दुःखमूलाज्ञताहारि ज्ञानं चापि निरूपितम् ॥ १३ ॥
तानि सर्वाणि संगत्य भक्ते रेकां कला मपि ।
न गच्छन्ति हितं कर्तुं जीवानां स्वानुगामिनाम् ॥ १४ ॥
वदामि वोऽधुना तस्याः वाक्यं शब्दार्थं बोधकम् ।
पूर्वं ततोऽभिधास्यामि विस्तृतां तद्गतां कथाम् ॥ १५ ॥
याऽनुरक्तिः परे देवे विश्व निर्माण कारणे ।
भक्ति माहुर्महात्मानः तामबाधां चिरंतनीम् ॥ १६ ॥

वेद में कई प्रकार के कर्म बताए हैं ज्ञान भी कहा है । परन्तु ये सब भक्ति की एक कला के समान भी नहीं हो सकते । पहिले तो सामान्य रूप से मैं भक्ति का रूप कहता हूं फिर विस्तार से वर्णन करूंगा । भगवान् में लगातार अनुराग को भक्ति कहा जाता है ।

तदर्थं भोजनादेश्च विचारोऽवेक्ष्यते जनैः ।
प्रवर्तते मनो नात्र तद्विचाराद्दते यतः ॥ १७ ॥
चुम्बके संमुखे याते मुक्तेषु कीलकेष्वतः ।
हीयन्ते जलपोतस्य बन्धनानि दृढ़ान्यपि ॥ १८ ॥
तथा साक्षात्कृते देवे भक्ति मालम्ब्य देहिना ।
कर्म बन्धन मुच्छिद्य मुक्तिः सानंद माप्यते ॥ १९ ॥
सुखं सर्वे समीहन्ते लभन्ते तेषु तेतु तत् ।
गता ये सर्वभावेन भक्ति आनन्द दायिनीम् ॥ २० ॥
यथा संसज्जते लोभी धने कामी च योषिति ।
तथा संसज्जते भक्तो भगवत्यखिलात्मनि ॥ २१ ॥

उसके लिए भोजन आदि का विचार भी करना आवश्यक है जैसे चुम्बक के सामने आने पर जहाज के कील निकल जाते हैं । वैसे ही भक्ति द्वारा कर्म के कील

निकल जाते हैं। सभी जीव सुख चाहते हैं परन्तु भक्ति वाले ही सुख पा सकते हैं। जैसे लोभी धन में कामी स्त्री में मन लगाता है वैसे ही भक्त भगवान् में मन लगाता है :

ध्रुवादयोऽपि संप्राप्ता निर्बाधं हि पदं महत् ।
अनन्यया परा भक्त्या चोदासीना जगत्तते: ॥ २२ ॥
अतो जनः सुखाकांक्षी बुद्धि सौभाग्य संवृतः ।
जगज्जालादुदासीनो भवेदीश परायणः ॥ २३ ॥

ध्रुव आदि ने भक्ति से ही परम पद पाया है इसलिये सुख चाहने वाले को भक्ति करनी चाहिए।

मूर्तिमन्तं भवाधारं मन्दिरस्थं सनातनम् ।
प्रणमेदुत्तमांगेन भगवन्तं पुनः पुनः ॥ २४ ॥
कुर्यात्संकीर्तनं तद्वत् विस्मृत्य भोग्य संततिम् ।
दिवा नक्तं पर प्रीत्या धारारूपेण जिह्वया ॥ २५ ॥
कराभ्यां पूजनं तस्य धूपदीप निवेदनम् ।
कुर्यादेवं नरो धीमान् नित्यं कल्याण कांक्षया ॥ २६ ॥
कुर्यादिकाग्रतामेत्य नाम जापं सदा जनः ।
ततः साक्षात्कृतिस्तस्य सुखं संजायते खलु ॥ २७ ॥
नाम श्रद्धापरैर्यत्र क्वचिद्देशेऽपि गीयते ।
तत्र श्रेयः सुखं शान्तिः जायते तत्प्रभावतः ॥ २८ ॥

मन्दिर में विराजमान भगवान् का पूजन तथा प्रणाम करें। रात दिन लगातार संकीर्तन करें। धूप दीप आदि के द्वारा पूजन करें इससे कल्याण होगा। लगातार नाम जपने से भगवान् का दर्शन होता है। जहां कहीं नाम का जाप होता है वहां सुख शान्ति बनी रहती है।

जपंते ये नरा नाम प्रेमपूर्वं सुबुद्धयः ।
शक्यो न महिमा तेषां वक्तुं लोकेऽत्र केनचित् ॥ २९ ॥
सास्त्यनेक विधा भक्तिः कृता या पूर्वजैः शुभा ।
श्रूयतां ध्यान मास्थाय कथयामीह वः पुरः ॥ ३० ॥
तस्य लीलावतारस्य लीलानां श्रद्धयाऽऽदिमा ।
श्रवणं कीर्त्यते भक्ति र्भक्तिभाव परायणैः ॥ ३१ ॥
कीर्तनं वा तथा तासां वाचेह प्रेम पूर्णया ।
भक्ति योगविधानज्ञैः भक्ति रेषापि कीर्तिता ॥ ३२ ॥
संयम्य सर्वथा वृत्तीः विस्तृता भवमंडले ।
लक्ष्यासक्तं मनः कृत्वा चिन्तनं भक्ति रीरिता ॥ ३३ ॥

नाम जपने वाले की महिमा नहीं कही जा सकती । पूर्वजों ने कई प्रकार से भक्ति को किया है आप ध्यान से सुनो । अवतार लेकर कई प्रकार से की गई भगवान् की लीलाओं को सुनना भक्ति है । भगवान् की लीलाओं को प्रेम से वाणी द्वारा कहना भी भक्ति है । संसार में फैली हुई वृत्तियों की को रोक कर ध्यान करना भक्ति है ।

श्रद्धया पादसेवा वा पूजनंविधिपूर्वकम् ।
भक्ति रेवावगन्तव्या भुक्तिमुक्ति प्रदायिनी ॥ ३४ ॥

अहं दासो भवान् स्वामी त्याकारक विनिर्णयः ।
भक्ति रात्मार्पणश्चापि कथ्यते भक्तिरुत्तमा ॥ ३५ ॥

सख्यभावं समं तेन भक्तिमाहुर्मनस्विनः ।
व्रजबाला यथा कृष्णे सख्यभाव पुरोगमाः ॥ ३६ ॥

नास्ति भक्तिसमो लोके सुखसाध्यो महाफलः ।
मार्गोऽन्यो मानवस्यार्थे ततो ग्राह्या सदैवसा ॥ ३७ ॥

प्रेममात्रं यतस्तस्या मादावन्ते विलोक्यते ।
ततो मार्गान्तरेभ्यश्च भक्तिरेव गरीयसी ॥ ३८ ॥

श्रद्धा से पादसेवा विधि से पूजन, भी भक्ति कही है । मैं दास हूं-आप स्वामी हैं तथा अपने को अर्पण करना भक्ति है-गोपों की तरह सखा भाव भी भक्ति है । भक्ति ही सुख का उतम साधन है प्रेममयी भक्ति जैसा दूसरा साधन नहीं ।

हित्वा संसार संतानं भजतां प्रीति पूर्वकम् ।
जन्तूना मुद्धृतिं मृत्योः कुरुते भगवान् स्वयम् ॥ ३९ ॥

यानि यानि विनाशस्य कारणानि श्रुतानि वै ।
प्रभोर्भक्त्या न तेष्वेकं प्रभावं कुरुतेतराम् ॥ ४० ॥

याते भानौ नभोमध्ये जगज्ज्योतिर्मयं यथा ।
प्रभावन्तर्गते चित्तं भवेज्ज्योतिर्मयं तथा ॥ ४१ ॥

मानसस्य स्वभावोऽयं रम्येष्वर्थेषु धावति ।
भवे रम्यतमं वस्तु, किमस्तीति विचार्यताम् ॥ ४२ ॥

रम्यता या विभातीयं भानौ चन्द्रे तथानले ।
सागता श्रूयते तस्मात् प्रभोः सौन्दर्य रूपिणः ॥ ४३ ॥

प्रेम से भजने वालों का भगवान् उद्धार करते हैं । नाश के किसी कारन का भक्त पर प्रभाव नहीं होता । जैसे सूर्य से नभ में प्रकाश होता है वैसे प्रभु से मन में

प्रकाश होता है। मन सुन्दर वस्तु चाहता है सूर्य चांद अनल आदि में सुन्दरता भगवान् की है।

सर्वथा सर्वतो रम्यः ततोविश्वेश्वरो मतः ।
धावनं मनसस्तत्र ततो युक्तं प्रतीयते ॥ ४४ ॥

धावनं चैतदस्तीह तत्र रम्यतमे प्रभौ ।
सर्वथा स्वात्मनस्तस्मिन् यदबाधसमर्पणम् ॥ ४५ ॥

प्रपन्नं सर्वथा भक्तं विलोक्यासौ रमापतिः ।
सर्वदा सर्वयत्नेन पुष्णाति तस्य भावनाम् ॥ ४६ ॥

भावनां वः समालोक्य मया भक्तिरुदाहृता ।
वर्तमाना भवन्तोऽस्यां सिद्धि मिष्टामवाप्नुयुः ॥ ४७ ॥
इत्युक्त्वा भक्तितत्वंस, श्रोतृवर्गाय पृच्छते ।
महात्मासौ जगामाशु, मौनं मुनिशिरोमणिः ॥ ४८ ॥

सब से सुन्दर भगवान् है अतः मन उसकी ओर जाता है परम सुन्दर प्रभु में मन का लीन हो जाना युक्त है। ऐसे भक्त की भावना को भगवान् सफल करता है। आपकी भावना से भक्ति कही है आप इससे कल्याण प्राप्त करो। इतना कहने के बाद महात्मा जी ने मौन कर लिया।

श्रुत्वा जिज्ञासवस्तेऽपि भक्ति भावगतां मुदा ।
कृतकृत्यं तदात्मानं मन्वते स्म मुहुर्मुहुः ॥ ४९ ॥

श्रुत्वानुकूलं कथनं तदीयं ययुः परं हर्षं मिमेसमस्ताः ।
कृतज्ञतांस्वां परि दर्शयन्तः श्रद्धामयीं नम्रनतिं त्वकुर्वन् ॥ ५० ॥

इस प्रकार भक्ति की वार्ता सुन कर वे सब कृतार्थ हुए अनुकूल बाणी से संतुष्ट होकर सब ने नमस्कार किया।

इति भक्ति तत्व निरूपणं नाम त्रयोदशः सर्गः ।

---

# अथ पतित पावनो नाम चतुर्दशः सर्गः ।

स्वात्मप्रकाशेन समात्मकेन घनं तमो मोहमयं विनाश्य ।
प्राप्तं महत्वं जगतीतलेऽस्मिन्, श्री स्वामिना दिव्यदृशा तदा भूत् ॥ १ ॥

चित्राकृतेर्वै प्रकृतेः कृतेषु चित्रेषु जीवेषु विचित्र रूपाः ।
संकल्पवर्गाः प्रभवन्ति लोके कर्माणि तेषा मपि तद्विधानि ॥ २ ॥

अनादि कालीनसृतेः स्वभावात् केचिन्मिलित्वा मनुजास्तदानीम् ।
चौर्यं विधातुं सकृदाश्रमेऽस्मिन् लोभावृता हीनधियः समीयुः ॥ ३ ॥

द्वारं निशीथेपिहितं विलोक्य कुड्यं तदा दारयितुं प्रवृत्ताः ।
प्रविश्य तत्राथ प्रसिद्ध चौरैः दृष्टं मनोभीतिविधायि दृश्यम् ॥ ४ ॥

धावन्ति पुच्छान् परिवर्तयन्तः पृष्ठे पुरस्तात् किल सर्वतश्च ।
कृष्णा विवर्णाश्च महाविषाक्ता दुर्दर्शना दंशक दंदशूकाः ॥ ५ ॥

ज्ञान के प्रकाश से मोह का नाम मिटा कर स्वामी जी ने जगत् का उपकार किया। परन्तु भिन्न २ लोगों के भिन्न २ विचार वा कर्म हैं। इसी कारण कुछ लोगों ने आश्रम में चोरी करना चाहा। रात में द्वार बन्द होने से दीवार काट कर भीतर गए वहां भयानक दृश्य देखा। काले २ विषैले बड़े २ बिछू सब ओर दौड़ रहे हैं।

तद्दर्शनात्तेतु तदातिभीताः त्राणं स्वकीयं हृदिचिन्तयन्तः ।
स्वोत्पादितेनैव पथा प्रयातुं बहिः प्रदेशं निखिला प्रवृताः ॥ ६ ॥

तत्राप्यपश्यंश्च बिमूढचित्ताः न दृष्ट पूर्वं विषमं भयं ते ।
जिह्वाग्र भागैर्गगनं लिहन्तो नागा लुठन्तो भुवि संसरन्ति ॥ ७ ॥

तदाभिमुख्येन विधाय दृष्टीः शिरांसि भीमानि च चालयन्तः ।
श्वेतासितानेक शरीर वर्णाः विषाक्त श्वासान् सततं त्यजन्तः ॥ ८ ॥

उनको देखकर वे प्राण रक्षा के लिए बाहर जाने लगे बाहर आकर भी उन्होंने अपूर्व भय देखा नाग जीभ निकाल कर घूम रहे हैं चोरों पर नजर टिका कर सिर हिला रहे हैं विष भरे श्वास छोड़ रहे हैं।

नेत्रैर्विरूपैरनलायमानैः प्राणांस्तदा प्राणभृतां हरन्तः ।
विराजमानैर्मणिभिर्फणासु प्रकाशयन्तश्च तमस्त्रियामाम् ॥ ९ ॥

सर्पावृतां ते तु विलोक्य सर्वां दिशासु सर्वासु भुवं तदानीम् ।
किं कार्यं मूढा अवनौ निपेतुर्धारा प्रवाहेण तु निःश्वसन्तः ॥ १० ॥

हे योगी वर्येड्य पदाब्जयुग्म लोकोपकारिन् सततं दयालो ।
रक्षाद्य चौरा नविवेकिनोनः त्राता न कश्चित् भवतो विनेह ॥ ११ ॥

एवं विधाभिः करुणागिराभि भीत्यावृतास्तेतु समाह्वयंस्तम् ।
श्रो स्वामिनं दीन जनार्तिमृत्युं तेमन्यमाना शरणं तमेव ॥ १२ ॥

क्षुब्धा लुठन्तो भुवि निःश्वसन्तः पश्चात्तपन्तः करुणं रुदन्तः ।
त्राणं न नेत्रै रवलोकयन्तो मोहावृतास्ते जड़ता मगच्छन् ॥ १३ ॥

लाल २ आंखों से प्राण हरते हुए फणों की मणियों से रात में प्रकाश करते हुए सांपों को देखा। तब वे लोग भयभीत होकर भूमि पर गिर पड़े और स्वामी जी को पुकारने लगे कि आप हम दुष्टों की रक्षा करो। इसी प्रकार पछताते रोते वे बेहोश हो गए।

एवं निशा सा सकला व्यतीता कालो बभौ क्षेमकरः प्रभातः।
विश्राम भूमिं परिहाय सद्यः गतो बहिस्तांस्स तथा ददर्श ॥ १४॥
ततो विवर्णान् म्रियमाणदृश्यान् हस्तेन पस्पर्श दयार्द्रचेताः।
स्पृष्टाः समुत्थाय तु सौम्यरूपं दृष्ट्वा निपेतुः पदयोर्विनम्राः ॥ १५॥
बाला वयं तेऽङ्घ्रि युगं प्रपन्ना ग्रस्ताः प्रमादेन क्षमस्व देव।
दुष्टा महापापकरा समस्ताः त्राता त्वमेवासि परोपकारिन् ॥ १६॥
दीनानि तेषाँ तु वचांसि श्रुत्वा स्वस्थाः प्रयातेति जगौ महात्मा।
आगस्करेषु प्रणतेषु सद्यः प्रशांत कोपा यतयो भवन्ति ॥ १७॥
ये कौतुकं द्रष्टुमिता स्तदानीं बालायुवानोऽथ जरापरीताः।
विद्वत्प्रधाना अथवातिमूढ़ाः सर्वे महाश्चर्यमया बभूवुः ॥ १८॥

इसी तरह रात बीती सवेरा हुआ स्वामी जी ने बाहर आ कर देखा। उनको ऐसे देखकर हाथ से स्पर्श किया वे सब उठे और प्रणाम करके कहा कि क्षमा करो रक्षा करो उनके दीन वचन सुन कर महात्मा जी ने कहा कि डरो न शान्ति से जाओ। इस दृश्य के देखने से सब विस्मित हुए।

कृत्यं समालोक्य तु तस्कराणां, श्री स्वामिनश्चापि कृपां निरीक्ष्य।
महात्मनस्तेऽसकृत्धन्यवादं विधाय गीर्भि। स्वगृहाणि जग्मुः ॥ १९॥
देवेन केनापि किल स्वभावो नायं जनानां परिवर्तनीयः।
इत्युद्यतास्ते पुनरेव चौर्ये विनाश काले विपरीत बुद्धिः ॥ २०॥
हस्तेषु धृत्वा विविधायुधानि, बाणान् शतघ्नीः छुरिकादिकानि।
सुप्तेषु लोकेषु निशीथकाले तदाश्रमे ते यवना प्रबिष्टाः ॥ २१॥
केचित्स्थिता सुप्तनिरीक्षणाय प्रासादशीर्षेषु सहायुधास्ते।
चौर्यं विधातुं निरतास्तथान्ये दीपेन वस्तून्यनु संदधुश्च ॥ २२॥
दैवेन देवस्य प्रतिष्ठितासु जाज्वल्यमान प्रतिमासु दृष्टिः।
गता शुभालंकरणान्वितासु सिद्धाःस्म इत्येव च मेनिरे ते ॥ २३॥

चोरों पर भी दया देख कर महात्मा जी का सब ने धन्यवाद किया। आदत के अनुसार वे सब चोर फिर चोरी का विचार करने लगे। कई शस्त्र लेकर रात में वे

आश्रम में आए। कई छत पर जाकर खड़े हो गए और कई दीप जला कर चोरी में लगे। संयोग से मन्दिर में प्रतिमा देखीं और अपने को सफल माना।

वस्त्रे गृहीत्वा भरणादिकानि ततो मिलित्वाथ बहिर्गतास्ते ।
आसेदु रेते सहसा द्रवन्तो ग्रामाददूरास्थितिकं श्मशानम् ॥ २४ ॥

तत्र स्ववेगाञ्जित वायुवेगाः श्मशानवृक्षाग्रलतासु बद्धाः ।
ते स्वानुगैः कैश्चन रक्ष्यमाणा आरुह्य त्वरया वडवाः प्रचेलुः ॥ २५ ॥

सर्वैः प्रयाणं त्वरया विधेयं यामाद्य गेहं निशि शेषितायाम् ।
कार्यो विलंबो न यतोऽस्मदर्थं सृष्टा निशेशेन विशेषतन्वी ॥ २६ ॥

अस्माभिरस्मत्कुलजैश्च भोजं भोजं समाप्यं विभवं नहीदम् ।
महोत्सवं नून मिमे महान्तं मंस्यामहे ग्राममुपेत्य तस्मात् ॥ २७ ॥

एवं मनः सिन्धु तरंग मग्नाः वादं यथेष्टं विविधं वदन्तः ।
प्राप्ता अकस्मात् विपिने विचित्रं ते तस्करा दुर्भयमन्वभूवन् ॥ २८ ॥

वस्त्र में प्रतिमा वा सब वस्तु बांधकर श्मशान में पहुंचे, वहां से वेग वाली घोड़ियों पर चढ़कर चले। सोचा कि जल्दी चलें रात में ही घर चले जावें। हमारे वंश में यह धन न मुकेगा घर जाकर उत्सव करेंगे। इसी तरह मस्ती में जा रहे थे। अचानक एक भय पैदा हो गया।

आकस्मिकी मेघघटा प्रभूता विद्युन्महाघोषमयी चकासे ॥
बज्रप्रपाता बहुशोऽभवंश्च कर्णास्तदाकर्णयतां विशीर्णाः ॥ २९ ॥

पार्श्वस्थराजत्तरुषण्डमध्यात् स्फूर्त्या स्वलक्ष्येषु बहिः पतन्तम् ।
जिह्वाग्रभागेन च सृक्कभागं, लिहन्तमुग्रं दद्दशुर्वनेशम् ॥ ३० ॥

पंचाननं वीक्ष्य करालदंष्ट्रं गर्जन्त मुत्तर्जन कारिरूपम् ।
स्तेनाः समुद्विग्न मनस्कतायां त्राणं स्वकीयं मनसाचिचिन्तुः । ३१ ॥

चौरेषु तं चेतसि चिन्तयत्सु शार्दूलमालोक्य च कम्पितेषु ।
अज्ञातपातोत्पतनः क्षणेन कंचिन्नाखाग्रै र्विददार सोऽयम् ॥ ३२ ॥

क्रान्तोऽपरस्तेन विशीर्णशीर्षः क्षणात् तुरंग्या निपपात भूमौ ।
पक्वं यथाताल फलं प्रवातवेगेन तालाद् पततीह भूमौ ॥ ३३ ॥

अचानक मेघ घटा बनी बिजली कड़की और गिरने लगी। पास के पेड़ों में से तेज़ी से एक शेर उनकी ओर दौड़ा। शेर की गर्जना सुन कर वे अपनी रक्षा की चिंता में पड़ गए। इस तरह सोचते हुए चोरों पर शेर ने एक पर हमला कर दिया। दूसरा घोड़ी से नीचे गिरा जैसे ताल का फल गिरता है।

अधः पतन्तं सहचारिणं तं विलोक्य ते दुद्रुवुरग्रतश्च ।
इतस्ततश्चापि पलायमाना वनं घनं प्रापुरिमे शरण्यम् ॥ ३४ ॥
देवस्य लीला जगतीह शक्या ज्ञातुं मनुष्येण न धीमतापि ।
विस्मापकं बुद्धिमतां यदेतत् कौतूहलं तत्र बभूव तेषाम् ॥ ३५ ॥
त्रासेन सिंहात्प्रपलायितानां दूर प्रयाणेन च विश्लथानाम् ।
प्राप्ता पुरस्तीव्रतर प्रवाहा रिङ्गत्तरङ्गा सरिदुग्ररूपा ॥ ३६ ॥
अस्याः कथं पारमुपेम इत्यान्तरेण चिन्तातरलाकुलेन ।
ते तामपश्यन् घटनां प्रतीपदैवेन तत्रोपनता मचिन्त्याम् ॥ ३७ ॥
पीड़ा तुरंगीजठरेष्वकस्मात् उद्भूय ता व्याकुलिता अकार्षीत् ।
धूलौ लुठन्त्यो वड़वा सकम्पं व्यादाय वक्त्राण्यपतन् पृथिव्याम् ॥ ३८ ॥

इस दशा में बाकी सब भाग गए, घने बन में जा छुपे। भगवान् की माया को कोई नहीं जानता जो ऐसी घटना हुई। शेर के डर से भागते हुए उनके मार्ग में एक बड़ी नदी आ गई। नदी को पार होने का विचार कर रहे थे तब और घटना बनी पेट की पीड़ा से घोड़ियां गिर कर लोटने लगीं।

हा दैव हा दैव पुनः किमर्थं निपातितं कष्टमयेषु कष्टम् ।
अश्वी स्तदालोक्य तथा विधास्ते किं कार्यमूढा रूरुदुः सशोकम् ॥ ३९ ॥
कार्पण्य दोषोपहतैर्विषण्णै श्चौरैः कुभाग्यैः परिदृश्यमानाः ।
शेषां निजश्वास गतिं विमुच्य सर्वास्तुरग्यः सहसाम्रियन्त ॥ ४० ॥
तीरे भ्रमन्तः करुणं रुदन्तः पारं प्रयातुं परिचिन्तयन्तः ।
नावं निषादेन विनीयमानां नद्यामपश्यन् विधिना हतास्ते ॥ ४१ ॥
मृतास्तुरंग्यः प्रविहाय तत्र कष्टात् समाहूय निषादवर्यम् ।
शीतार्दिता स्ते परपारमीयु स्तावन्मृतं स्वं ददृशुः प्रधानम् ॥ ४२ ॥
भीतास्तु ते तं मृतकं विहाय तया दिशा पूर्ववदभ्यधावन् ।
धावत्सु तेष्वन्यतमो यमीयपुरी प्रयाणाय परः पपात ॥ ४३ ॥

घोड़ियों को देख कर रोने लगे कि हा विधाता यह क्या किया। अभागे चोरों के देखते २ ही सब घोड़ियां वहीं पर मर गईं। नदी के तट पर रोते २ उन्होंने एक नाव को आते हुए देखा। मरी घोड़ियां छोड़ कर वे पार गए तब उनका मुखिया मर गया। उसे छोड़कर आगे को दौड़े तो रास्ते में एक और साथी मर गया।

न कस्यचित्कश्चिदिहास्ति लोके स्नेही जनः स्वार्थं पराहि सर्वे ।
शक्तं प्रशंसन्ति मुहुर्मुहुर्ये त्यजन्त्यशक्तं स्वजनं त एव ॥ ४४ ॥

हित्वा मृतं जीवनमीहमाना अन्योन्यमेते मिलिता अधावन् ।
चिह्नान्यमीषां चरणाङ्कितानि न्यग्राहयन् तान् नृपपूरुषैस्तु ॥ ४५ ॥
सम्बन्धि वर्गेण समं तदा ते निग्राहकैः तैश्च सह प्रतस्थुः ।
प्राप्याश्रमं तस्य महात्मनस्तु सनम्रमेनं प्रणिपत्य चोचुः ॥ ४६ ॥
स्वामिन् वयं ते शरणागताः स्म माता पिता त्वं परिपाहि भीतान् ।
नान्या गतिर्नाथकृपां विहाय दयस्व दुष्टात्मसु हे महात्मन् ॥ ४७ ॥
विद्वद्विनिन्द्यं कृतवत्सु कर्म शापो न कोपेन निपातनीयः ।
सन्तः समा जीवगणे भवन्ति तस्मादिमान् पापकरान् क्षमस्व ॥ ४८ ॥

यहां किसी का कोई नहीं सब मतलब के साथी हैं। अतः उसे वहीं छोड़ कर वे भागे परन्तु पैर के निशानों से वे पकड़ लिए गए। तब वे सामान सहित पकड़े हुए स्वामी जी के पास आकर कहने लगे। हे पिता हम शरणागत हैं हमारी रक्षा करो आपके बिना कोई नहीं। हम ने पाप किया है, हमें शाप न दो हम पर दया करो।

स्वामी समुत्थाप्य करेण सद्यः चौरान् पुरस्ताद् पतितान् तदाह।
विभ्यन्तु भद्रा न कथंचिदत्र शांतिं धृतिं चापि समाददध्वम् ॥ ४९ ॥
पुण्यौधलभ्यं नरजन्म सौम्या चौर्यादिकार्येषु न यापनीयम् ।
नष्टं पुनः प्राप्स्यति वा नवेदं धर्मे ततः स्थापयतान्तरं स्वम् ॥ ५० ॥
सेवां स्वदेशस्य सदा कुरुध्वं भावं स्वकं स्वार्थमयं विहाय ।
संसार संतान गतिं भजध्वं चेतः कुमार्गे न नियोजयध्वम् ॥ ५१ ॥
मायाविपाशेषु परिभ्रमन्तो व्यथामवाच्यां पशवः प्रयन्ति ।
मनुष्यदेहेऽपि यदा न मुक्ति र्जाता तदा हा पुरुषार्थ हानिः ॥ ५२ ॥

स्वामी जी हाथ से उठा कर कहा कि आप लोग भयभीत न हों पवित्र जीवन में पाप न करो अपने मन में धर्म धारण करो। सेवा करो भजन करो, कुमार्ग का त्याग करो। माया के मोह से मूर्ख कष्ट पाते हैं तथा सुन्दर जीवन का नाश करते हैं।

दृष्टास्तथा प्रेमदृशा हितेन वाचोपदिष्टाः परमार्थमाथ्या ।
मोहो गतश्चेतसि साधुभावोः जातः सुसंगोऽत्र यतः पुनाति ॥ ५३ ॥
पुरातनीं ते प्रकृतिं विहाय तमोमयीं साधुगतिं प्रपन्नाः ।
पुरस्थिताः सांजलयश्च सन्त स्तस्मै वचो नम्रतरं तदाहुः ॥ ५४ ॥
हे नाथ पापौधविनाशकारिन् कृतापराधप्रणतार्तिहारिन् ।
शक्ता न ते प्रत्युपकारकृत्ये पादौ नमामोऽद्य पुनः पुनश्च ॥ ५५ ॥

लोहस्पर्शिक संगतो विधिवशात् संजायते कांचनम् ।
विन्दुः शुक्ति पुटे प्रविश्य लभते मुक्ताफलत्वं क्षणात् ॥

तत्वाभिज्ञमहात्मनश्चरणयोः याता महापापिनः ।
सद्यः पुण्यतमा भवति महतां संगोहि निःस्तारकः ॥ ५६ ॥

इस प्रकार महात्मा जो के वचनों से उनका मन पवित्र हो गया । तब कृतज्ञ होकर हाथ जोड़ कर वे महात्मा जी से कहने लगे । हे नाथ हम आप के उपकार के कारण बार २ नमस्कार करते हैं । लोहा पारस से सोना बनता है, बून्द सीपी से मोती बनता है, सत्संग से पापी साधु बनते हैं ।

इति पतित पावनं नाम चतुर्दशः सर्गः ।

---

# अथ सत्य पक्षपातिता नाम पंचदशः सर्गः ।

सूर्यो यथा व्योम्नि विराजमानः सर्वासु दिक्षु प्रतनोति तेजः ।
वसन्नसौ नूरपुरे तथैव ज्ञानात्मकं तद्व्यतनोज्जगत्याम् ॥ १ ॥
प्रायेण शिक्षारहिता मनुष्याः केचित्कुशिक्षानिरतास्तथान्ये ।
परस्परं वैर मुपाश्रयन्ते जानन्ति ते नास्य फलं दुरन्तम् ॥ २ ॥
तथोष्मणा केऽपि धनस्यमत्ता न मन्वते स्वेन समं तु कंचित् ।
जातीय बन्धुं विभवेन हीनं विलोक्य विद्वेष परा भवन्ति ॥ ३ ॥
प्रायो धनाढ्या अधनान्मनुष्यान् द्रष्टुं न शक्ता नितरां भवन्ति ।
शक्तास्तथा शक्तिविहीनजीवान् हन्तुं प्रसक्ता सुतरां तथाहि ॥ ४ ॥
रीत्यानया केनचनाधने स्वे बन्धौ वृथाद्वेष परेण भूत्वा ।
ग्रामे तदीयो विपरीतवादः प्रसारितः पीड़यितुं तदातम् ॥ ५ ॥

सूर्य के प्रकाश की तरह महात्मा जी ने ज्ञान का प्रकाश किया । प्रायः मूर्ख लोग परिणाम सोचे बिना आपस में वैर करते हैं । धन के मद में कई लोग अपने गरीब भाई से विरोध करते हैं । धनी निर्धन का जीना भी पसंद नहीं करते । इसी रीति से एक धनी ने अपने गरीब बन्धु का विरोध किया था ।

बुभुक्षुणानेन धनं मदीयं दुष्टेन हा हन्त हृतं निशायाम् ।
ग्राम्यांस्तथाहूय जनान् गृहे स्वे तस्यापराधान् बहुशो जगाद ॥ ६ ॥
श्रुत्वा तदीयां वचनावलींतां सर्वेऽब्रुवन् सत्यमयं हि चौरः ।
यस्यास्ति यष्टिर्महिषी च तस्य लोकोक्तिरेषाविदितैव भूमौ ॥ ७ ॥
लक्ष्मीवतां मूढनिरक्षराणां श्याला मनुष्या भवितुं यतन्ते ।
विद्यावतां किन्तु धनच्युतानां भवन्ति नामी भगिनी भुजोऽपि ॥ ८ ॥

दोषः परोऽस्मान्न कदापि दृष्टः श्रुतोऽथवा यत्खलु निर्धनत्वम् ।
गुणालयस्यापि गुणा क्षणेन नश्यंत्यनेनैव समूलनाशम् ॥ ९ ॥

इस भूखे ने मेरी चोरी की है ऐसा अपवाद उसने लोगो में किया उसकी बात को सब ने माना, जिसकी लाठी उसकी भैंस वाली बात । धनी के साले भी बन जाते हैं किन्तु गरीब का कोई बहनोई भी नहीं बनता । गरीबी के दोष से मानव के सभी गुण नष्ट हो जाते हैं ॥

मिथ्यायते तस्य वचो यथार्थं मूर्खायतेऽसौ समयेऽपि वल्गन् ।
व्यर्थायते तस्य जनिर्जगत्यां यो नाम लोकेऽस्ति धनेन हीनः ॥ १० ॥
भ्रात्रा धनाढयेन यथोदितं यच् चौरो यमन्यैरनुमोदितंत्तत् ।
सत्यं किलैतज्जगति प्रसिद्धं श्यालाः शठानां हि शठा भवन्ति ॥ ११ ॥
कृत्वा प्रलापं विविधं तदर्थं सर्वे यथेष्टं च विवेक हीनाः ।
निन्युः समस्ता अपि तर्जयन्तः तं निर्णयाधीश सभा प्रदेशे ॥ १२ ॥
अयं धनं मे हृतवान्निशायां न्यायालयेऽसौ धनिको जगाद ।
समागता ग्रामनिवासिनोऽपि वाक्यं तदीयं समनूक्तवन्तः ॥ १३ ॥
न्यायालयाधीश महोदयेन पृष्टोऽधनोऽसौ समुवाच सद्यः ।
हृतं धनं नास्य मया दयालो मिथ्यागृहीतोऽस्मि कृपां कुरुष्व ॥ १४ ॥

गरीब का सत्य भी झूठ तथा जन्म भी बेकार होता है । धनी की झूठी बात को सभी लोगों का समर्थन मिल गया । तब सब ने मिल कर इसे अदालत में पेश किया । धनी ने कहा यह चोर है तथा दूसरों ने उसका समर्थन किया । जज के पूछने पर गरीब ने कहा कि मैंने धन नहीं चुराया ।

निर्भर्त्स्य तं क्रूरगिरा तदानीं प्रेम्णा च तं सोप्यसकृदपृच्छत् ।
तेनापिपूर्वं कथितं यदेव वाक्यं तदेवोदित मन्ततोऽपि ॥ १५ ॥
हृतं धनं चेद् भवता न पापिन् स्तेनं कथं त्वां सकला वदन्ति ।
त्वत्पक्षपाती मनुजो न कश्चित् चेदस्ति तन्नाम वदस्व माशु ॥ १६ ॥
सभापतेस्तद्वचनं निशम्य जगादनिःस्वः सदसः समक्षम् ।
मत्पक्षपाती जगदीश्वरोऽस्ति गोपालदासश्च तथा महात्मा ॥ १७ ॥
सर्वे स्वकीया हि धनेश्वराणां मित्राणि वंश्याश्च सहायकावा ।
आधार एकःकिल मद्विधानां विश्वंभरोवा तदुपासको वा ॥ १८ ॥
श्रुत्वा तदीयं वचनं तदासौ बुद्धयाविचार्याथ विवेकशीलः ।
तूष्णीं चिरं चित्र इवावतस्थौ सचिन्तयन् स्वे हृदये तदुक्तम् ॥ १९ ॥

जज ने कई बार पूछा परन्तु उसने वही उत्तर दिया। जज ने कहा कि यदि तू चोर नहीं तो कोई साक्षी ले आ। ऐसा सुन कर वह बोला कि मेरा साक्षी भगवान् वा सन्त गोपाल दास हैं। धनी के साथी तो सभी हैं परन्तु मेरे जैसों का तो भगवान् ही है। उसकी इस बात पर जज ने कुछ देर विचार किया।

तं प्राह भीतं परिकम्पमानं न्यायालयस्थैर्भृशमीक्ष्यमाणम् ।
पश्यन्त मुर्वीं सलिलाप्तनेत्रं कोमेऽधुनास्तीतिविचिन्तयंन्तम् ॥ २० ॥
एषा जनस्य प्रथिता प्रवृतिः यल्लम्भितो दुःखगतिं कुतश्चित् ।
लोकत्रयावर्तिन मात्मबन्धुं सहायकं साध्वनुसंदधाति ॥ २१ ॥
हित्वाधुना भीतिमिमां मनोगां पृच्छामि यत्तद्वदमे विशंकम् ।
संज्ञा यदीया भवता गृहीता मान्यो महात्मा क नु वर्तते सः ॥ २२ ॥

सोचने के बाद जज ने रोते हुए उस निर्धन को कहा। जब वह किसी अपने सहायक के बारे में सोच रहा था। भय छोड़ दो और स्वामी गोपाल दास का पता बताओ।

इत्यूचिवांसं नयपण्डितं तं प्रत्याह दीनः शृणुनाथ वच्मि ।
तस्याश्रमो न्यायसभाप्रदेशात् दूरेस्थितः पञ्चषयोजनानि ॥ २३ ॥
दूतो विधेये कुशलस्तुतेन संप्रेषितः स्वामि निमंत्रणाय ।
सर्वे गृहं यान्तु विनिर्णयोऽयं प्राप्तेऽत्र तस्मिन् भविता विरक्ते ॥ २४ ॥
तेनेरितेऽस्मिन् वचने सभायां मनस्सु तेषा मवसन्महात्मा ।
तद्दर्शनाशा च बभूव तेषां स्वार्थो यतो मुख्यतमो जनानाम् ॥ २५ ॥
केचित्ततो मुख्यतमास्तु तेषु स्वाम्याश्रमं स्वर्थपरा प्रतस्थुः ।
नीत्वा करैः पुष्पफ़लादिकानि समर्पयायासु रमुष्य पादे ॥ २६ ॥
अस्याद्य चौरेण धनं गृहीतं निवेदितं न्यायसदस्यनेन ।
चौरेण संज्ञां भवतो गृहीत्वा प्रोक्तं गतिर्मेस महान् महात्मा ॥ २७ ॥

तब उसने कहा कि यहां से ५—६ योजन दूर आश्रम है। आगे की तिथि बता कर जज ने दूत उनके पास भेज दिया। इसके बाद सब का ध्यान महात्मा जी की ओर चला गया। कई लोग फल आदि वस्तु लेकर वहां वहुंच गए और कहा कि हमारे चोर ने अदालत में आप का नाम लिया है।

भानोः पुरस्तात् तमसा न शक्यं स्थातुं कथं तं तु समावृणोतु ।
मिथ्या प्रवादः स तथैव तेषां तिष्ठेत् कथं स्वामि मनोऽवकाशे ॥ २८ ॥
विज्ञाय सर्वं मनसा तदेतत् तेषां महानर्थकरं चरित्रम् ।
अन्यत्र यातेति जगाद तेभ्यः क्षणं न मे वः पुरतः स्थितिः स्यात् ॥ २९ ॥

नयन्तु पुष्पादि गृहे स्वकीये ग्राह्यं मया नैव दुरात्म वस्तु ।
श्रेयोभिलाषो यदि वर्ततेवः कदापि नायान्तु पुरो ममेह ॥ ३० ॥

सूर्य के सामने तम नहीं टिक सकता, उन की झूठी बात यहां कैसे टिके । मन में सारी बात जान कर कहा कि यहां से जल्दी चले जावो । यह वस्तु ले जाओ मैं दुष्ट लोगों की वस्तु नहीं लेता ।

वक्तुं न शक्ताः पुरतोऽस्य तेऽथ तूष्णीं समुत्थाय गृहाणि जग्मुः ।
कुर्याद्विधाता किमसौ बलीया नित्येव मेते परिचिन्तयन्तः ॥ ३१ ॥
दूतोऽपि तस्याथ गतेषु तेषु प्राप्तः पदं तस्य महात्मनोऽभूत् ।
ध्याने परेशस्य तदा निमग्नं दृष्ट्वा विनम्रः प्रणनाम भूमौ ॥ ३२ ॥
तेजस्वितां तस्य निरीक्ष्य दूतः तूष्णीं स्थितो नैव शशाकवक्तुम् ।
दृष्ट्वा चिरं प्राप्य परं प्रसादं मुहुः सभामेव निवृत्य यातः ॥ ३३ ॥
हे निर्णयाधीश महानुभाव हे दीन संत्राण कला प्रवीण ।
महात्मनस्तस्य गुरोः सकाशात् प्रत्यागतोस्मीति निवेदयामि ॥ ३४ ॥
तमागतं वीक्ष्य महोदयोऽसौ पप्रच्छ दूतं कुशल तदीयम् ।
यस्मिस्तु कार्ये गतवानितस्त्वं स्पष्टं ममाग्रे कथयस्व सर्वम् ॥ ३५ ॥

तब वे लोग चुप चाप उठ कर चले गए । दूत ने वहां जाकर महात्मा जी को प्रणाम किया । उनके तेज से कुछ कह नहीं सका । वापस चला आया । अदालत में आकर कहा कि मैं वहां से होकर आया हूं । तब जज ने उस कार्य के बारे में पूछा ।

तेनोत्सुकेनेति चरोऽथ पृष्टः प्रोवाच हे नाथ वचोवधेहि ।
कार्ये नियुक्तैरनुजीविभिस्तुर्नं स्वामिनो जात्वपि वंचनीयाः ॥ ३६ ॥
धर्मानुरोधेन भवत्पदाब्जे निर्व्याजमेतत् कथयामि सत्यम् ।
स्वप्नेऽपि नैतादृगदिव्यमूर्तिर्दृष्टः श्रुतो वास्ति मया कदाचित् ॥ ३७ ॥
तद्दर्शनेनैव मनो मदीयं दशामपूर्वां सहसाप्ययासीत् ।
तस्याग्रत श्चित्रमिवास्मिजात. वक्तुं न शक्तोऽक्षरमेकमासम् ॥ ३८ ॥
यथागतं नाथ तथा निवृत्तः भवन्निदेशः किलविस्मृतोभूत् ।
भाग्यान्मयाते कृपया कृपालो दृष्टो महात्मेष्टददर्शनोऽयम् ॥ ३९ ॥
शृण्वन्नसौ तस्य वचांसि सम्यक् पश्यंस्तथा ह्यस्य शरीरचेष्टाम् ।
दध्यौ चिरं चेतसि विस्मितः सन् विस्मापयन्सर्वसदस्य वर्गम् ॥ ४० ॥

वह दूत बोला कि महाराज सेवक को सत्य कहना चाहिये । निवेदन है कि

ऐसा सन्त मैंने आज तक न देखा है न सुना है। उसके दर्शन से ही मैं चित्र जैसा बन गया बोल नहीं सका। बिना कुछ कहे मैं वहां से वापस आ गया हूं। उसकी बात पर जज ने बहुत विचार किया।

गच्छाम्यहं तस्य महात्मनोऽद्य पार्श्वे स्वयंचेति स निश्चिकाय।
सार्द्धं च कैश्चित्पुरुषैः स्वकीयै स्तदाश्रमं रम्यतमं प्रतस्थे ॥ ४१ ॥
मार्गे वने वृक्षशिखासु रम्या वाचः खगानां वदतो निशम्य।
यथा स्वदेशाधिपतेर्ममैते कुर्वन्ति सुस्वागत मित्यमंस्त ॥ ४२ ॥
धावन्ति सव्ये पुरतोऽद्य वामे वन्या मृगा मे परितोऽति तुष्टाः।
चिर प्रवासाद् गृहमागतंस्वं वन्धुं समीक्ष्येह यथा स्वकीयाः ॥ ४३ ॥
तुष्टा मयूरा निजपक्षजालं प्रसार्यनृत्येऽतितरां प्रसक्ताः।
मामद्य सर्वेऽपि समीपवर्ति श्रेयः परं भावि च सूचयन्ति ॥ ४४ ॥
भारेण नम्राभिरधः फलानां शाखाभिरेते तरवोवनेस्मिन्।
प्रजाः प्रजानाथमिवोपहर्तुं मामेव सेवार्थ मुपाश्रयन्ति ॥ ४५ ॥

जज ने विचार किया और फिर स्वयं उस ओर चला। रास्ते में कई तरह के खगों की मीठी बोलियों को सुना। रास्ते में उनके आस पास हिरन दौड़ते २ उनको देखते थे। मोर अपने पर फैला कर मस्ती से नाच रहे थे। फलों के भार से पेड़ जमीन की ओर झुके हुए थे।

स्वभाविकीं वैरमतिं विहाय सिंहादयोऽप्यत्र चरन्ति वन्याः।
सत्यात्मनां तत्वदृशां स्वभावः सर्वत्र संसारिशुभस्य हेतुः ॥ ४६ ॥
यानेन कुर्वन् पथि स प्रयाणं वन्द्यस्य तस्याश्रम माजगाम।
तूर्णं च यानादवरुह्य तस्मात् श्रद्धान्वितोऽभ्यन्तरमाविवेश ॥ ४७ ॥
शाखासु युक्त्या निहितैस्तरूणां काष्ठैरभीष्टैःरचिते कुटीरे।
स्थितं स्वभासा परिभासयन्तं दिङ्मंडलं तं प्रणनाम पश्यन् ॥ ४८ ॥
हस्तेन पादाब्जगतं महात्मा प्रीत्या समुत्थाप्य तथोपवेश्य।
पप्रच्छ देहे स्वजनेऽथ गेहे देशे च कल्याणमयं सहर्षम् ॥ ४९ ॥
पृष्ट स्तथा तेन महात्मनैवं सोऽप्याह सर्वत्र दयात्वदीया।
भाग्याद्विलोक्याद्य भवत्पदाब्जं जातः कृतार्थोऽस्मि महानुभाव ॥ ५० ॥

बन के जन्तु आपस में मिल जुल कर विचरते थे। यान पर यात्रा करते २ आश्रम के पास यान से उतर गए! पर्णशाला में महात्मा जी का दर्शन करके प्रणाम

किया । तब संत जी ने उनको बिठा कर कुशल मंगल पूछा । जज ने कहा कि आज आप के दर्शन से मैं कृतार्थ हूं ।

जिज्ञासवे मे कृपया वदस्व कल्याणमार्गं परिवित्तवेद्य ।
पृच्छन्तमित्थं पुरतःस्थितं च स्वामी तमाहेति शृणुष्व सौम्य ॥ ५१ ॥

त्वं निर्णयाधीशपदेस्थितोऽसि, धर्मं स्वकीयं परिपालयस्व ।
माता स्वपुत्रानिव सर्व जीवान् रक्ष प्रयत्नेन विपद्ग्रहेभ्यः ॥ ५२ ॥

सेवस्व वृद्धान् भरदीनहीनानधीष्ववेदं भज वासुदेवम् ।
प्रवर्तय स्वीय प्रजाः स्वधर्मे समुद्धर त्वं निज जन्मभूमिम् ॥ ५३ ॥

मायामदान्धेन तु ते सभायां चौरोऽधनो कोऽपि निवेदितोस्ति ।
बोध्यः स साधु भवता न चौरः धूर्तो धनी येन विडंबितोऽसौ ॥ ५४ ॥

आप दया करके मुझे कुछ उपदेश करो । तब महात्मा जी ने कहा कि धर्म का पालन करो, सब की रक्षा करो, सेवा करो स्मरण करो । वह धनी पापी है, निर्धन भला मानव है धनी ने झूठा जाल रचा है ।

सतं नमस्कृत्य कृतांजलिः सन् समं स्वकीयैर्गतवान् स्वगेहम् ।
आकारयामास ततश्च तत्र निःस्वं धनाढ़्यं सहचारिणश्च ॥ ५५ ॥

मिथ्या प्रलापिन् धनगर्वमूढ़ मिथ्यावदन्नैव विलज्जसे किम् ।
निर्गच्छ कर्तासि पुनर्यदित्थं प्राप्तासि पापस्यकिलोग्रदंडम् ॥ ५६ ॥

निःसार्य दुष्टं तु सभांगणात्तं प्रेम्णाऽधनं प्राह गृहं प्रयाहि ।
भीतिर्न कार्या भवता कुतोऽपि धर्मोहिरक्षिष्यति धार्मिकं त्वाम् ॥ ५७ ॥

दीनोऽधनोऽसौहृदि धन्यवादं कुर्वन् गतस्तस्य महात्मनस्तु ।
ते तत्सहायाश्रपि लज्जमाना गता स्वगेहान् धनिकेन सार्द्धम् ॥ ५८ ॥

दीने दयालु रभवत् स महानुभावो दुष्टे च निर्दय इति प्रतियन्तु लोकाः ।
एतत्तु तस्य समदृष्टितया बभूव सर्वानुपाकुरुत सत्यपथे नियोज्य ॥ ५९ ॥

वह वहां से वापस गया और अदालत में सब को बुलाया । धनी से कहा कि तुम बेशर्म झूठे हो । फिर ऐसा किया तो दण्ड पाओगे, फिर प्यार से निर्धन को कहा कि डरो न । तब उसने धन्ववाद किया । दूसरे लोग पछताने लगे । यह महात्मा दीनों पर दयालु थे, दुष्टों पर निर्दयी थे ओर सब का हित चाहते थे ।

इति सत्य पक्ष पातिता नाम पंचदशः सर्गः ।

---

# अथ रुग्णव्यथानिराकरणं नाम षोडशसर्गः ।

योगेश्वरस्याद्य महात्मनोऽस्य विचित्रचारित्र्य चमत्कृतस्य ।
गुणग्रहीतॄन् प्रतिदर्शयामः लीलामलीकेतरविस्मयाढ्याम् ॥ १ ॥

लक्ष्मीवतः कस्य चनापि दूरनिवासिनो मान्यमहाजनस्य ।
भार्या नवोढ़ा शशि कांतदेहा ग्रस्ता कुरोगेण बभूव दैवात् ॥ २ ॥

रोगावृता सा चलितुं न शक्ता भोक्तुं न तस्या मनसः प्रवृत्तिः ।
खट्वाश्रिता दैवगतिं विरुद्धां विचिन्तयन्ती व्यथिता सदासीत् ॥ ३ ॥

दृष्ट्वा तु तां व्याधिपरीत देहां सम्बन्धिनोऽपि प्रययुर्विषादम् ।
धनेश्वरश्चाथ पतिस्तु तस्या व्यचिन्तयद्रोगनिवृतिहेतुम् ॥ ४ ॥

वैद्याः चिकित्सा कुशलाः स्वदेशे श्रुता विदेशे च यतः कुतश्चित् ।
सर्वेऽपि तेनामलवैभवेन स्वाकारिता द्रव्यवलात् स्वगेहे ॥ ५ ॥

पूज्य सन्त जी की कोई सुन्दर लोला गुण ग्राही जनों को दिखाते हैं। किसी महाजन की नारी किसी समय बहुत बीमार हो गई थी। रोग के कारण खाना पीना छोड़ कर खाट पर पड़ी रहती थी। ऐसी दशा में सारे परिवार के लोग व्याकुल हो गए। उसके पति ने बहुत से वैद्यों को अपने घर में इलाज वास्ते बुलाया।

हे वैद्यवर्याः कथयामि वोऽहं शृण्वन्तु वाक्यं सुतरां मदीयम् ।
भार्या मदीयातिगता रुजं स्याद् चेदाददध्वं द्रविणं यथेष्टम् ॥ ६ ॥

उक्ता स्तथा तेन चिकित्सकास्ते योग्यै रुपायैरबला मपश्यन् ।
दृष्ट्वाथ विज्ञाय पृथङ् निदानं तस्याग्रतस्तत्क्रमशोवदंस्ते ॥ ७ ॥

गेहेऽथ तस्यैव वसद्भिरेतैर्वैद्यैश्चिकित्साप्रवरैस्तदानीम् ।
भैषज्यवर्गो बहुशोऽनुभूतः तस्यां यथावद् सरुजि प्रयुक्तः ॥ ८ ॥

तैः सुप्रसिद्धैरपि कार्यदक्षै बहुं प्रयत्नेन चिकित्सितोऽपि ।
रोगः स भूयो ववृधे हि तस्याः दैवेहि लोकोनितरामधीनः ॥ ९ ॥

उसने वैद्यों से कहा कि आप लोग इस रोग का इलाज करें जितना धन चाहो ले लो परन्तु इसे सकुशल कर दो। उसके कहने पर वैद्यों ने उसे देखा और रोग का निदान बताया बहुत यत्न किया किन्तु रोग नाश होने की अपेक्षा बढ़ता गया।

कार्यं परां कस्यचिदेतिसिद्धिं विनापि यत्नं जगती तलेऽस्मिन् ।
यत्नं चरन्तः सततं तु केचित् साफल्य वैकल्य महो भजन्ते ॥ १० ॥

केषांचिदग्रे सह हस्तबन्धं तिष्ठन्ति संकेतमपेक्षमाणाः ।
परः सहस्राः किल भृत्यवर्गाः कुर्मोऽधुना किन्विति चार्थयन्तः ॥ ११ ॥

केचित्तथा नग्नपदोऽपदस्था रथ्यास्वटन्तो मलिना रजोभिः ।
आज्ञापनीयाःस्म इति प्रपन्ना एवं प्रलापैः स्वदशां वदन्ति ॥ १२ ॥

इतस्ततः स्वादु पदार्थ हस्ता बोभुज्यतामित्यसकृद्गदन्तः ।
पुरो बहूनां च महाजनानां तिष्ठन्ति वैस्वार्थपरा मनुष्याः ॥ १३ ॥

देहीति देहीत्यसकृत् वदन्तः क्रान्ता क्षुधा केऽपि बुभुक्षुवोऽत्र ।
ग्रास प्रमाणान्न जिघृक्षयैव गृहं गृहं नित्य मटन्तिदीनाः ॥ १४ ॥

दैव से किसी का काम बिना यत्न से हो जाता है किसी का यत्न से भी नहीं। किसी के सामने हज़ारों सेवक मौजूद रहते हैं । और कई विचारे नंगे पैरों से इधर उधर गालियों में फिरते हैं। कई लोगों के सामने तो सेवक स्वादु भोजन लेकर खड़े रहते हैं। और दूसरे लोग भूख के मारे एक २ दाने वास्ते भटक रहे हैं।

केचिद् विमानेन चरन्ति लोक माकाशमार्गेण सुखोपविष्टाः ।
नानात्मकं प्राकृतिकं च दृश्यं देहेन्द्रियाकर्षक मीक्षमाणाः ॥ १५ ॥

कारासु केचित् पृथिवीं लिखन्तो हस्तांगुलीभिर्गमयन्ति कालम् ।
व्रजन्ति कारापरिचारकैश्चदुर्वाक्यबाण प्रतिघातमेते ॥ १६ ॥

मंचेषु केचिद्विविधास्तरेषु निद्रां लभन्ते सुखदायिनीं वै ।
लुठन्ति भूमौ मनुजास्तु केचित् येषां न वस्त्रं न गृहादिकं च ॥ १७ ॥

मूर्खां महामोहमयाहि येषां कृष्णाक्षरं स्यान्महिषायमानम् ।
अध्यासते स्वर्णमयानि नित्यं सिंहा सनान्यत्र मुदोल्लसन्तः ॥ १८ ॥

पारंगता वेदपयोनिधेस्तु कायस्यकान्त्यातिगताश्चकामम् ।
योग्या कुलीना सुधियश्च लोकान् विस्मापयन्ति स्वदरिद्रतायाम् ॥ १९ ॥

कई विमान द्वारा आकाश यात्रा में सुन्दर दृश्य देखते हैं। और कई विचारे जेल में रह कर महान् दुःख पाते हैं। कई तो पलंगों पर सोते हैं और कई जमीन पर ही लोटते हैं, यहां महामूर्ख लोग सुन्दर सोने के सिंहासनो पर विराजमान हैं । बड़े विद्वान् तथा खूबसूरत रंक की दशा में रह रहे हैं।

यतस्ततः कुत्रचिदत्र गेहे मायैव माया रमते प्रकामम् ।
अन्ये तु हीनानिजजीविकाभिस्तद्दर्शनार्थं विपणन्ति देहम् ॥ २० ॥

एवंविधा वीक्ष्य दशा विचित्राः संसारिणां वैमनसामगम्याः ।
वाचा मवाच्यं विदुषामुपास्यं दैवं बलीय स्त्विति मे विभाति ॥ २१ ॥

तेनैव दैवेन निरुद्ध वीर्याः वैद्या यतन्तोपि यथानिदानम् ।
रुग्णेष्वनेकेष्वपि सिद्धहस्ता बन्ध्योद्यमास्ते विजहुश्चिकित्साम् ॥ २२ ॥
यातेषु गेहेषु चिकित्सकेषु जज्वाल चिताचिति रस्यतीव्रा ।
चिन्तातुरोऽसौ धनिकः सुखार्थी मेशं तथोमेशमगाच्छरण्यम् ॥ २३ ॥
चिन्तातुरस्याथ निराश्रयस्य विश्वंभरध्यानपरायणस्य ।
संकल्पकश्चेतसि संबभूव स्वस्थं मनस्तस्य ततस्तु जातम् ॥ २४ ॥

किसी २ घर में तो माया बिखरी पड़ी है और कई रोटी वास्ते अपने को बेच रहे हैं। ऐसी दशा को देख कर दैव ही का ध्यान आता है। इसी दैव के कारण ही सभी वैद्यों का परिश्रम सफल न हुआ। सब वैद्य निराश हो कर वापस गए, तब धनी को चिन्ता हुई चिता की दशा में एक विचार आ जाने से उसे शान्ति मिली।

गच्छाम्यहं तस्य महात्मनोऽद्य पार्श्वे स्वयं साधियतुं स्वकृत्यम् ।
केनाप्युपायेन तमानयामि मनोरथो मे सफलो यथा स्यात् ॥ २५ ॥
एवं विचिन्त्यात्मनितं हृदिस्थं गोपालदासं प्रति संप्रतस्थे ।
अस्ताचलस्पर्शिणि वासरेशे प्रापाश्रमं सोऽपि समाप्य मार्गम् ॥ २६ ॥
सान्ध्यं विधिं साधु समाप्य सद्यः सुखासनस्थं सददर्श साधुम् ।
नमस्यया तं परिचर्य पार्श्वे तदासनस्यैष तदा निषण्णः ॥ २७ ॥
आदेशमासाद्य मुनेस्तमाह स्वामिन् भवन्तं हिनिनीषुरस्मि ।
भार्या मदीयातिरुजा परीता स्वामिन् कृपादृष्टिमपेक्षते ते ॥ २८ ॥
समं मया तत्र भवांस्समेतु परोपकारेष्वविलंबमानः ।
तस्या दशां खेदमयीमिदानीं ध्यायन् विषादेन समावृतोऽस्मि ॥ २९ ॥

अब विचार यह हुआ कि मैं उस महात्मा जी की शरण में जाऊं। ऐसा सोच कर वह चला और शाम के समय वहां जा पहुंचा। नित्य नियम के बाद आसन पर बैठे महात्मा जी को प्रणाम किया। फिर प्रार्थना की कि आप मेरे साथ चल कर मुझे कृतार्थ करें। आप परोपकारी हैं मेरी दुःखी देवी को आप सुखी करें।

श्रुत्वा वचस्तस्य तदा महात्मा जगाद वाक्यं हितकाङ्क्षिणं तम् ।
ग्रामान्तरं नैव वणिङ् मयाद्य शक्यं प्रयातुं हृदि निश्चिनुष्व ॥ ३० ॥
तामानयातोऽत्र यथा कथंचित् श्रीशः सुखं दास्यति दीन बन्धुः ।
तस्याश्रयेणैव भवत्कृतेऽहं यत्नं करिष्यामि न चिन्तयस्व ॥ ३१ ॥
आकर्ण्य वाक्यं धनगर्व मूढा श्री स्वामिनं प्राह विनष्ट चेताः ।
स्वामिन्नयुक्तं वचनं ब्रवीषि मान्याय मह्यं बहु मानवानाम् ॥ ३२ ॥

स्वीकृत्य वाक्यं लघु मानवानां स्वामिन् भृशं दूरतरं प्रयासि ।
प्रोक्तस्तु मान्येन मयेह तेषां गन्तुं समीपेऽपि न रोचतेते ॥ ३३ ॥
क्रूरं वचस्तस्य मदेन पूर्णं श्रुत्वामहात्माऽकथयद्धनाढ्यम् ।
मोहान्ध दुर्गर्वविनष्टबुद्धे व्यर्थं प्रलापं कुरुषेकिमर्थम् ॥ ३४ ॥

उसकी बात सुन कर प्रेम से सन्त जी ने कहा कि जाना तो कठिन है । आप उसे ले आवें परमात्मा की कृपा से सुख होगा । तब धनी ने कहा कि आपकी बात ठीक नहीं है । आप छोटे लोगों की बात मानते हो तो मेरी क्यों नहीं मानते मैं तो बड़ा हूं । उसका मद देखकर सन्त जी बोले कि प्रलाप मत करो ।

शीर्षे महोष्णीषमिदं निधाय मेषायमानः परिदृश्यसे त्वम् ।
उत्तिष्ठ दूरं प्रतियाहि शीघ्रं स्थानं नहीदंहि मदोन्मदानाम् ॥ ३५ ॥
न्यूनाः स्वतो ये मनुजास्त्वयेह प्रोक्ताः पुरस्तात्तु ममाद्यमूढ़ ।
तेषामुपानत्तुलनां न यासि मद्दृष्टिमध्ये कथयामि सत्यम् ॥ ३६ ॥
मान्योऽसि येषां खलु तत्समीपे गच्छ त्वमुत्थाय पलं नतिष्ठ ।
मान्यं भवन्तं न कदापि मन्ये मन्येऽतिनीचं जगतीतलेत्वाम् ॥ ३७ ॥
पश्यन् स्वतोऽन्यान् लघुताविशिष्टान् निध्यायसे स्वं न महत्तमं किम् ।
हानिं परस्यात्मयशोवदंस्त्वं कार्पण्य मूढ़ो न विलज्जसे किम् ॥ ३८ ॥
इत्यादि वाक्यं समयोचितं श्री स्वामी समुच्चार्य बभूव तूष्णीम् ।
मौनं समुत्थाय धनेश्वरोऽपि चिन्तातुरः सन् नगरं जगाम ॥ ३९ ॥

यहां से चले जाओ क्योंकि यह स्थान अभिमानी लोगों वास्ते नहीं । जिनको तुम छोटा कहते हो तुम उनके उपानत् के समान भी नहीं । मेरे विचार में तो संसार में सब से नीच तुम हो । दूसरों को छोटा और अपने आप को बड़ा कहते हुए तुम को शर्म नहीं आती । ऐसा कह कर स्वामी जी ने मौन किया और धनी चला गया ।

ये केऽपि मुख्या नगरेऽभंस्तान् सर्वान् समाहूयविविक्तदेशे ।
अश्रावयद्वृत्तमसौ स्वकीयं श्रुत्वा तमूचुः पुरुषप्रधानाः ॥ ४० ॥
शोच्यं गतं नैव कदाचिदत्र कार्यं पुरःस्थं परिशोचनीयम् ।
चिन्ता मतीतस्य विहाय शीघ्रं कार्यं किमस्माकमितीरयस्व ॥ ४१ ॥
सर्वे भवन्तोऽपि मया सहाद्य वदन्तु गत्वाथ महात्मने तत् ।
मान्यो जनानां च निराकृतोऽस्मि राज्याधिकारेऽपि समादृतोहम् ॥ ४२ ॥
गच्छेद्यथा तत्र मया सहासौ यत्नोविधेयोहि तथाविधोऽत्र ।
न चेदसौ गच्छति साम्प्रतं हि मानो महान्मे सकलो विनष्टः ॥ ४३ ॥

सर्वे समं तेन गता निशीथे शय्याश्रितं तं परितः प्रणेमुः ।
चन्द्र प्रकाशेन विलोकयंस्तान् स पृष्टवानागमनस्य हेतुम् ॥ ४४ ॥

तब उस धनी ने नगर के मुख्य लोगों से यह समाचार कहा। तब उन लोगों ने कहा कि बीते को छोड़ कर आगे को विचारो। तब धनी बोला कि आप सब मेरे साथ चल कर उन से कहें। कि वह मेरे साथ चलें, यदि वह नहीं चलेंगे तो मेरा मान नष्ट होगा। वे तब वहां गए और प्रणाम किया, तब सन्त जी ने आने का कारण पूछा।

प्राप्यावकाशं किल तन्निदेशात् वाक्यं जगुर्भक्ति परास्तदानीम् ।
साक्षात्कृतिर्नो भवतो महात्मन् भाग्येन लब्धाघविघात हेतुः ॥ ४५ ॥
हस्तेन निर्दिश्य ततस्तमेव स्वामिन्ननेनेह समं समेताः ।
स्वार्थे रतानां स्खलनं क्षमस्व कृपादृशा पश्य कृपानिधेनः ॥ ४६ ॥
त्वामेव चित्ते शरणं विचार्य प्राप्तोऽधुनानन्यशरण्यकोऽयम् ।
प्राप्ता वयं चापि तदर्थमेव देवोऽसिदिव्यां च कृपा कुरुष्व ॥ ४७ ॥
ज्योतिर्विदो येऽन्य चिकित्सका वा सर्वे पुरानेन परीक्षिताश्च ।
रोगो न तस्याः प्रशमं प्रयाति प्रयाति वृद्धि महतीं तु भूयः ॥ ४८ ॥
एतावदुक्त्वा नगरागतास्ते तूष्णीमभूवन् पुरतोऽस्य सर्वे ।
श्रुत्वेरितं तद्वचनं विनम्रं प्राहात्मरामोऽथ वचस्तदानीम् ॥ ४९ ॥

उन सब ने कहा कि महाराज आप के दर्शन वास्ते हम आए हैं। फ़िर कहा कि यह हम सब को लाया है अब आप कृपा करें। यह आप की शरण में आया है आप इस पर कृपादृष्टि करें। सब यत्न करने पर भी इसकी देवी का रोग नहीं गया। इतना कह कर वे सब चुप हुए तब महात्मा जी ने मधुर बाणी से कहा।

सामान्यधर्मो जगतीतलेऽस्मिन् संसारिणां जन्मवतां सदैव ।
दैवेन दीना विभवेन हीनाः सेव्या जनास्ते सततं स्वशक्त्या ॥ ५० ॥
आशां पुरस्कृत्य तथा स्वकीयां जनाः समायान्ति ममाश्रमे ये ।
सेवां यथाशक्ति करोमि तेषा मेतां प्रथां धर्ममयीं सुरक्षन् ॥ ५१ ॥
दीनं स्वमात्मानमयं विजानन् तामानयेदत्र यदि प्रपन्नः ।
यत्नं यथायोग्य महं करिष्ये श्रेयः परेशोऽस्य विधास्यतीति ॥ ५२ ॥
श्रुत्वेदृशीं तस्य महात्मनस्ते वाचं न किंचिज्जगदुः पुनस्तम् ।
तूष्णीं नमस्कृत्य गृहाणि जग्मुः श्रद्धालवस्तस्य वचः प्रवाहे ॥ ५३ ॥

आन्दोलिकायां स्ववधूं प्रवेश्य गेहं गतोऽसौ धनिकोऽपि तूर्णम् ।
कैश्चित्समुत्थाय जनैः स्वकीयैः तदाश्रमंशीघ्रतयानिनाय ॥ ५४ ॥

हम सब का यह धर्म है कि हम दीन लोगों की सेवा करें । इसी कारण जो लोग मेरे पास आते है मैं उनकी सेवा करता हूं । अब यह भी उसको यहां ले आवे मैं अवश्य सेवा करूंगा । ऐसा सुन कर वे लोग नमस्कार करके वहां से घरों को चले गए । वह धनी पालकी में बिठा कर अपनी देवी को यहां ले आया ।

गेहागतानां मनुजैः स्वशक्त्या स्थानप्रदानादिकया सुरीत्या ।
स्नेहेन सत्कारविधिर्विधेयः देशे पुराणेह यतो प्रथैषा ॥ ५५ ॥
तां पालयन् देशगतां प्रणालीं तेभ्यो महात्मा सुभगं कुटीरम् ।
ददौ निवासाय तथौषधं च विचार्य तस्यै सुखदं-सुखेप्सुः ॥ ५६ ॥
स्वस्था बभौ सा तु दिनत्रयेण तदौषधं लाभदमाददाना ।
व्याजं सता मौषधमात्मभाजां-संकल्पकः सिद्धिकरोहि तेषाम् ॥ ५७ ॥
विलोक्य तस्याः कुशलं शरीरे गदं विनष्टं च तथा समूलम् ।
गच्छन्तु गेहं सुखिनः स्वकीयं पूर्णाभिलाषा इतितान् जगाद ॥ ५८ ॥
रोगग्रहेणाथ चिराद्गृहीतां मुक्तां तु दृष्ट्वा निजधर्मं पत्नीम् ।
सम्बन्धि वर्गेण समंतदासौ तुष्टिं परां भाग्यभवां जगाम ॥ ५९ ॥

आने वाले का आदर करना, यह एक पुरानी रीति है । इसी कारण सन्त जी ने उनको निवास स्थान तथा औषधि भी प्रदान की । महात्मा जी की कृपा तथा औषधि ले ३ दिन में हो वह नीरोग हुई । तब सन्त जी ने उनसे कहा कि अब आप लोग अपने घर जावें । रोग के चले जाने से सारे परिवार में सन्तोष हुआ ।

पात्रे निधायाथ तदोपहारं श्रद्धानुसारं धनिको यथार्हम् ।
श्री स्वामिनस्तस्य पुरः समर्प्य मौनं प्रणम्योपविवेश भक्त्या ॥ ६० ॥
तस्मै महात्मापि ततो जगाद द्रव्यं किमर्थं निहितं पुरस्तात् ।
ग्राह्यं मया नैव गृहागतेभ्यो दीनातुरेभ्योऽथ भवादृशेभ्यः ॥ ६१ ॥
मयाकृतं दीनम किंचनंत्वां मत्वा न भूयो विभवाधिनाथम् ।
भावं तमाश्रित्य भवन्निमित्तं पूर्वं ग्रहीतास्मि न किंचिदेव ॥ ६२ ॥
गच्छ स्व गेहं कुशलान्तरात्मा तुष्टोऽस्मितेऽहं न विषादमेहि ।
कस्यापि संसार विरक्तवृत्तेर्द्रव्यभिमानो न निदर्शनीयः ॥ ६३ ॥

वस्तूपहारेण पुरस्त्वयेदं संस्थापितं यत्तदिदं गृहाण ।
माते व्यथाभून् न च येऽन्यथाऽभूत् संकल्प एषौऽप्रतिकारभक्तेः । ६४।।

तब धनी ने सुन्दर उपहार महात्मा जी के आगे भेंट किया। परन्तु सन्त जी ने यह उपहार लेना स्वीकार नहीं किया। अपना कर्तव्य जान कर मैंने सेवा की है अतः कुछ लेना नहीं। आप खुशी से घर जाओ फिर कभी अभिमान न करना । यह सब वस्तु आप ले लो मेरा यही संकल्प है।

सह स्वकीयैर्धनिको गिरं तां श्रुत्वा तमोहानिकरीं तदीयाम् ।
मायाभिमानं मनसो विहाय विशुद्धबुद्धिः सबभूव तूर्णम् ।। ६५ ।।
संसारिणांहार्दिक धृष्टतेह हार्दाधिकारं लभते स्वतन्त्रा ।
तावन्नयावद्विलसन्तिवाचः सतां पुरः सत्यदृशां जगत्याम् ।। ३६ ।।
सूर्योदये याति तमो विनाशं वह्नेः समीपे च हिमं तथैव ।
गंगाम्भसि प्रौढमलाधवृन्दं स्वार्थे तथा प्रेममयी लतेयम् ।। ६७ ।।
बुद्धिः कुसंगेन विनाशमेति शान्तिः क्षयं याति कुपुत्रजातेः ।
विद्या सदाभ्यास वियोगयुक्ता स्वास्थ्यं यथाऽपथ्यवशाद्विपन्नम् ।। ६८ ।।
वाक्यानि तत्वार्थ दृशां जगत्यां प्रीत्या प्रणीतानिहितेप्सयास्य ।
घोरं तमोऽज्ञानमयं समग्रं समं स्वकार्येण विनाशयन्ति ।। ६९ ।।

उनकी ऐसी वाणी सुन कर धनी का मन निर्मल हो गया । माया वालों को अभिमान तब तक होता है, जब तक सन्त न मिलें। सूर्य से तम आग से हिम-गंगा से पाप-स्वार्थ से प्रेम कुसंग से बुद्धि कुपुत्र से शान्ति-अनभ्यास से विद्या नष्ट होती है। ऐसे ही सन्त वाणी से घोर अज्ञान का भी अन्त होता है।

धनी पदाब्जेऽस्य शिरो निधाय पश्चात्तपन् पूर्वकृताज्जगाद ।
पुरामयाज्ञानवशाद्यदुक्तं क्षन्तव्यमद्यासि यतो क्षमाढ्यः ।। ७० ।।
कोपोऽपि बालेषु सतां कदाचित् शिक्षाविधानाय न हानिहेतुः ।
रुजा परीतस्य रुजोऽपहर्ता करोति वैद्योऽत्र यथा चिकित्साम् ।। ७१ ।।
स्वस्थेयमद्यास्ति न केवलं वै सर्वेवयं स्वस्थतमा दयालो ।
सदा वयं ते कृपयाऽवलोक्या इत्यर्थयन् स स्वपुरं जगाम ।। ७२ ।।
ग्रामे तदारभ्य समागतानां सेवां करोतिस्म महात्मनां सः ।
सर्वेषु साध्वी प्रकृतिर्हि तस्य न कस्यचित् सोऽद्य करोति पीड़ाम् ।। ७३ ।।

माया मान तमोऽन्धताहतधियो दुर्वारगर्वावृताः ।
ये मानुष्यवपुर्दुरासदमिदं पापैः नयन्ति क्षयम् ।।
ते ज्ञानैकदृशा कृपापरतया श्री स्वामिना पाविताः ।
लोकोद्धार परायणा भुवि यतः सन्तो दयाऽम्भोधयः ।। ७४ ।।

वह धनी महात्मा जी को प्रणाम कर कहने लगा कि महाराज क्षमा चाहता हूँ बालों पर बड़ों का कोप शिक्षा के लिये होता है इस समय यह बधू ही केवल स्वस्थ नहीं हुई हम सब भी आप की दया से स्वस्थ हैं इस प्रकार कृतज्ञता प्रकट करके वह धनी अपने गांव में आ गया तब से सदा साधु सेवा में रहने लगा और कभी भी कोई बुराई नहीं की जिन को धन का मान है जो मानव जन्म का भाव जानते ही नहीं ऐसे लोग भी पवित्र हो गए जिन महापुरुषों की कृपा से वे सन्त दया सागर हैं ।

इति रुग्ण व्यथा निराकरणं नाम षोड़शः सर्गः ।

---

# अथ स्मर विजयो नाम सप्तदशः सर्गः ।

एकान्तवासी नियतो महात्मा कुर्वन् तपस्यां समुवास तत्र ।
लोकानुसारं हि हिताय तेषां शास्त्रीय कर्माणि तथा चकार ।। १ ।।
आकस्मिकेनैव च कारणेन कान्तारमध्यस्थ कुटीं विहाय ।
केनापिसाकं नगरं गतोऽसौ सर्वेषु जीवेषु समस्तपस्वी ।। २ ।।
तस्मिन्दिने कोऽपि महोत्सवोऽभूत् नार्यों नरा संमिलिताश्चकांक्षुः ।
अद्याधुना तस्य महात्मनोऽपि साक्षात्कृतिः पापहरा भवेन्नः ।। ३ ।।
दातुं शुभं दर्शनमेतदर्थं संप्रार्थितो मान्यतमो महात्मा ।
तस्य प्रतीक्षां सकला अकार्षुं मेंधं यथा चातकमण्डलानि ।। ४ ।।
प्राप्तस्ततस्तत्र तु तत्पुरस्तात् साक्षात्कृतश्चापिपिपासुनेत्रैः ।
सिंहासने रम्यतमे तदानीं आवेदितस्तैः समुपाविशत्सः ।। ५ ।।

एकान्त वास में इन सन्त जी ने तपस्या वा शुभ कर्म किये । अचानक एक दिन वे कुटिया से कारण वश नगर में आए । उस दिन महोत्सव था वहां ही लोग दर्शन को आशा में थे जैसे चातक मेघ को चाहता है वैसे लोग इन को चाहते थे । इनके आने पर सब लोगों ने प्रेम से इन का दर्शन किया ।

अत्रत्यकार्यस्य समाप्तिकाले चकांक्षगन्तुं स्वकुटीरदेशम् ।
संप्रस्थितो नेत्रनिपीयमानः संपश्यतामाश्रमभूरिभागम् ॥ ६ ॥

मार्गे व्रजन्तं कमनोय रूपं कांत्या महत्या विलसन्त मेनम् ।
पुष्पेषुलावण्यमधोनयन्तं सौन्दर्यपूरेण शरीरजेन ॥ ७ ॥

गेहाद्गता बाह्य भुवं हि काचित् वरांगना दैववशात्तदैव ।
पूर्णेन्दु रम्यानन भासमाना शिरीषपुष्पाधिककोमलांगी ॥ ८ ॥

दृष्ट्वैव शुक्लासित भासया सा वीरान् पुरोगान् परिपातयन्ती ।
हावेन भावेनविचालयन्ती मनांसि तेषां मदनेन मत्ता ॥ ९ ॥

वहां का काम पूरा होने पर यह आश्रम की ओर चले । मार्ग में जाते हुए इन का रूप बहुत सुन्दर लग रहा था । उस समय किसी सुन्दरी ने इन को रास्ते में देखा । यह स्त्री नज़र से हाव भाव से लोगों को हिला रही थी ।

विस्मारयन्ती ममतास्पदं वाहन्तास्पदं पार्श्व समागतानाम् ।
शरायमाणैर्विविधैः कटाक्षैर्देहं विदार्यान्तरितैर्जनानाम् ॥ १० ॥

दिशावकाशं परितस्तथासौ सुगन्ध पूरेण शरीरजेन ।
प्रसिद्धगन्धातिगतेन सम्यक् स्वभावसिद्धेन सुपूरयन्ती ॥ ११ ॥

अदृष्टपूर्वैर्विविधैः प्रसूनैः स्रजं सुरीत्या ग्रथितां विचित्राम् ।
कण्ठे मनोहारिणि धारयन्ती चैतांसि लोकस्य हठात् हरन्ती ॥ १२ ॥

पूर्णा स्वयं प्राकृतिकेन सुभ्रु गन्धेन सा मान समर्पणाय ।
द्रव्याणि नैकानि सुगन्धवन्ति कस्तूरिकादीनि तनौ दधाना ॥ १३ ॥

देवांगना स्वर्गनिवासिनी किं भुवं गता नाग सुताथवेयम् ।
नेत्राणि नः पावयितुं सुकेशीवेयं समागादिति तर्क्यमाणा ॥ १४ ॥

इसके कटाक्षों से लोग अपने आप को भी भूल गए थे । यह देवी शरीर की खुशबू से दिशाओं को भर रही थी । सुन्दर फूलों की माला गले में पा रखी थी । अनेक भूषण भी धारण किये हुए थे । लोगों ने समझा कि यह कोई अप्सरा यहां पर आई है ऐसा मालूम होता है ।

विद्युत्सकाशादनलाद्विधोश्च सारं गृहीत्वा रचितेव धात्रा ।
प्रतीयमानातिचकासमाना यतस्ततस्तत्र पथिस्थितानाम् ॥ १५ ॥

प्रफुल्लपुष्पस्तबकान्विताथ लतानविद्धा कलिकावृतेव ।
विराजमानावयवैः स्वकीयैः नवे वयस्यद्यविकासमाप्तैः ॥ १६ ॥

कृत्वा भ्रुवौ चापसमौ स्वकीयौ चक्षुःकटाक्षान्निशितानिषूंश्च ।
वीरैर्वियुक्तामिव निर्भयेन जेतुं त्रिलोकीं किल तत्परेव ॥ १७ ॥

नागेन्द्र शुण्डेन समौ शुभोरू वस्त्रान्तरस्थावपि भासमानौ ।
रम्यं वहन्ती रशनावृतं च श्रोणीतटं स्त्री गणनाग्रगण्या ॥ १८ ॥

को नाम धन्यो जगदग्रगण्यो धाताऽधरं बिम्बफलोपमानम् ।
अस्मिन् विशाले कुचकुम्भयुग्मे को लेखिता पत्रलतावलींश्च ॥ १९ ॥

यह बिजली वा चांद के सार से बनी है ऐसा लोगों का तर्क था । फूलों के गुच्छों वाली बेल की तरह यह सुन्दर है । भ्रुकुटी को कमान तथा कटाक्षों को तीर बना कर यह संसार को जीतना चाहती है । हाथी के सूण्ड जैसे उरू कपड़े के भीतर से भी नज़र आते हैं कोई भाग्यवान् ही इसका उपभोग करेगा ।

सौवर्णदाम्ना परिवारितं न जानीमहेऽस्या जघनं घनं च ।
कस्योपभोगाय कृतं विधात्रेत्यालोचयन्तो ददृशुर्युवानः ॥ २० ॥

जाज्वल्यमानात्मभवानलस्य विस्मारकस्याखिलकर्मराशेः ।
सा हाव भावैः शलभानिवैतान् यूनश्चकारात्मवशंवदांश्च ॥ २१ ॥

नागायमानैः रचितैः सुरीत्या केशैश्च मन्दं पवनेन नुन्नैः ।
मोहं क्षणेनैव नरान्नयन्ती चैतन्यमुद्दाम निमीलयन्ती ॥ २२ ॥

भासा शरीरस्य वचोऽतिपारं शृंगार हेतोर्विधृतानि देहे ।
सा भूषणानि प्रतिभूषयन्ती लावण्यपूर्णा रतिवल्ललास ॥ २३ ॥

प्रथानुसारं जगतस्तथाहि वस्त्राणि शुभ्राणि धृतानि देहे ।
आच्छादनार्थं सुभगापि तानि कान्त्या स्वतन्वाः परिछादयन्ती ॥ २४ ॥

सोने की मेखला से घिरा इसका जघन किस के लिये बना है । अपने हाव वा भावों से जवान पुरुषों को वश में कर रही थी । नाग की तरह काले २ बालों से लोगों को बेहोश कर रही थी यह इस समय कामदेव की नारी रति जैसी सुन्दर लग रही थी अपनी कान्ति से शरीर पर पहिरे वस्त्रों को भी ढ़ांप रही थी ।

सर्वान् विहायाद्य सुरासुरादीन् पूज्यान् भजध्वं सततं जगत्याम् ।
कामं महानन्दमयं मंहिष्ठं देवेषु सर्वेष्विति सूचयन्ती ॥ २५ ॥

बिम्बायमानौष्ठपुटावभासा मुक्तायमानस्वरदालिकान्त्या ।
वेलां हिमांशोरुदयस्य रम्यां किंचिद्धसन्ती परिदर्शयन्ती ॥ २६ ॥

सार्धं मनोभि र्निजदर्शकोनां यूनांपिपासाकुलितैश्च नेत्रैः ।
हस्ते गृहीतं नलिनं स्वचेतो विनोद हेतोः परिचालयन्ती ॥ २७ ॥

सौभाग्यदृष्टा सुमनोरमेयं तिष्ठेच्चिरं नः पुरतो वरोरूः ।
इत्येव मौत्सुक्य भरं नराणां चेतस्सु भूयोऽपिविवर्धयन्ती ॥ २८ ॥
श्रोणी तटे सुन्दर मेखलास्या, घनस्तनापातभियाक्वणन्ती ।
मन्दं रणत्कारमिषेण तस्यै, रक्ष्यास्मि ते तां नितरां जगाद ॥ २९ ॥

सब कुछ छोड़ कर काम देव की पूजा का सन्देश दे रही थी । लाल ह्योंठ वा सफेद दांतों से मुस्कराती चन्द्रोदय का दृश्य दिखाती थी । हाथ में कमल को लेकर हिला रही थी जिससे लोगों के मन हिलते थे। लोग चाहते थे कि हम इसको देखते ही रहें। कमर में बंधी मेखला धीरे २ शब्द कर रही थी ।

कामाग्निना सा परितप्यमाना तेजस्विनं तं सहसाऽथ दृष्ट्वा ।
धाराप्रवाहेण निमेष शून्यै र्नेत्रांशुजालैरपिवद्यथेष्टम् ॥ ३० ॥
वश्यः कथं स्यात् हृदयंगमोऽयं मज्जीवनं हस्तगतं यतोऽस्य ।
चिन्तातुरैवं रमणी तदानीं मुग्धा स्वगेहान्तर माविवेश ॥ ३१ ॥
पर्यंक मारुह्य तथोपविष्टा भावं तमेवाथ विनिर्णयन्ती ।
पर्य्याकुलाभूत् विविधैस्तरगैस्तद्धेतुजातैर्मनसीयमेवम् ॥ ३२ ॥
कामाकुलानां किल भौतिकेऽस्मिन् प्रायो दशावै विविधा भवन्ति ।
आहार पानान्नविधिं तथैते निद्रादिकं देहसुखं त्यजन्ति ॥ ३३ ॥
स्वेष्टं सदा चेतसि चिन्तयन्तः सर्वस्वरूपं हृदि भावयन्तः ।
तस्मिन् कथंचिद् व्यवधानयुक्ते स्मृत्यैव तस्येह धरन्ति देहम् ॥ ३४ ॥

काम की आग से तपी हुई इस युवति ने सन्त जी को देखा। फिर उसी का ध्यान रख कर घर में चली गई। पलंग पर व्याकुल हो कर बैठी और सोचने लगी। कामी लोगों की दशा प्रायः अजीब सी हो जाती है। खाना पीना त्याग कर अपने प्रेमी की याद में जिया करते हैं।

अहर्निशं किं पृथिवी नभः, किं माता गुरुः किंचरिपुः सुहृत्किम् ।
धर्मो स्तिकिं पापविधि स्तथाकिं जानन्ति नो कामपरीतचिताः ॥ ३५ ॥
योगे नियुक्तस्य यथाहि चित्त मीशं विना नैति महात्मनोऽन्यत् ।
कामाकुलस्यापिमनस्तथैव लक्ष्यं विना नैति कुतोऽपि शान्तिम् ॥ ३६ ॥
सत्वस्य भेदो रजसोऽथवा यः भेदो द्वयोरेव गुणात्मकः सः ।
रक्तस्य विश्वेऽथ विरक्तकस्य विस्मारणं तस्य समं द्वयोस्तत् ॥ ३७ ॥
तामेव याता किल कामिनी सा संकेतितां पूर्वदशा मसह्याम् ।
विहाय सर्वं व्यवहारमेवा तद्ध्यानमात्रैक परायणाभूत् ॥ ३८ ॥

शय्योत्थिता सा मनसा पुनश्च संचिन्तयामास मनोऽतिमूढ़ ।
केनाप्युपायेन मया न लभ्यो यत्रासि लग्नं त्वमलभ्यलाभे ।। ३९ ।।

कामी जनों को दिन-रात माता-पिता गुरु आदि का ध्यान नहीं रहता। योगी की तरह वह केवल प्रेमी को याद करते हैं। योगी वा कामी में गुण भेद तो है किन्तु जगत को भूलना समान है। इसी दशा में आ कर इस युवति को केवल उसी का ही ध्यान था। फिर अपने मन से कहा कि तेरी कामना कभी पूरी नहीं होगी।

त्यागी सदैकान्त निवास शीलो बाल्याद्विरक्तोऽथ महातपस्वी।
द्रष्टुं नशक्यश्च दृशा पुरःस्थो वाच्यः कथं स स्वविकारमेनम् ।।४०।।
गच्छामि तत्रैव यथाकथंचित् वक्ष्यामि हार्दं च सतेस्वकीयम्।
सर्वस्य वाञ्छावरदः कथंचित् स मां कृतार्थामपि नाम कुर्यात् ।।४१।।
इत्याशया साप्रययौ तमेन मेकान्तगं चप्रणनाम मन्दम्।
पृष्टाथ तेनापि वदस्व भद्रे प्राप्तासि केनेह मनोरथेन ।।४२।।
स्वामिन् विजानासि मदीयवृत्तं सन्तोयतो ज्ञानकलासु पूर्णाः
आज्ञां त्वदीयां परिपालयन्ती तथापि सत्यं कथयामि हेतुम् ।।४३।।
तेजस्विनं त्वा मवलोक्यमार्गे कामाग्निदग्धाऽस्म्यभवं दयालो।
संकल्प मेनं मम पूरयस्व त्वत्पादयुग्मं शरणं व्रजामि ।।४४।।

वह त्यागी तपस्वी इस बात को कैसे स्वीकार करेगा। अस्तु जाकर कहती हूँ। शायद मेरी बात को पूरा कर दे। इसी आशा से वहां गई तब सन्त जीने आने का कारण पूछा। वह बोली कि आप तो जानते ही हो, तो भी मैं बता देती हूं। आपके दर्शन से काम की आग से जली मैं यहां आई हूं।

श्रुत्वा तयोक्तं वचनं महात्मा समाहितेस्वे हृदये चिचिन्त।
दुर्वासनावासित मानसेयं रीत्या कयानाम विबोधमीयात् ।।४५।।
सन्तः स्वतः सर्वहितैषिणोहि सर्वेषु साम्येन चरन्तिलोके।
स्वामी तदैवं हृदिनिश्चिकाय लोकोपकारो हि मदिष्टमुख्यः ।।४६।
इत्येष सुस्पष्टमिमामवादीत् सौभाग्यशीले कुरुतात् विवेकम्।
त्वां ते मनो यत्र निनोषतेऽद्य मार्गोमहाहानिकरः स एव ।।४७।।
कालुष्यवेगं मनसोऽपहाय स्वस्थाविचारेण वचो वदेह।
चेतः स्वकं त्वं स्ववशे कुरुष्व तत्प्रेरिता व न चरस्व पापम् ।।४८।।
इत्युक्ति माकर्ण्य महात्मनः सा जज्ञौ वचस्तत् प्रतिकूलरूपम्।
मुग्धामनोजेन मनोरमातः प्रत्युतरेणाहश्रृणुष्व नाथ ।।४९।।

उस की बात सुन कर महात्मा जी ने मन में विचार किया। कि पर उपकार करना मेरा धर्म है। ऐसा सोच कर स्पष्ट कहा कि देवि यह तो महा पाप है। अपने मन को वश में करो और यह विचार त्याग दो। ऐसी बात सुन कर काम से पीड़ित युवती ने फिर कहा।

जानामि नाहकिल पुण्यपापं वांछामि कामस्य शुभाँ सपर्याम्।
पूजाविधाने तु भवान् समर्थः योग्यां विधातुं हि सहानुभूतिम् ॥५०॥

स्वस्मैप्रपन्नां भगवन् दयालो कामाकुलां मां न निराकुरुष्व।
सर्वे स्वकीयाहि सतां भवन्ति ज्ञेया स्वकीयेषु किलास्मि सेयम् ॥५१॥

तावत्स नित्यं विधि माविधित्सुः तामाहभद्रे स्वगृहं व्रजस्व।
श्वस्त्वं यदागत्य वदिष्यसीह कार्यंविधास्यामितदेवतेऽहम् ॥५२॥

अस्त्वेव मुक्त्वाथ समुत्थिता सा तस्मै नमस्कारविधिं विधाय।
प्रतीक्षमाणाच तदुक्तवेलां जगाम देहेन न मानसेन ॥५३॥

नाना तरंगैर्हृदयोद्भवैश्च सा यापयामासदिनं तदेकम्।
प्राप्ते तदादिष्टदिनान्तरेच स्वाशाफलादानपदं जगाम ॥५४॥

मैं पुण्य पाप को नहीं जानती मैं तो काम की पूजा चाहती हूँ। मैं आप की शरण में हूं दया करो क्योंकि आप सन्त हैं। तब सन्त जी ने कहा कि मैंने पाठ करना है तुम कल आ जाना। तब वह प्रणाम करके चली गई और कल का इन्तजार करने लगी। किसी तरह वह दिन बिता कर दूसरे दिन फिर वहां आ पहुंची।

पूर्वप्रकारेण शिरोविनाम्य तस्याग्रतः सा सुमुखी स्थिताऽथ।
तस्या मनो ज्ञानगतो विनेतुं वाक्यंजगौ ज्ञानमयं महात्मा ॥५५॥

भद्रेऽद्य किं वांछसिमत्सकाशात् संकोच मुत्सृज्य वदत्वमद्धा।
तुष्टोऽस्मितेऽहं कमनीयरूपे विश्वास मायाहि मदीयवाक्ये ॥५६॥

तेनेरितां साथ निशम्यवाचं रम्यां मनस्तोषकरीं विशेषात्।
प्राणेश जानन्नपि पृच्छसीह भावेन तेनैव समागतास्मि ॥५७॥

चेतोहराऽहं युवतीषु रत्नं यद्दर्शनार्थं मनुजा यतन्ते।
तस्याः पिबन्नोष्ठ पुटामृतं त्वं पुण्याप्यमानन्दममन्दमेहि ॥५८॥

स्वामी ततस्तं परि पृच्छितिस्म गंभीरता पूर्ण गिरा तदानीम्।
कुर्वन्ति कार्यं मनुजा किमर्थं कर्तृत्वमन्तो विधिवाद विज्ञाः ॥५९॥

उसको आया हुआ देख कर समझाने के लिये सन्त जी ने कहा। हे सुन्दरी क्या चाहती हो सत्य २ कहो। ऐसा पूछने पर वह बोली कि उसी भावना से मैं आज

भी आपके पास आई हूँ। मैं एक सुन्दर नारी हूँ आप का समागम चाहती हूं। तब स्वामी जी ने कहा कि मानव कर्म किस लिये करता है।

मन्दोप्यनुद्दिश्य यतोविधेये लोके क्वचिन्नैव प्रवर्ततेऽत्र ।
श्रुत्वा वचो विस्मित मानसा सा निवेदयामास विचार्य तस्मै ॥ ६० ॥
सुखाभिलाषा परिबाह्यमानाः कुर्वन्ति कर्माणि जना जगत्याम् ।
श्री मान्महात्मा पुनरेवमाह सुख स्पृहा चेत्करणेऽस्ति हेतुः ॥ ६१ ॥
कारासु केचिद्विपदावहासु क्लेशं भजन्ते किमिदं प्रतीपम् ।
शास्त्रेण कष्टं नरकं गतानां संसूच्यते तत्र किमस्ति बीजम् ॥ ६२ ॥
मत्या समालोड्य वचो मदीयं विनिश्चितं मे वचनं बदत्वम् ।
एतावदुक्त्वा विरराम धीमान् श्रेयश्चिकीर्षुः शरणागतायाः ॥ ६३ ॥
विस्मापकं सा रमणी ततश्च प्रश्नं चिरं तं हृदये विचार्य ।
कालानुकूलं स्वधियोऽनुरूपं श्री स्वामिने वाक्यमुवाच चैतत् ॥ ६४ ॥

बिना मतलब के कोई भी कुछ नहीं करता तब वह बोली सुख वास्ते लोग कर्म करते हैं तब सन्त जी ने कहा। कि फिर कर्मों से लोग जेल में वा नरक में पड़े क्यों दुःख पाते हैं। बताओ इतना पूछ कर सन्त जी चुप हो गए। तब उस देवी ने बहुत सोच विचार करके इस बात का उत्तर दिया।

भ्रान्ता विवेकेन भृशं वियुक्ता ग्रस्ता प्रमादेन चरन्त्यकार्यम् ।
ये केऽपि लोके नितरां विमूढ़ा मानुष्यभावात् पतिता भवन्ति ॥ ६५ ॥
कारासु हा क्लेश मयीषु कष्टं ते भुञ्जते वा नरके परत्त ।
दोषात्तदज्ञानकृतादनिष्टं ते भूर्यकार्यस्य फलं लभन्ते ॥ ६६ ॥
रोगी सुखार्थ्यप्ययथा चिकित्सां कुर्यात्प्रमादाद्यदि कोपिमूढः ।
स प्राप्नुयान्नूनमनूनकंवै कष्टं फलं नैव निरामयत्वम् ॥ ६७ ॥
स्वामिस्तथैते मनुजाः प्रमादात् केऽप्यन्यथा कार्यकलां चरन्ति ।
दुःखावहं तापमयं ततश्च कालं कथंचिद्गमयन्त्यवश्यम् ॥ ६८ ॥
एवं तयोक्ते तु जगौ महात्मा यत्कार्यमद्यात्रचिकीर्षसित्वम् ।
तस्यास्ति कस्ते परिणामलाभः मत्वेह मत्या वद मेऽद्य सत्यम् ॥ ६९ ॥

जो पतित लोग बिना विचार के बुरे काम करते हैं। वे सब यहां जेल में और वहां नरक में पड़े पापों का फल पाते हैं। कोई रोगी यदि गलत दवाई ले ले तो वह मरता है सुखी नहीं होता। इसी प्रकार उलटे काम करने वाले भी दुःख पाते हैं। ऐसा सुन कर सन्त जी ने पूछा कि तेरे कर्म का क्या परिणाम है बताओ।

कामावृता सा पुनरेवमाह स्वामिन् प्रसिद्धं सुखमेतदस्ति।
यस्यामिलाषां हृदयेनिधाय समागताऽहं तव पादमूलम् ॥७०॥
पुनर्महात्मा निजगाद तस्यै सुखंकियत्कालिक मेतदस्ति।
वर्षावधि स्थायिनु मासिकं वाऽथवा नितान्तं तदनन्तमेव ॥७१॥
सा तं ततः प्राह कृपानिधेऽत्र किं त्वं परं विस्मय मातनोषि।
क्षणं सुखस्यावधिरस्यगीतं नित्यं न मासादिमितं न चैतत् ॥७२॥
निवेदयाम्वेतदयं महात्मन् क्षणं प्रदेयं कृपयाद्य मह्यम्।
पुष्पेषु वाणैर्व्यथिता यतोऽहं शान्तिं लभेयं भवतः प्रसादात् ॥७३।
इत्येवमस्या वचनं निशम्य प्राप्तावकाशो मुनिरेव मूचे।
भद्रे सुखाय क्षणिकाय दुःखं नपश्यसि प्रोज्भितकालिकंकिम् ॥७४॥

तब रमणी बोली मेरे कर्म का फल तो महान् सुख है। फिर सन्त जी ने कहा कि यह सुख कितने समय का है। तब वह बोली कि यह सुख तो क्षण-मात्र का है। अतः एक क्षण के लिये मुझे शान्ति दो मैं काम से पीड़ित हूं । तब सन्त जो ने कहा कि एक क्षण के बाद का दुःख नहीं जानती।

सीमाविहीनं तमसावृतं तत् सोढुं न शक्यं यमदूतभूतम्।
आकांक्षमाणा नरकं तदेतत् मूढ़ासि वा बुद्धिमती त्वमद्य ॥७५॥
वाचं समाकर्ण्य महात्मनोऽस्य तस्या मनोऽप्यन्यतया प्रणीतम्।
सूर्यस्य कान्त्येष गिराऽतिधाम्ना नष्टं तमः काममयं तदीयम् ॥७६॥
गर्तें स्खलन्ती नरकाग्निहेतौ संरक्षितास्म्यद्य महात्मनाहम्।
साक्षात्कृति ब्रह्मविदां कथंचित् जाता भवात्तारयतीति सत्यम् ॥७७॥
कार्पण्य दोषेण भृशं हताऽहं स्वामिन् सलज्जाकिमिह ब्रवाणि।
दुःखावहे कर्मणि निःपतन्ती कारुण्य पूर्णेन समुदृतास्मि ॥७८॥
शिष्यास्मि हे देव कृपां विधेहि कल्याणमार्गं परिदर्श्य मह्यम्।
श्रेयो यथाहं सुतरां लभेयं प्रदीयतां देव तथोपदेशः ॥७९॥

इसका परिणाम तो यम पुरी में महान् कष्ट होगा । ऐसी बात सुन कर देवी का मन पलट गया मन का अन्धेरा दूर हो गया। मन में सोचा कि सन्त जी ने बचाया है, सत्संग का फल यही है। फिर बोली हे महाराज, आपने मेरी रक्षा की, बड़े दयालु हो। मैं आपकी शिष्या हूं उपदेश करो जिस से मेरा कल्याण हो।

पुरा मयाज्ञानवशादुक्तं बालाऽस्मि मां त्वं कृपया क्षमस्व।
शुद्धात्मनाऽहं तु यथासुपर्वै साधू स्तथा मे सुमतिं विधेहि ॥८०॥

मार्गे गतां धर्ममये तदानीं तां सुस्थिरां कर्तुं मितोऽपि सम्यक् ।
संबोध्य हे भद्रमुखीति पथ्यां तथ्यावहां वाच मुवाच तस्यै ॥८१॥
खेदं न किंचि न्मनसा कुरुष्व चेष्टा नते काचनलोक बाह्या ।
पंचात्मकेऽस्मिन् विषये पतन्ति विद्वद्वरेण्या अपि बुद्धिमन्तः ॥८२॥
गताः सुसंगंकिलतेषु केचित् पश्चातपन्तः कृतदुःष्कृतेषु ।
स्वात्मान मस्माद्ध्रुशमुद्धरन्ति भाग्येन केनापि फलोत्सुकेन ॥८३॥
कल्याण मार्गात्पतिता त्वमासीः भ्रान्त्यामनोजस्य बलेन सुभ्रुः ।
तत्रैव भूयोऽपि समागतासि प्रशंसनीयासि ततोऽधुनात्वम् ॥८४॥

पहिले जो कुछ अज्ञानता से मैंने कहा उसके लिये आप क्षमा करें । उसकी ऐसी वृत्ति देख कर सन्त जी ने कहा । कि सुन्दरि पछताओ न इस माया के संसार में सभी भटक जाते हैं । कुछ विरले लोग सत्संग में आकर अपना उद्धार करते हैं । तू भी भटक कर सम्भल गई अतः प्रशंसा के योग्य हो ।

मार्गे चलन्तः पथिका प्रमादादितस्ततो यन्ति कदाचिदेवम् ।
मार्गं लभन्ते कृतबुद्धयो ये भ्रान्तान्न तान् कोपिवदत्यभिज्ञः ॥८५॥
मार्गादपेता मनुजा स्तुकेचित् गतावनं भीतिकरं प्रमादात् ।
प्राप्तुं न शक्ता प्रभवन्ति मार्गं भवन्ति शोच्या खलु भूतलेते ॥८६॥
भ्रष्टा पुरा संप्रति चागता त्वं सनातनेऽस्मिन् पथि शांतिपूर्णे ।
ततोऽति धन्यासि विवेकशीले शृणुष्व वाक्यं भव सावधाना ॥८७॥
आशा कदाप्येवन शांतिमेति शब्दादिभोग्यार्थरतेर्जगत्याम् ।
तत्त्यागतः स्यात्तु कथंचिदेव चेतः समाधाय शुभेऽवधेहि ॥८८॥
काष्ठादियोगादनलो यथेह संवर्द्धते तीव्रतयैव भूयः ।
न हीयते हन्त तृणेऽपि दग्धुं निवेशितेऽसौ तु कदाचिदेव ॥८९॥

जो मानव भूल कर घर आ जाये वह भूला नहीं कहा जाता । जो भटक कर फिर मार्ग में न आ सके वह सोचने के योग्य है । तू भटकी भी फिर समझी भी अतः तूं बड़ भाग्य वाली है । आशा भोगों से नहीं मिटती, त्याग से ही मिटती है । जैसे लकड़ी से आग बढ़ती है घटती नहीं ।

तस्मिन् समाप्ते तु विदीप्तिहेतौ तृणादिकेऽसौ तदभावयुक्तः ।
ज्वाला प्रचण्डोऽपि मरुत्सखायं यत्नं विनैवेह शमं प्रयाति ॥ ९० ॥

संसारजानां तमसावृतानां शब्दादिकाशात्मक वीतिहोत्रः ।
भोगेन तेषां न कदापि शान्ति मभ्येति वृद्धिं भृशमेव कांचित् ॥ ९१ ॥
बुद्धया विविच्याथ विचारशीलैः संत्यज्यते भोगगणो यदेह ।
तृष्णा समाप्ति स्वयं मेव याति काष्ठात्यभावा दनलो यथेह ॥ ९२ ॥
भोगा न भुक्ता इतिसत्यमुक्तं भोक्तार एवेह मृति प्रयन्ति ।
मोहावृताः कालकलाविलासे जीर्यन्ति तृष्णालुलिता वृथैव ॥ ९३ ॥
मीनादिकानां मरणं विलोक्य रसादि संगेन पृथक् कृतेन ।
सर्वाभिषङ्ग प्रचितस्य लोके क्षयो भवेन्नैव कथं नरस्य ॥ ९४ ॥

घास आदि न होने से आग बिना यत्न के बुझ जाती है । इसी तरह आशा की आग भोगों के द्वारा कभी शांत नहीं होती । भोगों के त्याग से तृष्णा अपने आप ही मिट जाती है । भोगों में रहने वाले लोग ऐसे ही अपना नाश करते हैं । रस आदि से मछली आदि नष्ट होते हैं तो फिर औरों का क्या ।

क्षेमाभिकांक्षा यदि वर्ततेते हे शोभने नष्ट मनोज भावे ।
संरुद्धय चेतो विषयेभ्य एतां धर्म्यां सृतिं देवि सर प्रसन्ना ॥ ९५ ॥
एवं बिधैस्तेन महात्मना सा संबोधिता भाग्यमती सुदार्यैः ।
श्रद्धा परीताह ततस्तमेव पुनः पुनः नम्रनतिं विधाय ॥ ९६ ॥
स्वामिन्मनो मे रमयन्ति वाचः पीयूषतुल्या भवदास्यदास्यः ।
जिज्ञासया स्वं शरणं गतेभ्यः वात्सल्यपूर्णोसि महानुभावः ॥ ९७ ॥
मनो ममानन्यगति त्वमेतत् संतोषय श्री शतशोभनीय ।
ततोऽब्रवीत्तां कृपया महात्मा परात्मदर्शी सुतरां प्रसन्नः ॥ ९८ ॥
प्रश्नं विधात्री मयि पुण्यरुपं कासीति मे ब्रूहि सरोरुहाक्षि ।
एषास्मि शिष्यापुरतः स्थिताऽहं त्वदीयमादेश मुपासमाना ॥९९॥

यदि तुम अपना हित चाहती हो तो धर्म के मार्ग पर चलो । इस प्रकार उपदेश सुन कर उसने बार २ प्रणाम किया । फिर बोली कि सन्त जी आपकी वाणी बहुत मधुर है । अपने मीठे वचनों से मुझे सन्तुष्ट करो तब फिर वह बोले । कि आप कौन हैं वह बोली मैं आप की शिष्या हूं ।

शुश्रूषया सम्प्रति नोदिताऽहं वक्तुं भवन्तं विनिवेदयामि ।
पश्यन् पुनः पृच्छसि किंनु साकं हास्यं मया वाकुरुषे दयालो ॥१००॥
यत्रात्मबुद्धिं विदधासि बाले तत्र त्वदीयं नहिकिंचिदस्ति ।
पंचात्मकं यत्किल भूतकार्यं किं तत्र ते चेतसि चिन्तयेदम् ॥१०१॥

तदद्भुतं स्वामिवचो निशम्य मग्ना महा विस्मय सागरे सा ।
कास्मीति सारं बहुशो विचार्य स्वादेशकर्तार मथावदत् सा ॥१०२॥
सत्यं महात्मन् न शरीरमस्मि भूम्यादिसंघात्मक मेव चैतत् ।
अद्यावधिर्ज्ञानविहीनयैतदात्मेति भावेन मया गृहीतम् ॥१०३॥
अज्ञान माहात्म्य मनन्तमत्र शक्यं न केनापि जनेन बोद्धुम् ।
एतेन नात्मा परिचाय्यते मत् स्वात्मातिरिक्तै खलु कोविचारः ॥१०४॥

आप मुझे देख भी रहे हैं फिर बार २ क्यों पूछते हो । तब सन्त जी बोले कि यह शरीर तू कैसे है विचार कर । ऐसी नई बात सुन कर वह हैरान होकर कहने लगी । हे सन्त जी आप सत्य कहते हैं मैं शरीर तो नहीं हूं । अज्ञान का खेल देखो कि अपना आप को भूल जाता है ।

स्वामिन्मनोऽहं पृथगेवदेहात् जानामि युक्त्या परिचिन्तयती ।
पश्यामि नात्मान मतो विभिन्नं त्वं तत्ववेत्तासि निबोधयस्व ॥१०५॥
नित्यं सुषुप्तौ परिलीयमानं त्वदात्मता मेतु कथं मनस्ते ।
स्वात्मा स्वतो नैति वियोगमत्र मनस्तु तस्मिन् समये वियुक्तम् ॥ १०६ ॥
जाग्राद्दशायां मनसो लयोऽयं सर्वत्र सर्वैरनुभूयतेऽत्र ।
सुप्तस्तथाहं खलु गाढ़निद्रः किञ्चिन्न जानामि तमोऽभिभूतः ॥ १०७ ॥
स्वात्मा विवेके परि विह्वला सा तं प्रार्थयत्तत्र ततो दयाब्धिम् ।
भ्रान्तास्मि हे नाथ कृपा कुरुष्व निबोधयत्वंस्वागिरास्मिकाहम् ॥ १०८ ॥
संसार संस्कार महान्धकूपे भ्रष्टा चिरेणाद्य तवास्मि दासी ।
तस्माद्दयालो परिबोधयस्व यन्मे स्वरूपं शरणागताहम् ॥ १०९ ॥

तो फिर मैं मन हूं क्या क्योंकि और तो कुछ नज़र नहीं आता तब सन्त जी बोले तूं मन नहीं नींद में मन तो नहीं होता । आत्मा होता है । जागने पर मन का लय सब लोग जानते हैं । तब देवी बोली कि आप मुझे मेरा रूप बतावें । मैं आप की दासी हूं संसार कूप में पड़ी हूँ दया करो ।

कार्पण्य युक्तां स्वविचार मग्नां स्वामी तदा विस्मितमानसांताम् ।
शृणुष्व वाक्यं कथयामितेऽह मित्यूचिवानात्मविचारमस्यै ॥ ११० ॥
अन्नादि पंचात्मक कोश वर्गाद् स्थूलाद्युपाधित्रितयाच्चभिन्नः ।
शुद्धस्तवात्मेति विबोधये त्वां स्वयं प्रकाशो न परप्रमेयः ॥ १११ ॥
शान्तात्मनस्तस्य निशम्य वाचं पुनर्बभाषे तु मनस्विनी सा ।
सूक्ष्मात्मबोधोऽपि यतो जनानां साधारणानां सुलभो न भाति ॥ ११२ ॥

हे नाथ भिन्नः कथितः शरीरात् स्वात्मा महाश्चर्य मयो जगत्याम् ।
पश्यामि तं नैव कथं तु सन्तं स्वामिस्ततोऽन्याँस्तु विलोकयामि ॥ ११३ ॥

ऐसी दशा में स्वामी जी ने आत्मा के ज्ञान वास्ते और कहा । कि शरीर से भिन्न प्रकाश रूप तेरा आत्मा है। ऐसा सुन कर फिर वह बोली कि यदि आत्मा शरीर से भिन्न है तो फिर मुझे दिखाई क्यों नहीं देता।

बालेऽवगच्छेह यतस्तमेव सत्यं स्वमात्मान मितासि नाद्य ।
गोतीत रूपो विदितस्तवात्मा ज्ञातुं कथं तं प्रभवेर्हृषीकैः ॥ ११४ ॥
सत्तेन्द्रियाणां प्रतिभाति येन योऽन्तर्गतः सर्वविभासकोऽस्ति ।
एतैरभास्यः परिभासमानः यः कश्चिदन्तर्विदितः स आत्मा ॥ ११५ ॥
एकान्त माश्रित्य विविच्य बुद्ध्या भावं मदुक्तं सुकृतोदये त्वम् ।
स्वस्मिन् स्वतः प्राप्य महाप्रसादं मुक्तेह सानंदतया रमस्व ॥ ११६ ॥
पृच्छत्वमिच्छा यदि वर्तते ते प्रष्टुं ततोऽन्यत् सुभगे प्रसन्ना ।
वक्ष्ये मनस्ते परितोषयिष्ये गोप्यातिगोप्यं नहि गोपयिष्ये ॥ ११७ ॥
नेतः परं ज्ञेयतमं मयास्ति जिज्ञासया यस्य भजे भवन्तम् ।
दयानिधे मां शरणं प्रयातां कृतार्थतां सम्प्रति नीतवांस्त्वम् ॥ ११८ ॥

तब सन्त जी बोले कि आत्मा को इन्द्रियों से नहीं देखा जाता। जो इन्द्रियों को प्रकाश देता है वही तेरा आत्मा है। एकांत में अभ्यास करो आप को अपने में परम आनन्द मिलेगा। और कुछ कहना हो तो कहो, उसने कहा कि बस अब मैं कृतार्थ हूँ।

उतिष्ठ गेहं प्रतिच्छ वामे सत्यं सदा तत्र समाचरन्ती ।
शेषं वयस्त्वं गमयाश्रितातं नाशं च विश्वस्य सदा भजन्ती ॥ ११९ ॥
नत्वा ततस्तं हृदि धन्यवादं कृत्वाऽसकृत्सागृहमाजगाम ।
कालात्ततः शुद्धमनस्विनी स्वं शेषं वयः पुण्यतमं चकार ॥ १२० ॥

दृष्टा यस्य दयादृशा भुवि नराः मोहान्धकारावृताः ।
पूता ज्ञानमयीं गतिं सुखकरीं यत्नं विना संगताः ॥
यस्याधारमिता धियाविरहिता प्राप्ता परां शेमुषीम् ।
तस्मै सेव्यतमाय साधुपुरुषैः श्री स्वामिने स्यान्नमः ॥ १२१ ॥

महात्मा जी ने कहा कि देवि जाओ अब भगवान का स्मरण करते रहना घर जाओ आज्ञानुसार नमस्कार करके हृदय में बार २ धन्यवाद करती हुई वह चली गई। अपनी शेष आयुः को पवित्र कर लिया। जिसकी कृपा से अज्ञानी लोग पवित्र हुए बुद्धि हीन थी पवित्र बुद्धि को प्राप्त हुए ऐसे महापुरुषों के सेव्य को नमस्कार हो।

इति स्मर विजयो नाम सप्तदशः सर्गः ।

---

# अथ दारिद्र्यविद्रावणो नामाष्टादश सर्गः ।

कान्तार कान्ता ललितालतासु प्रसूनपुञ्जैः परिशोभितासु ।
पुष्पादिहस्तास्विव बालिकासु तद्दर्शनायाथ समागतासु ॥ १ ॥

सान्निध्ययोगेन सुशाखिशाखा आलम्बयन्तीषु मनोहरासु ।
सम्बधि-ा मंसतटानिवासु समाश्रयन्तीष्वतिचंचलासु ॥ २ ॥

तार्णे कुटीरे रचिते सुरीत्या श्रद्धालु जिज्ञासु सुसेव्यमाने ।
एकाग्र चेतस्क मथ स्तुवन्तं स्रष्टारमीशं मधुरैर्वचोभिः ॥ ३ ॥

कान्ता शरीरस्य विभासमानं तपस्विनं चारुदृशा पुनन्तम् ।
श्री स्वामिनं शान्ति परीत चित्तं प्रसादराशिं सुजनाभिसेव्यम् ॥ ४ ॥

आश्रम की वेलें पुष्पों से सुशोभित थीं जैसे कन्याएं पुष्प लेकर आई हों पास के पेड़ों में लिपटीं थी, जैसे संबधियों के कन्धे को पकड़ रही हों। वहां घास की बनी कुटिया में बैठ कर स्वामी जी पूजा कर रहे थे तपस्या करने से महात्मा जी के शरीर में बहुत तेज था।

चिन्तातुरा दीन दशाभिभूता कश्यावृता काचिदकिंचना स्त्री ।
वासांसि जीर्णानि तनौ वसाना नतानना प्राप्य नमश्चकार ॥ ५ ॥

ततः स्वहस्तौ च परस्परेण संयोज्य रमणी तस्थौ पुरोऽस्य ।
प्रतीक्षमाणा स्तवनावसानं विलोकयन्ती पृथिवीतलंच ॥ ६ ॥

प्रारब्ध कृत्यस्य समाप्तिमाप्तो विलोकयामास स तां महात्मा ।
पप्रच्छ वाचामृततुल्ययासौ को हेतुरस्त्यागमने तवात्र ॥ ७ ॥

वाक्यं तदाकर्ण्य मनोरमं तत् दुःखावृता सा वचने न शक्ता ।
धारा प्रवाहेण कृताश्रुपातै विज्ञापयामास मनोऽतिपीड़ाम् ॥ ८ ॥

दुःखेन तप्ता हृदि तापवेगं संरुद्ध्य हा हन्त यथा कथंचित् ।
दैवात् प्रतीकार विधावशक्ताः प्रायः स्वकालं गमयन्ति लोकाः ॥ ९ ॥

ऐसे समय में चिन्ता से ग्रस्त स्त्री ने आकर वन्दना की। हाथ जोड़ कर भूमि पर नजर टिका कर वहां खड़ी रही। पूजा पूर्ण कर के संत जी ने उस से आने का कारण पूछा। तब वह बोल न सकी और आंसुओं से अपना भाव बता दिया। दुःखी लोग इसी प्रकार कष्ट को सहकर समय बिताते हैं।

दैवानुकूल्यात् सुहृदं मनुष्यं साहाय्य कर्तारमिताः कदाचित् ।
अन्तःस्थ तापं नयनाश्रुपातैः प्रदर्शयन्ते विवशास्तदानीम् ॥ १० ॥

स्वामी निरीक्ष्याथ सगद्गदां तां नेत्राश्रुधारां सततं वहन्तीम् ।
योगेन पीड़ा मनुमीय तस्याः शुश्रूषयापृच्छदिमां तथापि ॥ ११ ॥

आवेदयामास वरानना सा संयम्य वेगं मनसः कथंचित् ।
हे देव सर्वं हि भवांस्तुवेत्ति, तथापि मां वादयसीति वच्मि ॥ १२ ॥

अमेय पापौघ फले महात्मन् दैवेन कष्टे परिपातितास्मि ।
नाहं त्वदन्यं शरणं शरण्य पश्यामि दीनोद्धरणे प्रवीणम् ॥ १३ ॥

भर्ता मृतो हन्त गतोविदेशे पुत्रोऽप्यभाग्याज्जठरान्न जातः ।
कालेन नीतौ पितरावपीत्थं नैकोऽपिलोके परिदृश्यते मे ॥ १४ ॥

दिल में दबाया दुःख अचानक आंसुओं से प्रगट हो जाता है आंसुओं द्वारा जान लेने पर श्री स्वामी जी ने फिर पूछा । तब मन का वेग रोक कर उसने कहा कि भगवन् सुनो । मैं बहुत दुखी होकर आज आप की शरण में आई हूं । पति वा माता पिता मर गए हैं मेरा बेटा हुआ ही नहीं ।

भोक्तुं न गेहेऽन्नकणास्तथामे हे दीनबन्धो कथयामि सत्यम् ।
एतादृशीं जीवन धारणां च कर्तुं न शक्ताहमिहागताऽस्मि ॥ १५ ॥

देहं तथाच्छादयितुं किलैतं वस्त्रं न पश्यामि विनष्टपुण्या ।
जीवामि गच्छाम्यथवावसानं स्वामिन्नितीमां दययेरयस्व ॥ १६ ॥

कन्ये मदीये वयसा नवेन लावण्यपूर्णे मृदुता परीते ।
दैवाश्रये भक्तिकलाकुलेच लज्जालुके चातिविशुद्धवृत्ते ॥ १७ ॥

ते द्वे स्वयोग्याय वराय देये शास्त्रोक्तरीतिं पुरतो विधाय ।
भावो मदीयोऽयमविद्यमाने धने कथं सेत्स्यति हे दयालो ॥ १८ ॥

प्राप्तेऽवकाशे वयसोऽनयोश्च कस्मैचिदेते न समर्पयामि ।
चेत्तत्कथं मातृवरेण्यधर्मं रक्षामि हे नाथ ततोऽस्मि भीता ॥ १९ ॥

घर में अन्न का दाना भी नही है, मेरा जीना कठिन हो गया है । मेरे पास तन ढकने के लिये वस्त्र भी नहीं है । दो मेरी लड़कियां हैं जो सुन्दर तथा सदाचार वा लज्जा वाली हैं । धन न होने से मैं उन दोनों का विवाह न कर सकी वयस्क लड़कियों का विवाह न करने से पाप लगेगा ।

स्रष्ट्रा परेशेन विनिर्मितोऽयं जगद्गतेभ्योनियमोऽविचाल्यः ।
समरुपायैरनपायि शोभः सर्वैः स्वधर्मः खलु रक्षणीयः ॥ २० ॥

स्वयोग्य धर्मात्परिविच्युतेय प्राणैरधर्म्यैः किमहं करिष्ये ।
क्षयं गतोऽय मम हे महात्मन् लोकस्तथासावपि नाशमाप्तः ॥ २१ ॥

एताद्दशी मेऽस्तिदशा दयालो कर्तव्यमूढ़ा शरणागतास्मि ।
चिन्ताब्धि मध्ये पतितास्मि नाथ त्वंमेभवेः सम्प्रति कर्णधारः ॥ २२ ॥

तस्यै ततोऽसौ शरणागतायै कारुण्य संपूर्णमना महात्मा ।
कालानुकूलं हितकारि चेदं स्वतः प्रसन्नः कथनं चकार ॥ २३ ॥

मार्तवचोमे श्रृणु भावपूर्णं कालुष्य वेगं मनसोऽपहाय ।
यमाश्रितं विश्वमिदं विभाति विश्वंभरोऽसौ खलु पास्यति त्वाम् ॥ २४ ॥

भगवान् की आज्ञा है कि सभी अपने धर्म पर चलें । धर्म के बिना जीकर मैं क्या करूं मेरे दोनों लोक नष्ट हैं । मैं चिंता के सागर में डूब रही हूं आप ही कर्णधार बनें । तब सन्त जी ने समय के अनुसार उस से कहा । हे मातः चिन्ता न करो जो सारे विश्व का है तेरा भी वही है ।

संसारिणां नैकविधादशेह संद्दश्यते भूतमये प्रपंचे ।
सर्वस्य चाद्दष्टवशाद्दशाया विजायतेऽदः परिवर्तनंच ॥ २५ ॥

धैर्येण कालः किल यापनीयः प्राप्तोऽप्यकस्माद्विषमो यदि स्यात् ।
पुरा कृतानामिह कर्मणां वै शक्यं न केनापि फलं निषेद्धुम् ॥ २६ ॥

गत्वा गृहं विश्वपतिं भजस्व श्रेयः स एवेह विभुर्विधाता ।
चिन्ता भवत्या न कदाचिदेव कार्याधिकृत्ये न मतिर्विधेया ॥ २७ ॥

सर्वं स्वकीयं च समर्पय त्वं तस्मिन् परे ब्रह्मणि निर्विकारे ।
कार्याणि सर्वाणि तवापि तस्य सेत्स्यन्ति देवस्य विभोः कृपातः । २८ ॥

चलोऽचलो वेति विलोकनाय विपन्मनुष्यं प्रतियात्यवश्यम् ।
धीरास्तया नैव चलन्ति किन्तु क्षोभं महान्तं कलयन्त्यधीराः । २९ ॥

इस संसार में कर्मो के अनुसार सब की दशा बदलती है । धैर्य रखो कर्म का फल रोका नहीं जा सकता । घर जाओ प्रभु को याद करो सब काम ठीक हो जावेगा । भगवान् का भरोसा करो वही तेरा भाव पूर्ण करेंगे । परीक्षा वास्ते कभी २ विपदा आती हैं घबराओ न ।

सर्वेऽसुमन्तः खलु सन्ति देवे सन्तस्तथासन्त इमेऽत्र जीवाः ।
कन्येत्वदीये त्वमपीश्वरेहि स्वस्था विषादं त्यज याहि शान्तिम् ॥ ३० ॥

आशीर्वचस्तस्य तदावधार्य धैर्यं समालम्ब्य विवेकशीला ।
नत्वा पदाब्जं शिरसात्ववादीत् सत्यं करिष्ये भवतो निदेशम् ॥ ३१ ॥

आशीर्वचोभिः सततं विधेया कृतार्थनीयेति निवेदयन्ती ।
भावं तमेवाथ विचारयन्ती गेहं स्वकीयं प्रति सा जगाम ॥ ३२ ॥

सा तत्र बाले तरलेऽपि धीरे वर्षामरुत्पात विशीर्ण रूपे ।
दावाग्निदग्धे विपिनेऽति कान्ते वल्ल्याविवम्लानिजुषे विलोक्य ॥ ३३ ॥

एतेन दृश्येन मनोऽग्रहेन पुनर्विषादं परमं जगाम ।
चिन्ता महावेगविषावृता सा मुग्धा मवस्थां प्रययौ वराकी ॥ ३४ ॥

तेरा तेरी लड़कियों का और सब जीवों का सहारा एक ही है । उसके बाद वह धैर्य से नमस्कार करके घर में आ गई । घर आकर सुन्दर सूखे शरीर वाली लड़कियों को देखा जैसे आग से झुलसी बेलें हों। ऐसी दशा देख कर वह फिर चिंता करते २ जड़ बन गई ।

वातस्य वेगेन विचाल्यमाना शाखेव सा तूर्ध्वमधः सरन्ती ।
शोकेन तेन क्षुभिताबभूव दोलायमानं च मनस्तु तस्याः ॥ ३५ ॥

अस्यां जगत्यां मनुजा कदाचित् स्वस्था कदाचिद्व्यथिता भवन्ति ।
यथा वसन्तादिवियुक्तयुक्ता वन्यालता जांगलपादपाश्च ॥ ३६ ॥
मुग्धा समुत्थाय कियच्चिरेण देवं पुरस्कृत्य जगाद वाक्यम् ।
हा दैव लोला विषमा त्वदीया साधारणैर्ज्ञातु मशक्य भावा ॥ ६७ ॥

शील स्वभावेऽति मनोहरेद्वे चन्द्रानने मेऽद्यसुते किमेते ।
भातो मतौ ते तु किमेतदर्हे यस्यां दशायां भवता नियुक्ते ॥ ३८ ।

धन्योऽसि वन्द्योऽसि सदैव दैव धन्या त्वदीयाऽकथनीयलोला ।
सर्वं विचारेण वरं करोषि शक्ते यतो नानुचितं हि किंचित् ॥ ३९ ॥

पवन से हिली शाखा की तरह इसका मन हिलने लगा। संसार के लोग प्रायः कभी दुःखी और कभी सुखी होते हैं। थोड़ी देर के बाद उठी दैव से कहा तेरी कैसी लीला है। यह चांद की तरह सुन्दर लड़कियां इसी के योग्य हैं क्या ! हे दैव तुम जो करो सो ठीक है समर्थ का सब कुछ ठीक होता है।

क्षुब्धा चिरं साथ महात्मनस्तत् वाक्यं स्मरन्ती धृतिमाप भूयः ।
कार्यं गृहस्यापि यदेव तत्र संस्थापयामास मनः स्वकीयम् ॥ ४० ॥
पूर्वोक्त रीत्यादिवसे व्यतीते तस्या निशा कृष्णतराऽऽजगाम ।
दीप्तिं गते सा जठरानलेऽसौ होतुं न किंचित् सदने ददर्श ॥ ४१ ॥
पार्श्वे समाहूय च ते तदानीं निबोधयामास सगद्गदेयम् ।
अन्नं न भोक्तुं किल विद्यते मे पानीयमापीय सुते शयेतम् ॥ ४२ ॥
रोषो न कार्यो मयिदुर्बलायां कार्या क्षमा मातरि विह्वलायाम् ।
तथेति कन्येऽपि निवेद्य मात्रे शान्त्या कटे संस्वपतां पृथिव्याम् ॥ ४३ ॥

रात्रौ स्वयं सापि तथैव सुप्ता स्वप्नं विचित्रं रमणी ददर्श ।
देवो विचित्राभरणो निशीथे तस्थौ समागत्य पुरःप्रदेशे ॥ ४४ ॥

फिर सन्त जी की बात याद आई तो धैर्य कर लिया । दिन बीता रात आई पेट में आग जली, पर खाने वास्ते नहीं । लड़कियों से कहा कि भोजन नहीं है पानी पी के सो जाओ । मैं गरीब मां हूं, मुझे शाप न देना, लड़कियां चटाई पर सो गई वह स्वयं भी सो गई तब सुपने में एक देव को देखा ।

दृष्ट्वा पुराद्दृष्ट पवित्र रूपं भक्त्याथ देवं प्रणनाम नम्रा ।
पप्रच्छ हे देव किमागतोऽसि सौभाग्य दृष्टा भवदाकृतिर्मे ॥४५॥
तस्यै तदासौ जगदेकनाथो वाक्यं मनोहर्षकरं जगाद ।
तुष्टः स्वयं त्वां तु समागतोऽस्मि वृणीष्व तुष्टा वर मेकमिष्टम् ॥ ४६ ॥
देवेरितं साधुवचो निशम्य दीनाननंना सापि जगाद तस्थै ।
याचे किमद्याहमितो न जाने वरं स्वयं त्वं कृपया प्रदेहि ॥ ४७ ॥
विश्वंभरो नूतनवेषधारी देवस्ततस्ताँ वचनं जगाद ।
दत्तो वरो मेऽद्य वरो भवत्यै गच्छामि दिव्यं सदनं स्वकीयम् ॥ ४८ ॥
प्राप्तो ह्यकस्माद्धि सुरोत्तमोऽसौ लीनस्तदुक्त्वा खलु ताँ तदानीम् ।
सातु क्षणेनैव समुत्थिता भूत् तुष्टा पर विस्मयमास्थिताच ॥ ४९ ॥

इस स्त्री ने प्रणाम करके कहा कि महाराज आप कैसे आए हो । देव बोला कि मैं आप को वर देने आया हूं वर मांग लो । तब वह बोली आप स्वयं ही देदें, मैं तो नहीं जानती क्या मांगू तब देव बोला अच्छा मैं वर देकर जा रहा हूं । देव आया और चला गया वह देवी उठ कर सोचने लगी यह क्या था ।

एतन्मया पूर्व मदृष्टदृश्यं दृष्टं न जाने तु किमेतदासीत् ।
भ्रान्तास्मि सत्यं किमिदं तु मिथ्या व्यचिन्तयत् साबहुधा तिमात्रम् ॥५०॥
ज्ञातुं न शक्यं किमितीति मत्वा सुप्ता यथापूर्व मुदासिताच ।
प्रातः समुत्थाय सनातनं तं विश्वंभर सा मनसा स्मरन्ती ॥ ५१ ॥
बाले समुत्थाप्य समीपसुप्ते शीलस्वभावाद्धृदयंगमे ते ।
स्वप्नं निशीथे विनिभालितंयत् सत्यं दृशा तन्नितरां ददर्श ॥ ५२ ॥
गेह पदार्थैः परिपूर्णमेषा दृष्ट्वा परं विस्मय माजगाम ।
शून्यं गृहं मेऽद्य सुवस्तु पात्रं जातं कथं चिन्तयतीति सेत्थम् ॥ ५३ ॥
अन्नस्य गोण्यो निभृता बिभान्ति वस्त्राणि रम्याणि लसन्ति गेहे ।
पात्रेषु चैकत्र घृतं विशुद्धं पूर्णं नव संनिहितं किलास्ति ॥ ५४ ॥

सोचने लगी कि जो मैंने देखा है वह सत्य है या झूठ है। फिर सो गई सवेरे फिर भगवान् को याद करती हुई उठी। लड़कियों को उठाया तो रात का सुपना सवेरे सत्य देखा। सूने घर को पदार्थों से भरा हुआ देख कर हैरान हो गई। अन्न की गोणियां भरी रखी थीं सुन्दर वस्त्र भी रखे थे।

स्वार्णान्यागण्यानिसुभूषणानि युक्त्यैःतो वा निहितानि सन्ति ।
मुद्रास्तथैता किल राजकीया पात्रेषुपूर्णा हृदयं हरन्ति ॥ ५५ ॥
कस्यापि नैवंविधवस्तु जातं दृष्टं श्रुतं वा वचसा न वाच्यम् ।
केनेह रात्रौ निहितं गृहे नु सस्मार सा तत स्वप्नेन दृष्टम् ॥ ५६ ॥
कन्ये पुरस्कृत्य तदा शुभा सा संश्रावयामास निशीथवृतम् ।
तेनैव देवेन कृपापरेण पूर्णं गृहं नो विविधैः पदार्थैः ॥ ५७ ॥
नीचांस्तथा पापमयाङ्गगत्यां दुर्भाग्यपूर्णान् निहतान् विधात्रा ।
जोवान कस्माद्धि कथं चिदेति श्रेयः पुरोपार्जित पुण्यलभ्यम् ॥ ५८ ॥
मोहं परित्यज्य गृहादिकस्य हित्वा तथान्यान् जगतीपदार्थान् ।
बनं विविक्तं च समाश्रितानां योगः सतां तारयतीति सत्यम् ॥ ५९ ॥

सोने के गहने एक ओर रखे थे और रुपये पात्रों में भरे थे। यह सब वस्तु रात में कहां से आ गई, सोचने लगीं। तब लड़कियों से रात की बात की कि वह देव की कृपा है। कभी २ दीन लोगों को भो खुशी का समय आया करता है। वह बात सत्य है कि सत्संग से नीच तर जाते हैं।

यस्यास्मि पूर्वं शरणागताऽहं महात्मनस्तस्य कृपैव भाति ।
गेहं स्वकीयं सुरलोकतुल्यं पश्याम्यकस्माददतिर्निःनाहम् ॥ ६० ॥
ततो गृहीत्वा च फलादि वस्तु सहैव ताभ्यां रमणी सुताभ्याम् ।
श्रद्धेयवर्यस्य महात्मनः सा संप्रस्थिता दर्शनकांक्षयाऽथ ॥ ६१ ॥
गत्वा सहर्षं प्रणनाम नम्रा पादाब्जयुग्मं परिपूर्णकामा ।
धन्योऽसि हे नाथ कृपाशिषाऽहं महानुभावेन कृतार्थितास्मि ॥ ६२ ॥
धन्यास्मि या त्वच्चरणारविन्दं लग्नाभवं पूर्व मनन्यभावा ।
तीर्णास्मि घोरां विपदं महात्मन् जन्माद्य जातं सफलं मदीयम् ॥६३॥

महात्मा जी की परम कृपा से ही यह सब लाभ हुआ है। तब लड़कियों को साथ लेकर सन्त जी के दर्शन वास्ते आई। जाकर प्रणाम करके कहा कि महाराज मैं कृतार्थ हूं। मैं धन्य हूं जो आप की शरण में आ गई थी। घोर विपदा समाप्त हो गई।

निशीथवृत्तं सुरदर्शनाद्यं निवेदयामास गिरा समग्रम् ।
प्रातर्हृशा दृष्टमभीष्टवस्तु जगौ सविस्तार मिता प्रसादम् ॥ ६४ ॥
यस्यास्ति सृष्टिः परमेश्वरस्य क्षेमं च योगं च सते विधाता ।
तेनैव दत्तं परिभुंक्ष्व भोग्यं मातंगृहं याहि हरिं भजस्व ॥ ६५ ॥
एतेऽपि तस्यैव परात्मनःस्तः त्वं दिव्यशीलेऽसिनिर्मितमात्रम् ।
शास्त्रोक्तरीत्या त्वनयोर्विवाहं कुरुष्व तस्मान्न परा कृतिस्ते ॥ ६६ ॥
पूर्वोक्तवाक्यैस्तु समागतां तां सत्कृत्य मान्यो विदुषां महात्मा ।
संयोज्य वर्द्धस्व, इतीष्टवाचा वाग्मी स वाचां विरराम योगात् ॥६७॥
ततो नमस्कृत्य गृहं गता सा वस्तूनि विन्यस्य यथानुरूम् ।
तस्योपदेशेन विभुं भजन्ती शान्त्यावृता वासगृहेऽध्युवास ॥ ६८ ॥

रात का सुपना और प्रभात का दृश्य सब वर्णन किया । स्वामी जी ने कहा भगवान् की दी वस्तु को आनंद से वरतो । अब इन दोनों लड़कियों का विवाह भी जाकर कर दो । इस प्रकार के वचनों द्वारा उसके मन को सन्तुष्ट किया । फिर वह वहां से घर आई और सब वस्तु सम्भाल कर रख दी ।

चर्चा गतैषाजगति प्रसिद्धि श्रुत्वा जना विस्मयमाप्नुवंस्ताम् ।
महात्मनस्तस्य जनैः प्रयुक्तो व्याप्तः खमार्गे किल धन्यवादः ॥ ६९ ॥
माता सुताभ्यां गुणिनौ युवानौ संमार्गयन्ती सहसा कुतश्चित् ।
प्राप्ता सुतारूपगुणानुरूपौ वंश्यौवरौ धर्म परायणा सा ॥ ७० ॥
ज्योतिर्विदो योग्यतमस्य वाक्यात् सुता प्रदानाय विचार्यकालम् ।
वैवाहिकं योग्यविधि च शास्त्रे प्रोक्तं पुरस्कृत्य चकार कार्यम् ॥ ७१ ॥
दैवेऽनुकूले धनपूर्ण गेहे ग्राम्या स्तदान्येऽपि तथा समेताः ।
सेवार्थं माबद्धकरा अपृच्छन् मातर्निदेशं कुरुचास्मदर्हम् ॥ ७२ ॥

इस चर्चा को सुन कर सब ने सन्त जी का धन्यवाद किया । उस देवी ने लड़कियों के लिये कोई योग्य वर भी पा लिया । किसी विद्वान् की संमति से विवाह का कार्य करने लगी, इस समय ग्राम वासी लोग भी सेवा के लिये आए ।

पुरःस्थितान् तानवलोक्य साध्वी कार्यं किमस्माभिरिति ब्रुवाणान् ।
सस्वागतं तानुपवेश्य सा स्त्री चेतोऽवकाशे सुचिरं निदध्यौ ॥ ७३ ॥
नैते पुरा कर्हिचिदत्र दृष्टाः प्राप्ता यथा मामधुनाद्य लोकाः ।
अदृष्टपूर्वामपि मामुपेत्य पृच्छन्ति कार्यं मिलितास्तथैते ॥ ७४ ॥

दैवेऽनुकूलेऽपि दिशोऽनुकूला तस्मिन् प्रतीपे किल ताः प्रतीपाः ।
एतेऽनुला स्वयमेव जाता दैवस्य दृष्टो महिमाऽय मद्य ॥ ७५ ॥
यो मे दयालुर्दयया करोति सर्वाणि कार्याणि जगद्वरेण्यः ।
तस्यैव भक्ति सततं करिष्ये निर्वाह्य कार्यं सुतयोरवश्यम् ॥ ७६ ॥

सेवा के लिये उन को आया देख कर अपने मन में सोचने लगी कि यह लोग पहिले तो कभी नहीं आए । यह सब महिमा भी दैव की है जो यह सब आए हैं । जो भगवान् मेरा काम कर रहा है मैं भी उसी को भक्ति करूंगी ।

एवं विचार्याथ विवेकिनी सा प्राह स्वगेहं समितान् मनुष्यान् ।
सर्वं मदीयं भवदाश्रितंच को वर्तते मे भवतो विनेह ॥ ७७ ॥
एवं तयोक्ते प्रगताः प्रसादं वैवाहिके कर्मणि ते प्रवीणाः ।
सर्वे प्रसक्तास्त्र यथार्ह कार्ये यथा स्वकन्योद्वहनाद्दताः स्युः ॥ ७८ ॥
सबन्धि वर्गेण विवाह काले यूनोस्तयोरागतयोः सहर्षम् ।
सेवा कृता याऽश्रुत पूर्विका सा विस्मापिकासीज्जनता समाजे ॥ ७९ ॥

ऐसा मन में सोच कर बोली कि आप के बिना मेरा कौन है ऐसी वाणी सुन कर वे लोग विवाह में सेवा करने लगे । विवाह के समय वर वा उनके सम्बन्धियों की बड़ी सेवा की ।

दिव्यानि वस्त्राणि सुभूषणानि पूर्वं न दृष्टानि मनोहराणि ।
चित्राणि भित्तौ लिखितानि यद्वत् सर्वेऽभवंस्तानि विलोक्य तद्वत् ॥८०॥
शोभामयं भाति दिशावकाशं तस्मिन् सुतादान विधौ प्रवृत्ते ।
घोषो महान् वेदगिरां तदानीं विप्रेरितो व्याप-दिशश्चतस्रः ॥ ८१ ॥
एवं हि तस्या सुमनोरथोऽसौ पश्यत्सु सर्वेषु जगाम सिद्धिम् ।
शीर्षाद्दृणं सा सुतयो रपास्य शांता तदाऽचिन्तयदेतदन्तः ॥ ८२ ॥
कर्तव्यता पार मितास्मि नूनं नान्येन तेनैव महात्मनाहम् ।
विश्वेश संवेश विधायिना च ज्ञानेन संसार निवर्तकेन ॥ ८३ ॥
सेवां विधास्यामि सदैव तस्य महात्मनां चात्र समागतानाम् ।
कृता कृतार्थास्मि यतोहि तेन सर्वं तदीयं न मदीय मेतत् ॥ ८४ ॥

सुन्दर भूषण वस्त्र तथा अन्य वस्तु देख कर सब हैरान हुए । विवाह के समय वेद मन्त्रों की ध्वनि से आकाश पूर्ण था । इस देवी का मनोरथ पूर्ण हुआ सिर से भार उतर गया । फिर विचार किया कि महात्मा जो की कृपा से मैं सफल हुई हूँ । इसके बाद वहीं मैं आश्रम की सेवा करूंगी ।

मीरा यथासीत्तु पुरा कदाचित् प्रेमात्मक ध्यान परायणैव ।
प्रागेव जातांशुमती यथेह तज्जीवनं प्रेममयं तथाभूत् ॥ ८५ ॥

ग्रामा गतान् साधुजनारं च भक्त्या संसेवते पुण्यफलोदया सा ।
चर्चा तथा संश्रृणुते स्म नित्यां तेभ्यः शुभां शास्त्र विचक्षणेभ्यः ॥८६॥

प्राप्तं यतस्तत्र समर्पितं तत् द्रव्यादिकं विश्वपतेः पदाब्जे ।
सन्त स्तयार्थैः परितोषिताश्च दीनास्तथा किंचनतामुपेताः ॥ ८७ ॥

सर्वं स्वकीयं बहुना किमत्र सेवाविधावेव समर्प्यते स्म ।
स्वाभाविकीं चंचलतां तदानीं तस्या जहाति स्म मनो विशुद्धम् ॥ ८८ ॥

खाद्येषु पेयेषु च चोष्यकेषु नानात्मकेष्वर्थगणेषु तस्याः ।
विकार हीनं न परैति चेतः लीनं परे ब्रह्मणि चित्स्वरूपे ॥ ८९ ॥

मीरा की तरह इस देवी का मन भी प्रभु प्रेम से पूर्ण हुआ। साधु सेवा तथा भगवत्कथा सुनने में इसकी लगन थी। भगवान् का दिया धन परोपकार में लगाने लगी। उसने अपने आपको सेवा के शुभ काम में लगा दिया भक्ति भाव में लगा इसका मन कभी भी चंचल न हुआ।

एवं विधां तत्र निवासिनस्तां कायेन वाचाथ धनादिना च ।
सिषेविरे प्रेमपराः सुरीत्या त्यागेन भक्त्या परिपूर्यमाणाम् ॥ ९० ।

माया पतिं यो भजते मनुष्यः मायापि दासीव सुसेवते तम् ।
ख्यातश्चिरेणेह जनानुभूतः प्राचीनकालीन विधिर्यतोऽयम् ॥ ९१ ॥

सूर्याभिमुख्येन जनं प्रयान्तं वेगेन वा मन्दतया तथाहि ।
छायापि पश्चादनुयाति तस्य यथा तथा तद्गमनानुकूला ॥ ९२ ॥

गच्छन्त माकाशमणेः प्रतीपं कंचित्कदाचित्पुरुषं तथेयम् ।
छाया पुरो धावति खेदयन्ती यत्नैः शतैरप्यलभा भवन्ती ॥ ९३ ॥

उसकी ऐसी स्थिति देखकर सब लोग उसकी सेवा करने लगे। जो माया पति को भजता है माया उसकी दासी बन जाती है। सूर्य की ओर चलने से छाया अपने पीछे २ चलती है। और पीठ करके चलने से छाया आगे २ भागती है।

माया स्वभावोऽपि तथाविधो यं दृष्टो विवेकेन विवेकशीलैः ।
समाश्रितोऽयं भगवांस्ततश्च छायेवमायाविमुखैरभिज्ञैः ॥ ९४ ॥

कृष्णेन भक्ताय सुबोधितोऽयं भावोऽर्जुनायापि हितैषिणास्य ।
भक्त्या प्रसन्नेन पुरा कदाचिन् मायामनुष्येण जगद्धिताय ॥ ९५ ॥

संप्राप्ताः शरणं विहाय सकलं श्रद्धालवो मानवाः ।
ते यस्यात्र वरात्मकेन वचसा सिद्धार्थकाश्चाभवन् ॥
यस्येष्टः सततं कृपाजलनिधे र्लोकोपकारः परः ।
पायात्स प्रणतं दयानिधिरसौ मान्यो महात्मा सदा ॥ ९६ ॥

ऐसे ही माया भी भगवान् के भक्त के पीछे चलती है । इसी प्रकार का उपदेश भगवान् ने अर्जुन को दिया है । जिसकी मधुर वाणी से मानवों ने सफलता प्राप्त की । जिसने सदा परोपकार किया है वह महात्मा जी सदा रक्षा करें ।

इति दारिद्र्य विद्रावणं नामाष्टदशः सर्गः ।

---

# अथ व्याधि वारणो नामैकोनविंशति सर्गः ।

गोपाल दासोऽथ वसन् पृथिव्यां श्रेयोविधायी जगतोगतानाम् ।
नानोपकारेषु सतां प्रसक्तो मातेव जीवान् परिरक्षति स्म ॥ १ ॥

स्थानात्कियद्दूरनिवासशीलो ग्राम्यः कदाचिन्मनुजोऽस्य कश्चित् ।
एकांत देशे किल संस्थितस्य पादौ ववन्दे विहित प्रसादौ ॥ २ ॥

श्रद्धानुसारं च फलादिवस्तु शिष्टप्रणाल्या स समानयद्यत् ।
द्वाभ्यां कराभ्यां महता दरेण तस्याग्रतस्तद्विधिनार्पयत्सः ॥ ३ ॥

संकेत मात्रेण सताऽनुशिष्टः पुरः प्रदेशे समुपाविवेश ।
संतोषिणीं दृष्टिमतां जनानां तदाकृतिं प्रेमदृशाऽपिबच्च ॥ ४ ॥

श्री स्वामी जी ने उपकार करते हुए माता की तरह सब की रक्षा की एक दिन किसी ग्रामीण पुरुष ने आकर इनको प्रणाम किया । कुछ फल आदि वस्तु भी इनके आगे भेंट की । फिर स्वामी जी का संकेत पाकर उनके सामने बैठ गया ।

स्वामी ततः प्राह पुरःस्थितं तं हे भद्र सर्वं कुशलं तवास्ति ।
दूरात्कुतश्चित्समुपागतोऽसि प्रतीयसे श्रान्तकलेवरस्त्वम् ॥ ५ ॥

पूर्वं पिपासो पिब वारि शीतं क्षुत्क्षाम भुंक्ष्वान्नमिहानुकूलम् ।
सर्वं तदन्तर्निहितं सुवस्तु संकोच भावं प्रविहाय याहि ॥ ६ ॥

विश्राम मे त्याथ वदष्यिसित्वं प्राप्तोऽसि केनेह निमित्तकेन ।
या भावना कापि तवान्तरस्था सा सिद्धि मायास्यति सत्कृपातः ॥ ७ ॥

प्रसादकं तस्य बचो निशम्य ग्राम्यः प्रसादं परमं जगाम ।
तस्मै नमोवादबिधिं विधाय जगाद हृष्टो मधुरं वचोऽसौ ॥ ८ ॥
स्वामिन् पिपासा नहि बर्तते मे नास्ति क्षुधाचापि शरीरजाद्य ।
पुण्यौघलभ्या च मयापि लब्धा साक्षात्कृतिस्ते भगवन्निदानीम् ॥ ९ ॥

तव स्वामी ने उससे कुशल मंगल पूछा और कहा कि शीतल जल पी लो भोजन कर लो संकोच न करो भीतर जाओ । विश्राम करके फिर अपने आने का कारण बताना । उनके यह शब्द सुन कर वह ग्रामीण प्रसन्न हो कर बोला । हे स्वामिन् मुझे भूख-प्यास नहीं है ।

सत्यां कृपायां भवतो महात्मन् सर्वाङ्ग सौख्यं परिवर्तते मे ।
द्रव्यं सुवर्णादि गृहे मदीये पर्याप्तमस्तीति वदामि सत्यम् ॥ १० ॥
स्वास्थ्यैकबीजं मतिशुद्धि कारि सत्वांश संभूतिकरं तथाहि ।
प्राणायमानं खलु भारतस्य गेहे गवां मे बहुदुग्धमस्ति ॥ ११ ॥
भूमिर्निवासाय कृषिं विधातुं सम्बन्धि युक्तस्य सुशोभनामे ।
सस्यैः प्रपूर्णा हरितैर्जनानां नेत्रापहर्त्री महती ममास्ति ॥ १२ ॥
बीजस्य भूम्यां वपनाय नाथ नानात्मकस्यैव जनाश्रयस्य ।
कान्त्या शरीरस्य च दर्शनीया शक्तयावृताः मे वृषभालसन्ति ॥१३॥
भारं गृहादन्यदिशं विनेतुं दूरात्समानेतु मथेह शक्ताः ।
मार्गस्य मानं स्वपदैर्विधातुं रक्ता महोष्ट्रा बहवोलसन्ति ॥ १४ ॥

आप की दया से मुझे कुशल है मेरे पास बहुत धन है । मेरे घर में गौओं का दूध भी बहुत है जो कि सत्व जनक है । निवास तथा खेती वास्ते मेरे पास भूमि भी बहुत है । खेती करने के लिये मेरे पास बलवान् बैल भी हैं । भार इधर उधर ले जाने वास्ते मेरे पास ऊंठ भी है ।

गोधूम मुख्यान्नभरेण पूर्णा स्वामिन्मदीयास्ति निवासभूमिः ।
कालेन गेहेऽथिथिवर्ग माप्तं समर्प्य भुञ्जे परिवार संगम् ॥ १५ ॥
ग्रामेस्थितिर्मेऽस्ति वरेण्य यस्मिन् तत्रास्म्यहं मान्यतमो जनानाम् ।
पश्यन्ति सत्कार दृशा दयालो सर्वे सदाग्रामनिवासिनोमाम् ॥ १६ ॥
द्वारेऽपि भूपस्य गतिर्मदीया स्वातंत्र्यरूपेण सदास्ति सिद्धा ।
विलोक्य चेतः प्रगतिं मदीयां कुर्वन्ति कार्यं किल राजकीयाः ॥ १७ ॥
तत्वावबोधान्वित मानसाश्च लोकोपकारैक विधेयमुख्याः ।
क्षमा दया सत्व विशुद्धिमन्तो गृहं समायान्ति ममापि सन्तः ॥ १८ ॥

सेवां सतां गेहसमागतानां मुदा करोम्येव सदा सुभक्तया ।
संतोषितेभ्यश्च शृणोमि रम्यां शास्त्रीयवार्तां शरणं गतोऽहम् ।। १९ ।।

मेरे घर में भोजन वास्ते अतिथि सेवा वास्ते अन्न भी है । और अपने गांव में सभी लोग मेरा बड़ा मान करते हैं । राजदरबार तक भी मेरी गति है, और आने वाले साधु सन्तों की सेवा भी मैं करता हूं । और फिर भक्ति पूर्वक मैं शास्त्रों की वार्ता भी सुनता हूं ।

साकाररूपस्य परेश्वरस्य गेहे प्रतिष्ठाप्य तथा सुमूर्तीः ।
भक्त्या यथायोग्यतया चनित्यं धूपादिनाऽहं परिपूजयामि ।। २० ।।
पद्धं तथा स्वादुतरं वरान्नं महानसे सूदवरैः प्रणीतम् ।
समर्प्य देवाय सनातनाय समाददे तस्य ततः प्रसादम् ।। २१ ।।
एवं प्रकारेण जगद्वरेण्य दशा परानन्द मयी ममास्ति ।
हेतुस्तु तत्रापि दयादृगास्ते शुद्धात्मनस्ते यतिवर्य्यं जाने ।। २२ ।।
श्रेयोऽन्वितस्यापि तु सर्वथैवं कीर्त्यादिगन्तं चरतस्तथैव ।
दोषो महाकंटक तुल्यतीव्रो व्याधिर्महाखेद करो ममैकः ।। २३ ।।
शुद्धस्य शुभ्रांशुसमावृतस्य सन्तोष हेतोर्निज दर्शनेन ः
पूर्णस्य चन्द्रस्य यथा कलंको दोषस्तथा नाथ ममापि विद्धि ।।२४।।

भगवान् की प्रतिमा घर में रख कर मैं पूजा भी करता हूं । भोजन बनवा कर भोग लगा कर मैं बाद में स्वयं खाता हूं । इस प्रकार मेरा जीवन सुन्दर है यह सब आपकी कृपा है । सब प्रकार का सुख होने पर भी एक महा दुःख है । जैसे सुन्दर चांद में कलंक हैं वैसे ही मुझे भयानक दुःख है ।

तस्यापनोदं च समीहमानः पादौ त्वदीयौ भगवन् प्रपन्नः ।
वात्सल्य भावावृतमानसस्त्वं दासस्य तद्दोषमपाकुरुष्व ।। २५ ।।
वर्षाण्यतीतानि तु पंच पूज्य धर्म्यं गृहस्थाश्रममागतस्य ।
स्वामिन्नमे सन्तति रस्ति तेन चिन्तातुरोऽस्म्येष सुखावृतोपि ।। २६ ।।
भार्या मदीया मधुर स्वभावा साध्वी सदाचार विचार युक्ता ।
दैवाद्गृहीतास्ति महाग्रहेण क्रूरेणतस्माद्व्यथितं मनो मे ।। २७ ।।
गेहस्यं कार्यंसुखं वहन्ती मूर्छाम कस्मात्तु कदाचिदेति ।
हास्यं चिरं वाथ विनापि हेतु मेकाकिनीयं कुरुतेऽवशैव ।। २८ ।।
चेष्टान्तरा सन्ति तथा ह्यनेकाः सर्वाः कथं ताः कथयामिनाथ ।
मोक्षस्ततो येन भवेद्गुरोऽस्याः तस्मिन् विधौ यत्नमुपादिशत्वम् ।।२९।।

इस दुःख को मिटाने वास्ते मैं आपकी शरण में आया हूं । गृहस्थ आश्रम में मुझे पांच साल होगए, पर सन्तान नहीं हुई, मेरी भार्या सुन्दर है परन्तु किसी ग्राह से पकड़ी हुई है। घर का काम करते २ अचानक मूर्छा दशा में आ जाती है । कभी हसती है कभी रोती है, आप इस दुःख से मुक्त करें ।

सम्बन्धिनः कस्यचिदद्य गेहे संस्थाप्य तां त्वांतु समागतोऽस्मि ।
आख्याहि कर्तव्यमतः परं किं कृपानिधे मां परिबोधयस्व ॥ ३० ॥
स्वामी ततस्तं निजगाद हृष्टः तामाश्रमेऽत्रैव समानयेति ।
पश्यामि तां भूतगृहीत देहां चेष्टाश्च तस्या विविधा स्तथाहि ॥ ३१ ॥
संप्रेरितस्तेन महात्मना सः सन्तं नमस्कृत्य जगाम गेहम् ।
भार्यामवादीच्च यथानुपूर्वं चर्चां सता तेन समं प्रजाताम् ॥ ३२ ॥
ततः समानीय तु सुन्दरीं तां तस्याश्रमं प्राप महात्मनोऽयम् ।
ग्रामाकियद्दूर विराजमानं चेतः प्रकाशोद्भवनक हेतुम् ॥ ३३ ॥
आवेश काले विनिवेद्य तस्याश्चिकित्सनार्थं तु महामनाः सः ।
श्री स्वामिनादिष्ट कुटीरमध्ये युक्तस्तयाऽसौ धनिकोऽध्युवास ॥ ३४ ॥

किसी सम्बन्धि के घर में उसको बिठा कर आप के पास आया हूं । तब स्वामी जी ने कहा कि उसे यहां आश्रम में ले आओ । इसके बाद उसने जाकर यह सारी बात अपनी भार्या से कही । उसके बाद उसको आश्रम में महात्मा जी के पास ले आया । और स्वामी जी के बताए गए कमरे में निवास रख लिया ।

पूर्वं तु गृह्णाति यदाग्रहोऽसौ नित्यं महाक्रूरगतिः सतींताम् ।
वेला व्यतीता दिवसद्वये सा जग्राह तां नैव ग्रहोऽतिदुष्टः ॥ ३५ ॥
श्रेष्ठी ततो विस्मित मानसोऽसौ तस्या दशां ता मवलोक्य सम्यक् ।
ग्रहो न गृह्णाति महात्मनोस्य प्राप्तां कुटीरेहि विचित्रमेतत् ॥ ३६ ॥
सत्ताश्रमस्यास्ति किमस्ति वान्यत् बीजं तदन्यद्विदितं न मेस्ति ।
ग्रहेणयाविश्यत नित्यमेषा जाने न कस्मादधुना गृहीता ॥ ३७ ॥
वार्तामिमां तस्य मुखान्निशम्य प्रत्युत्तरं प्राह तदा महात्मा ।
ग्रामे गृहे कस्यचिदेव नेया विज्ञास्यतेऽज्ञातमिदं यदस्ति ॥ ३८ ॥
तत्राविशेच्चेत्तु ग्रहो यदानीं भार्या तवेमां किल दुःखदायी ।
त्वया तदानीं परिसूचनीयः द्रक्ष्यामि तथैव समेत्य तूर्णम् ॥ ३९ ॥

दो दिन बीत गए पर उस नारी को ग्राह का आवेश न हुआ । तब वह ग्रामीण हैरान हुआ कि यहां पर आवेश क्यों नहीं हुआ । यह या तो आश्रम का

प्रभाव है या कोई और कारण है। तब सन्त जी ने कहा कि गांव में जाकर ठहरो, पता चल जावेगा। यदि वहां पर इसे आवेश हो तो जल्दी सूचना दे देना।

श्री स्वामिनो वाक्यमिदं निशम्य ग्रामेऽथ गत्वा धनिको विवेकी ।
वासं चकाराथ तया युवत्या तदाज्ञयासौ दिनयापनाय ॥ ४० ॥

तत्राग्रहीत्तां विषमो ग्रहोऽसौ भग्नेव शाखा पतिता ततः सा ।
त्वरा समागत्य पतिस्तु तस्या निवेदयामास महात्मने तत् ॥ ४१ ॥

पादौ तदा पादुकयोर्निधाय स्वामी प्रयातः खलु तत्समीपम् ।
आलोकयामास शवायमानां भ्रष्टां पृथिव्यां च विकीर्णकेशाम् ॥ ४२ ॥

धूपस्य धूम्रं पुरतो निधाय हस्तेन संस्थाप्य पुरः प्रदेशे ।
पप्रच्छ कस्त्वं कुत आगतोऽसि भार्या सुशीलास्य कुतो गृहीता ॥ ४३ ॥
हे दुष्ट योने परदुःख कारिन् पापं प्रकुर्वन्नहि लज्जसे किम् ।
व्यथा परेषां किल कुर्वतस्ते लाभः कएवास्ति समीरयस्व ॥ ४४ ॥

तब उस धनी ने गांव में जाकर उसके साथ २ निवास किया। वहां आवेश हो गया और टूटी हुई शाखा की तरह गिर पड़ी। उसके पति ने जल्दी जाकर महात्मा जी को सूचना दी। स्वामी जी ने जाकर मृतक की तरह पड़े हुए उसे देखा। धूप जलाकर पूछा, अरे दुष्ट तुम कौन हो इसे क्यों पकड़ा है।

तेनैव मुक्तश्च तथा गृहीतः प्रेतोऽति रुष्टः प्रतिवाक्यमाह ।
स्वेच्छानुसारं हि मया गृहीता प्रश्नेन किं तेऽत्र परस्य कृत्ये ॥ ४५ ॥
पूर्वं मयैवं बहुशो बहुत्र क्रूरेण सन्तोनिहता पृथिव्याम् ।
त्वं स्वस्य कल्याणमभीहसे चेत् वार्तामिमांगच्छ विहायशीघ्रम् ॥ ४६ ॥
स्वामी ततस्तं निजगाद वाक्यं व्यर्थं प्रलापं कुरुषे कथं भोः ।
मुक्त्वा त्व मेनां नितरा मपेहि दण्डं न चेदेष्यसि पापकारिन् ॥ ४७ ॥

श्रुत्वा महाक्रूर हठी ग्रहोऽसौ तस्मैदुरात्मा पुनरेवमाह ।
न कस्यचिच्छक्तिरिहास्ति लोके योदण्डयेन्मांविनयेद्बहिर्वा ॥ ४८ ॥
का विद्यते ते वद शक्तिरद्य मानेन यस्याः कटुतां करोषि ।
आकाश पुष्पाणि चिनोषि साधो दण्डं विधातुं मयि वांछसीति ॥ ४९ ॥

तब वह प्रेत बोला मेरी मौज है तुम क्यों दखल देते हो। मैंने कई सन्त मार डाले हैं मेरे साथ बात न करो चले जाओ। तब स्वामी जी ने कहा कि बको न इसे छोड़ कर भाग जाओ! तब दुष्ट ग्राह बोला कि कौन मुझे यहां से दूर कर सकता है। तुम जो ऐसी बात कहते हो किस बल से मुझे हटाते हो।

मुष्टिर्दृढेयं च मया कृतास्ति नेत्रे स्वकीये च निमीलितेस्तः ।
शक्त्या त्व मुन्मीलय नेत्र युग्मं मुष्टिं दृढां चापि विमोचयेमाम् ॥ ५० ॥

इत्थं ग्रहो गर्ववचोऽभिधाय नेत्र द्वयं स्वं निमिमील दुष्टः ।
मुष्टिं बनेनाथ दृढां विधाय स्तब्धो महानाग इवावतस्थौ ॥ ५१ ॥

बभूव कौतूहल मेतदत्र द्रष्टुं जनानां गृह मागतानाम् ।
विस्फार्य नेत्रेऽचलपाणिपादा विस्मापकं दृश्यमिदं मिदं पपुस्ते ॥ ५२ ॥

सर्वे ब्रुवन्ति स्म परस्परं ते नास्माभिरेवं हि पुरा कदाचित् ।
दृष्टं महाविस्मय कारि दृश्यं पश्याम किंचात्र भविष्यतीति ॥ ५३ ॥

श्री स्वामिनापीह कृतं ततः किं मुष्टिंगृहीता निहिता शिलायाम् ।
पाषाण मय्यां च महादृढ़ायां प्रेतेन तेनाति दृढी कृता सा ॥ ५४ ॥

प्रेत ने अपनी मुट्ठी बांध कर आंखें मून्द कर कहा कि आप खुला दें, यह बात कह कर प्रेत मुट्ठी बांध आंखें मून्द नाग की तरह बैठ गया। यह एक विचित्र कौतुक बन गया। सब लोग कहने लगे कि ऐसा दृश्य हम ने कभी नहीं देखा। देखें क्या होगा स्वामी जी ने शिला पर मुट्ठी को रखा।

लोहं समुत्थाप्य मण प्रमाणं चिक्षेप तस्यां महता बलेन ।
उन्मीलयामास सचीत्कृतेन नेत्रे स्वमुष्टिं च मुमोचशीघ्रम् ॥ ५५ ॥

पादाब्जयो स्तस्य शिरो विनम्य नम्रो बचः प्राह शृणुष्व नाथ ।
सन्तो मया वै जगती तलेऽस्मिन् दृष्टा ह्यनेके न भवादृशस्तु ॥ ५६ ॥

सोढुं न शक्तो भवदीय दण्डं वदामि यत्पृच्छसि तत्समग्रम् ।
आज्ञानुसारी भवतोऽस्मि जातः भीतः पुनर्नैवहि दण्डनीयः ॥ ५७ ॥

वंश्योऽस्मि पूर्वो मनुजोऽस्यकश्चित् दोषाद्गतः प्रेतगतिं स्वकीयात् ।
तस्यां व्यथा यास्ति मयानुभूता वाचा न वाच्या भगवन्मया सा ॥५८॥

गते कुयोनिं मयि कर्म दोषात् वंश्यैर्मदर्थं च कृतं न किंचित् ।
अग्राहिषं सोऽस्य वधूं प्रकोपात् सत्यं पुरस्ते कथयामि धीमन् ॥ ५९ ॥

फिर मन भर लोहा उठा कर जोर से उस पर दे मारा। प्रेत ने चीत्कार सहित मुट्ठी वा आंखे खोल दीं। और बोला कि आप जैसा सन्त मैंने नहीं देखा। मैं आपकी आज्ञा पर चलूंगा। मैं इस की वंश का हूं पाप से प्रेत बना हूँ। दुःखी हूँ। इन लोगों ने कुछ मेरे लिये किया नहीं तभी मैंने इसे पकड़ा है।

पूर्वं स्वशक्त्या परिपीड़ितेयं मयाद्यपर्यन्त मनेकवारम् ।
मत्तो महाक्रूर ग्रहाद्विमुक्ता पुण्यौघलभ्याद्भवतः कृपालो ॥ ६० ॥

पापं गृहेतिस्य भयंकरैमें मोक्षं महात्मन् कतमा करोतु ।
स्वामिन् चिरात् प्रेतगतिं गतोऽहं रक्षाकरं कंचननैव लेभे ॥ ६१ ॥

दृष्ट्वाद्य पादौ भवतोऽति भाग्यात् सम्भावयाम्यद्य हृदि स्वीकीये ।
मोक्षाभिलाषा चिरकालिकीयं प्रेतत्वतो यास्यतिसिद्धिमिष्टाम् ॥ ६२ ॥

एतावदुक्त्वा विरराम सोऽयं पदाब्जयो स्तस्य चिराय लग्नः ।
मोक्षं किल प्रेत गतेरभीप्सन् तस्माज्जगत्पूज्य महानुभावात् ॥ ६३ ॥

तुष्टिस्तदा द्रष्टृगणस्य जाता संपश्यतस्तद्रमणीय दृश्यम् ।
श्रद्धाऽभवद्या सति तत्र तेषां शक्या न वाचा प्रतिपत्तु मेषा ॥ ६४ ॥

मैंने इसे बहुत पीड़ा दी है परन्तु आज आप ने मुक्त किया। हे स्वामी जी! मैं भी पापी हूँ मेरा मोक्ष कौन करेगा। आशा है कि आप मेरा भी कल्याण अवश्य करेंगे। इतना कह कर उस प्रेत ने मौन कर लिया। ऐसा दृश्य देख लोग बड़े प्रसन्न हुए और सन्त जी की महिमा करने लगे।

सर्वे तदान्तः करणेषु लोका तत्पादसंसक्त विशुद्धभावाः ।
ते धन्यवादं शतशः स्वरेणाऽभिन्नेन साधोर्जगदुस्तदानीम् ॥ ६५ ॥

स्वामी ग्रहं प्राह श्रृणुष्व सौम्य स्वस्थो भवेमां विजहीहभीतिम् ।
मोक्ताऽस्ति योऽस्याः कमलाननायाः मोक्षं तवाप्येष स एव कर्ता ॥ ६६ ॥

शुद्धं जलं हस्तगतं ततश्च मन्त्रेण पूतं स विधायतावत् ।
तस्याः शरीरे परिसिंचति स्म तत्सिंचनादेव बभूव पूतः ॥ ६७ ॥

उच्चैः स्वरेणाथ जगर्जमुक्तो दिव्यांगतिं प्राप्य तदा कृतार्थः ।
धन्योऽसि धन्योऽसि दयालयोऽसि स्वामिन् शरण्योसि जगद्गतानाम् ॥ ६८ ॥

भुक्त्वा चिरं दुःखमयी मवस्थां भाग्यात्त्वयाहं परिमोचितोऽस्मि ।
धृत्वा हि दिब्यां तनु मद्य रम्यां भवत्कृपातः स्वरितो व्रजामि ॥ ६९ ॥

सभी लोगों ने बार २ महात्मा जी का धन्यवाद किया। स्वामी जी ने प्रेत से कहा चिन्ता न करो तेरा मोक्ष भी अवश्य होगा। पानी हाथ में ले पाठ कर उस प्रेत पर सन्त जी ने सींच दिया। पवित्र होकर ऊंचे स्वर से बोला, स्वामिन् धन्य हो धन्य हो, मैं प्रेत योनि त्याग कर देव योनि पाकर स्वर्ग में जा रहा हूं।

सन्तो न चेत्स्युर्भुवि शक्तिमन्तः स्यात्तारणाज्ञानिगणस्य कस्मात् ।
हे लोक कल्याणविधानदक्षे त्यावेद्य सोऽयं गगनं जगाम ॥ ७० ॥

मूर्छां ततस्तां तु विहाय सद्यः स्वस्थोत्थिता सा रमणीतदानीम् ।
दृष्ट्वा समूहं पुरतो जनानां लज्जावृता शीलवती बभूव ॥ ७१ ॥

मुक्ता ग्रहादद्य गता प्रसादं क्षरोन कांतातितरां बभूव ।
दग्धा सहस्त्रांशुमयूषतापात् नवाम्बुलाभेन लतेव हृष्टा ॥ ७२ ॥

पादाब्ज युग्मं च महात्मनोऽतः हस्ताब्जयुग्मेन परिस्पृशन्ती ।
याता परां भक्तिगतिं तदानीं नम्रा नमोवादततिं चकार ॥ ७३ ॥

मूढ़ाबलाऽहं किमु वर्णयामि स्वामिन् गुणांस्ते गुणिनां वरेण्य ।
भ्रष्टां महादुःखमयेऽत्र गर्ते भवान् कृपालुः किल मामरक्षीत् ॥ ७४ ॥

यदि सन्त नहीं तो पापी कैसे तरें ऐसा कह कर आकाश को गया । वह सुन्दरी भी मूर्च्छा त्याग कर स्वस्थ होकर बैठ गई । आज यह देवी प्रसन्न थी जैसे पानी मिलने पर बेल हरी होती है । सन्त जी के चरणों का स्पर्श करके सादर प्रणाम किया । फिर बोली मैं तो मूर्ख हूं आपकी क्या प्रशंसा करूं मुझे बचाया ।

एवं विधां सा सुविचारशीला वाक्य प्रणालीं स्वकृतज्ञतायाः ।
तस्याग्रतो बुद्धिमती निवेद्य तूष्णीं स्थिता चन्द्रमुखी प्रसन्ना ॥ ७५ ॥

तस्याः पतिः पूर्णमनोरथोऽसौ समस्पृशत् पादयुगं मुदास्य ।
वाण्या यथायोग्यतया स्तुतिं च महात्मनोऽसौ सुतरां चकार ॥ ७६ ॥

श्रुतं यथा यत्खलुवृद्धवाक्यात् सन्तोहि दीनान् परितारयन्ति ।
सत्यं तदेवाद्य मयानुभूतं स्वामिन् भवन्तं शरणं समेत्य ॥ ७७ ॥

दुःखापहर्त्री सुखदायिनीयं मनोऽन्धकारस्य निवारिणी वा ।
चेतः प्रसादस्य विसारिणी मे सत्संगतिः भाग्य वशेन लब्धा ॥ ७८ ॥

हे नाथ पापौघ विनाशकारिन् प्रेतत्वयुक्तः खलु पूर्वजो मे ।
मुक्तस्त्वयाऽयं करुणाकरेण भार्या तथा मेऽद्य विमोचितेयम् ॥ ८६ ॥

इन शब्दों से अपना भाव बता कर वह वहां चुप हो बैठ गई इनके पति ने भी महात्मा जी के चरणों का स्पर्श किया । फिर बोला कि सन्त लोगों को तारते हैं यह बात सुनी थी आज अनुभव कर लिया, भगवान् की दया से आपकी शरण मिली । हे दयालो आप ने मेरे पूर्वज को और पत्नी को मुक्त किया ।

पादाब्जयोस्ते विनिवेदयामि भावान्तरं यन्मनसि स्थितं मे ।
दासस्य तत्त्वं सफली कुरुष्व मनो यतोमे भवदाश्रितं नु ॥ ८० ॥

शिष्यत्व भावेन विलोकयन्मां मन्त्रं जगद्बन्धहरं प्रदेहि ।
एकाग्र चेता हि जपन्नहं यं प्राप्स्यामि शांति परमां दयालो ॥ ८१ ॥

एषाभिलाषा भगवन्मदीया प्रपूरणीया भवता दयालो ।
भवान् हि संसार महासमुद्रात् पारंहिनेतुं वरकर्णधारः ॥ ८२ ॥

स्वामी निशम्याथ वचस्तदीयं तस्य स्पृहां पूरयितुं प्रवृत्तः ।
जगाद कल्याणकरी मिमां मे वाचं सदा शान्तमना जुषष्व ॥ ८३ ॥
शान्तिर्भवेद्येन परास्य जन्तोः संसार मोहान्धतमोऽन्तकर्त्री ।
तन्मन्त्रजापं सततं कुरुष्व ब्रवीमि ते सावहितः शृणुष्व ॥ ८४ ॥

फिर वह बोला कि मैं दास हूं कृपा करो मेरी भावना पूरी करो। मुझे शिष्य बना लो, मन्त्र दे दो मैं जिसे जपा करूं। संसार के सागर में पड़े हुए के आप ही कर्णधार हैं। स्वामी जी ने यह बात सुन कर मंगलमयी वाणी से कहा। परम शान्ति देने वाला मन्त्र में आपको देता हूँ।

सर्वोतमं मन्त्र मिमं सुबुद्ध्या कल्याणकारि प्रभु रामनाम ।
श्रद्धानुसारं समयानुसारं भूत्वा शुचिस्त्वं सततं भजस्व ॥ ८५ ॥
गेहं व्रज स्वं च सुखेन भद्र स्वभार्यया सार्धं मिहावस त्वम् ।
धर्मे सदा वां मतिरस्तु लग्ना प्रीति र्द्वयोः क्षेमकरो च भूयात् ॥ ८६ ॥
आज्ञानुसारी भवतोरनन्तां वंशस्य कीर्ति विमलां विधाता ।
योग्यो गुणानां निलयः सुपुत्रो भविष्यतीति प्रमुखोजनानाम् ॥ ८७ ॥
हृष्टौ तदा तस्य वचोऽमृतेन पादौ नमस्कृत्य मुहुर्मुहुश्च ।
पूर्णस्पृहौ ग्रामगृहं प्रयातौ नीतंवयः शान्ति मयं च ताभ्याम् ॥ ८८ ॥

यतीशोक्ति रम्यां मधुरतर पीयूष सदृशीम् ।
निपीयान्तः शान्तौ परममुदितौ तावभवताम् ॥
वयो नव्यं भव्यं सुखमय मिमौ चान्व भवताम् ।
अनंतान् गोपालोपकृति निकरान् चाप्यवदताम् ॥ ८९ ॥

इस मन्त्र को निरन्तर जपते रहना राम नाम ही महा मन्त्र है। घर जाओ पत्नी के साथ २ सुख से जीवन बितावो। आप दोनों में प्रेम बना रहेगा और वंश को प्रकाश देने वाला पुत्र भी होगा। तब वे दोनों वहां से गांव में गए, वे दोनों कृतज्ञ हो कर सदा स्वामी जी के गीत गाते थे।

इति व्याधि वारणो नामैकोनविंशति सर्गः।

---

# अथ पार्षददर्शनं नाम विंशति सर्गः।

शिष्येष्वथास्य गणनां प्रथमा मुपेतो विद्वानभूत् सकलकार्य कलाप्रवीणः ।
दासस्तु रामचरणादिरिति प्रसिद्धो लोकेषु भावुकतया परिभावितात्मा ॥१॥

शिष्यत्व संयोगगतेन तेन सेवा परं स्वं विहितं शरीरम् ।
गुरुं तथा प्रेमपरः सिषेवे भक्तः परेशं हि यथा विरक्तः ॥ २ ॥
गो सेवनैः कर्षणदर्शनैश्च दूरागतानां वरिवस्यया च ।
शास्त्रप्रचारैर्भगवत्प्रतीक पूजादिना चैष गुरुं सिषेवे ॥ ३ ॥
सर्वेषु विस्तारमगच्छदस्य कार्येषु बुद्धि र्निरतस्य सत्वे ।
खस्थस्य भानोः परिदीप्यमानं ज्योतिर्यथा सर्वककुप्सुभासम् ॥ ४ ॥

श्री स्वा० जी के मुख्य शिष्य श्री राम चरण दास जी प्रसिद्ध थे शिष्य होने के साथ २ जिन्होंने अपना शरीर सेवा में लगा दिया था गुरु जी की सेवा ऐसे की जैसे भक्त भगवान् की करता है गो सेवा खेत का कार्य अभ्यागत का सत्कार भगवत्पूजा तथा शास्त्र प्रचार का कार्य गुरु जी की आज्ञा से करते रहे आकाश में सूर्य की ज्योति की भान्ति इनकी बुद्धि सब कार्यों में व्याप्त थी।

संसारजानां किल देहमुक्ति रावश्यकीयं विहिता प्रकृत्या ।
लंघ्या न वै केनचिदस्तिलोके रीतीरमेशेन विनिर्मिता या ॥ ५ ॥
पूर्वोक्त संकेत मयीं प्रणालीं प्राप्तस्य धर्मं परिरक्षतोऽस्य ।
सेवा प्रसक्तस्य गुरोरकस्मात् वेलावसानस्य समाजगाम ॥ ६ ॥
आकस्मिकं हेतु मुपैति कंचित् प्राप्तेऽवकाशे गमनस्य देही ।
व्याधिज्वरं वा पतनं गिरेश्च समुद्रगम्भीर जलावपातम् ॥ ७ ॥

संसार में आने वालों का शरीर त्याग तो आवश्यक है। यह नियम किसी से टाला नहीं जा सकता इसी नियम के कारण श्री राम चरण दास जी के गुरु सेवा में लवलीन होते हुए अवसान का समय आ गया मृत्यु के समय कोई कारण अवश्य बनता है ज्वर हो पतन हो व जल में गिरना इसी प्रकार से कोई हेतु बनता है।

एवं ज्वरेणाथ गृहीतदेहः प्रयाणवेलां हृदये विजानन् ।
विविक्त माश्रित्य सुखोपविष्टं गत्वा गुरुं स्वं प्रणनाम नम्रः ॥ ८ ॥
गुरो शरीरं व्यथते ममाद्य ग्रस्तं ज्वरेणाति भयंकरेण ।
आज्ञापयाहं शयनं व्रजामि मां बाधते तीव्रतरा सुषुप्सा ॥ ९ ॥
श्रुत्वेदृशीं नम्रसुशिष्य वाणीं ज्ञात्वा तथा वास्तविकं रहस्यम् ।
आज्ञापयामास गुरुर्महात्मा श्रान्तोऽसि विश्रामपदं प्रयाहि ॥ १० ॥
गुरो रनुज्ञां मनु पालयन् स विश्राम भूमिं सहसा जगाम ।
विश्वोद्भवस्थानविनाश हेतुं सस्मार संरुद्धमनाः परेशम् ॥ ११ ॥

इस समय ज्वर से पीड़ित होकर वह एकांत बैठे हुए गुरु जी के पास गए प्रणाम किया तथा कहा कि गुरु जी देह में ज्वर से पीड़ा है विश्राम के लिये आज्ञा चाहता हूं ऐसा सुनकर तथा वास्तव भाव को जानकर उन्होंने आज्ञा दी कि जाकर आराम करो वह भी आकर भगवान् का स्मरण करने लगे ।

बालोऽष्टवर्षीयतया प्रतीतः, क्रीड़ां विहायात्र समाजगाम ।
स्वाध्यायकार्ये च निवेशितोऽयं श्री रामदासेति शुभाभिधानः ॥ १२ ॥

दृष्ट्वा तदा सोऽपि तमन्यथैव मोहंगतो नोबुबुधे कथंचित् ।
पार्श्वस्थितं वृद्ध महानुभावं प्रणम्य सम्बोध्य जगाद वाक्यम् ॥ १३ ॥

तूर्णं प्रभो मां परिबोधयस्व मनोयतो मेऽतितरांविषण्णम् ।
पप्रच्छ नायं किमु भाषते मां प्रेम्णा यथापूर्वमुदार भावः ॥ १४ ॥

मिष्टान्नपानादिकमद्यवस्तु मह्यं स्वहस्तेन कथं न दत्ते ।
विलोकयन्तं न विलोकयत्या मील्याक्षिणी चिंतयतीव किंचित् ॥ १५ ॥

आठ वर्ष का बालक जो इन से स्वाध्याय करता था क्रीड़ाक्षेत्र से वहां आया राम दास जिस का नाम है उनकी विकल दशा देखकर विकल हो गया। पास में बैठे वृद्ध गुरु जी से कहने लगा कि महाराज जी आज यह पहले की तरह क्यों नहीं बोलते कुछ भोग आदि मुझे क्यों नहीं देते मुझे आज देखते भी नहीं क्या कारण है आप मुझे समझावो मैं बहुत व्याकुल हूं।

हस्तेन शीर्षे प्रतिसार्य केशान् दीनार्ति हारी प्रणतेषु साधुः ।
सस्नेह वात्सल्य मिमं तदेदं वृद्धो महात्मा वचनं जगाद ॥ १६ ॥

आच्छादनानीह यथा मनुष्यो जीर्णानिहित्वाथ नवानिधत्ते ।
शरीर रक्षाविधिमाश्रयन्सः परम्पराप्राप्तप्रथानुसारम् ॥ १७ ॥

तथा शरीरी धृतकर्मबन्धः तज्जन्यनानाफल भोगहेतोः ।
हित्वा शरीराणि पुरातनानि धत्ते नवीनानि गुणात्मकानि ॥ १८ ॥

विराजते दृष्टिमतांहि सौम्य संसारिणो वृतमिदं पुरस्तात् ।
देहात्मबुद्धिं सततं गतानां संसार भोगेषु तथा रतानाम् ॥ १९ ॥

बालक के सिर पर हाथ फेरते हुए स्नेहपूर्वक वृद्ध महात्मा जी ने कहा कि जैसे पुराने कपड़े त्याग कर मनुष्य नए पहिरता है शरीर रक्षा के कारण वैसे ही जीवात्मा भी कर्म के संसार में रहता हुआ फल भोग के कारण पुराने शरीर का त्याग करके नए शरीर धारण करता है इस बात को विवेकी लोक जानते हैं कि जब तक देह में आत्मा बुद्धि है तब तक यह क्रम चलता रहता है।

स्वर्गे सुरत्वं परियान्ति केचित् केचित्तथान्यां गतिमाप्नुवन्ति ।
अध्यास भावेन भृशं भ्रमन्ति नानाविधे भूतमये प्रपंचे ॥ २० ॥
धाराप्रवाहेण सृतौ सरन्तः भाग्यात्कथंचित्स्वगतिं लभन्ते ।
महात्मनां तत्वदृशां गृहीत्वा शुभोपदेशं भवताप नाशम् ॥ २१ ॥
देहात्मतत्वस्य विवेकिनोऽन्ये संत्यक्त पंचात्मकसत्यभावाः ।
ते पार्षदैर्यान्ति सुखात्मकंतं साकेतलोकं भवताप हीनम् ॥ २२ ॥
नागः स्वकं कंचुक मत्रहित्वा संगच्छतेऽभीष्टदिशं सुखेन ।
त्यक्त्वा तथा भौतिक पिंडमेते गच्छन्त्यनावृतिपदं प्रवीणाः ॥ २३ ॥

कई तो देवलोक में जाते हैं कई और योनि में जाते हैं अध्यास के कारण यह चक्र चलता रहता है कभी भाग्य वश किसी ज्ञानी संत का मेल होने पर उपदेश द्वारा अपने आप का सही ज्ञान होता है जिन्हें देह आत्मा का विवेक होता है वे लोग पार्षदों के द्वारा साकेत लोक में वास करते हैं सर्प कंचुक की भांति देह त्याग कर वे लोग मुक्त होते हैं ।

विद्यागुरुस्तेऽपि तनुं विहाय साकेतलोकं प्रयियासुरस्ति ।
तत्पार्षदैस्तत्र सुखेन नीतः श्रेयः परंयास्यति वागतीतम् ॥ २४ ॥
एतत्समाकर्ण्य जगाद बालो मां पार्षदाः किं न नयन्ति तत्र ।
गच्छामि तिष्ठामि सहैव येन सदा स कस्माद्विजहाति माद्य ॥ २५ ॥
निशम्य बालेन समीरितां तां वाचं महात्मा पुनरेवमूचे ।
आज्ञां परेशस्य विना न कश्चित् साकेतलोकं प्रतियाति लोकः ॥ २६ ॥
प्रयाणवेलां नियतांविधात्रा नातिक्रमेन्नून मयेत तत्र ।
विनातु तां नैव मनाक् चलेत्तत् भजस्व शान्तिं सुचिरं च जीव ॥ २७ ॥

तुम्हारा विद्या गुरु भी आज परलोक जाना चाहता है पार्षदों के द्वारा साकेत लोक में जावेगे अपूर्व आनंद वहां प्राप्त करेंगे इतना सुनकर बालक बोला कि पार्षद मुझे वहां क्यों नहीं ले जाते जिस के पास मैं सदा रहता हूं वह मुझे त्याग कर क्यों जाते हैं वृद्ध महात्मा जी ने पुनः कहा कि जो समय भगवान् ने नियत किया है उसी समय जाना होता है उस नियम का भंग नहीं किया जा सकता इस लिये तुम शान्ति करो और चिर तक जीवो ।

वृद्धेन विज्ञानवता तदुक्तं गम्भीरभावं वचनं निशम्य ।
बालोऽनुसृत्य स्ववयो विचारं पुनस्तमेवेदमुवाच वाक्यम् ॥ २८ ॥
कासौ परेशो भगवन् वदत्वं यस्याज्ञयामुत्रजना प्रयान्ति ।
रामोऽस्ति किं तिष्ठति मन्दिरे यः किं वा ततोऽन्यः कृपयेरयस्व ॥२९॥

बालं ततः प्राह विचित्र बुद्धि वृद्धो महात्मा शृणु हे सुबुद्धे ।
तमेव रामं हृदयेऽवगच्छ कर्तारमप्यस्य तमेव विद्धि ॥ ३० ॥
स्रष्टा स्वशक्त्या च बिधाय सृष्टिं व्यापी स्वयं तत्र बभूव रामः ।
तत्सत्तया सत्यमिवावभाति दृश्यं न तत्वेनहि सत्यमेतत् ॥ ३१ ॥

वृद्ध गुरु जी के गूढ़ शब्द सुनकर बालक अपनी बुद्धि के अनुसार बोला वह आज्ञा करने वाला परेश कहां है यहीं मन्दिर में बैठा राम है या और वृद्ध महात्मा जी ने कहा कि यही राम है यही जगत का कर्ता है सृष्टि में व्यापक है उसी की सत्ता से यह जगत सत्य वत् प्रतीत होता है।

नाना विधस्यास्य पुरःस्थितस्य भवस्य हे भद्र गुणात्मकस्य ।
नित्यं सदानन्द मयं रमेशं मूलं विजानीहि वदामि सत्यम् ॥ ३२ ॥
सर्वान्तरस्थोऽस्ति स एव देवः सर्वान्तरात्मा सकलावभासी ।
लीलां तु संसार मयीं विधाय द्रष्टा स्वयं लोक विकार हीनः ॥ ३३ ॥
व्यापी परात्माऽपि कदाचिदत्र लीलां विधातुं निदधाति देहम् ।
साकाररूपः खलु मन्दिरेऽस्मिन् रामः स एवास्तिविराजमानः ॥ ३४ ॥
गोतीत देवो बिषयो दृशोन दृश्योऽखिलाभ्यन्तर वर्तमानः ।
अभ्यासतोऽध्यात्मिक तत्वविद्भिः योगीश्वरै श्चोपनिषच्छ्रुतीनाम् ॥ ३५ ॥

यह जो सुन्दर प्रकार का संसार दिखाई देता है इसका कारण नित्य सत् रूप राम ही है वह सबके भीतर रह कर सब का प्रकाशक है निर्लेप रह कर वह सब का साक्षी है कभी २ वही राम देह धारण करता है साकार बन कर विशेष लीला करता है वही राम मन्दिर में स्थित है इन्द्रिय के द्वारा उस का वास्तव ज्ञान नहीं होता उपनिषत् के द्वारा जन्य ज्ञान के द्वारा देखा जा सकता है।

साकार सेवा करणेन सौम्य वेदादिशास्त्रस्याध्ययनेन वा त्वम् ।
व्याप्तं प्रपंचे जगदीश्वरं तं कालेन संवेत्स्यसि रामरूपम् ॥ ३६ ॥
श्रुत्वाश्रुतं प्राक् वचनं तदीयं तुष्टस्तदासौ किल रामदासः ।
तूष्णीं स्थितस्तत्र विचिन्तयंस्तत् वाक्यं चिरेणेति जगाद तस्मै ॥३७॥
समीरिता मे भवता गुरोऽद्य ये पार्षदा योगिवरान् बिनेतुम् ।
साकेतलोकं परमं नियुक्ताः तांस्तद्विमानं न विलोकयामि ॥ ३८ ॥
आरुह्य किं तैश्च समं तथायं गन्ता परत्रेति न वेद्मि किंचित् ।
धर्मं स्वकीयं परिपालयन्तः ते पार्षदाः किं न दृशं स्पृशन्ति ॥ ३९ ॥

साकार की सेवा तथा वेद का अभ्यास करने से तुम्हें सही राम का रूप जानने में आवेगा ऐसा वचन सुनकर मन में संतुष्ट होकर विचार करके फिर वह कहने लगा कि महाराज जी वह पार्षद वह विमान कहां है किस पर बैठकर किस के साथ मेरे विद्या गुरु जी जावेंगे वे पार्षद क्यों नजर नहीं आते ।

बालोऽसि नालोकयसे ततस्तानित्याह वृद्धो मनसा प्रसीदन् ।
स्वात्मान मन्यांस्तु न दर्शयन्ति देवास्तमेकं मनुजं विहाय ॥ ४० ॥
बाल स्वभावेन पुनस्सआह न सन्ति देवा न विलोकिता चेत् ।
ते चेद्भवेयुः प्रतिलोकिता स्युः गुरो ततस्तान् परिदर्शयेर्माम् ॥ ४१ ॥
उत्कण्ठते मे हृदयं दयालो तद्दर्शनार्थं किमहं करोमि ।
शान्तिं न गच्छामि विनाद्य तेषां साक्षात्कृतिं सत्यवचो ममेदम् ॥ ४२ ॥
मनः प्रियं तस्य वचोनिशस्य बालस्य वृद्धोऽपि तदा महात्मा ।
हस्तेन संस्पृश्यशिरस्तदीयं पश्यागतांस्तान् शिशुकेच्यवोचत् ॥ ४३ ॥

महात्मा जी ने कहा कि तुम तो बालक हो उनके रूप को तो जाने वाले जन के बिना कोई नहीं देख सकता बालपने के कारण हठ से फिर कहने लगा कि पार्षद नहीं है यदि होते तो सामने नजर आते गुरु जो मेरे मन में बड़ी उत्कण्ठा है आप अवश्य दर्शन करावो इसके बिना मुझे शान्ति नहीं मिलेगी ऐसो बात सुनकर वृद्ध महाराज ने कहा कि लो देखो यह देवता तुम्हारे सामने हैं ।

तत्प्रेरितो दिव्यमतिः स बालोऽदृष्टान् पुरोऽपश्यदभीष्टदेवान् ।
पश्यामि नाथेति जगाद हृष्टः श्रृण्वत्सु सर्वेषु जनेषु तत्र ॥ ४४ ॥
पृष्टोऽथ यान् पश्यसि कीदृशास्ते तत्रस्थितैर्भक्तिपरैर्मनुष्यैः ।
निवेदयामास सुरान् यथार्थं दृष्टिर्गतिं तस्य यथागतास्ते ॥ ४५ ॥
चत्वार एते रमणीय देहाः कान्त्या शरीरस्य विभासमानाः ।
पीतानि वासांसि च संवसाना भव्यामभिख्यां परिपोषयन्तः ॥ ४६ ॥
कैलाश शोर्षं परितो भ्रमन्तो नीला जलापूर्णघना इवैते ।
विद्युच्चमत्कारपरीतदेहाः दृश्या विमानैकतटाधिरूढ़ाः ॥ ४७ ॥

पूज्य यति जो की प्रेरणा से उस बालक ने सामने उन देवों को देखा कहने लगा कि देख रहा हूँ लोगों ने पूछा कि वह कैसे हैं तब सत्य वाणी से उसने कहा कि चार देवता बहुत सुन्दर हैं पीले वस्त्र पहिरे हैं कैलाश के शिखर के चारों ओर घूमने वाले नीले जल भरे बिजली धारा प्रकाश वाले बादलों की तरह यह देवता सफ़ेद विमान के चारों ओर दिखाई देते हैं ।

यज्ञोपवीतानि गलेषु शोभां शुभ्राणि कांचित् परिवर्द्धयन्ति ।
कण्ठं गते बाहुलते रमायाः बिष्णोर्यथा रम्यतमे लसेताम् ॥ ४८ ॥

ते पादुका काण्ठमयीर्दधाना विमानदण्डान् करयोर्गृहीत्वा ।
यज्ञार्थ दीक्षोचितवेषवन्तः राजन्ति हन्त श्रुति पण्डितास्ते ॥ ४९ ॥
माला स्तुलस्यास्तिलकं तथोर्ध्वपुंड्रं ललाटेषु गलेषु देवाः ।
सर्वे सुरीत्या परिधारयन्तः ते वैष्णवत्वं परिबोधयन्ति ॥ ५० ॥
अंगुष्ठमात्रं पुरुषं बिमाने संस्थाप्य चोत्थाप्य नभो व्रजन्ति ।
दूरं गता दृष्टिमति क्रमन्तो निवेद्य चैतद्विरराम बालः ॥ ५१ ॥

इन देवों के गले में यज्ञोपवीत ऐसे सुन्दर सजे हैं जैसे रमा जी की भुजलता श्री विष्णु जी के गले में सुशोभित हो पैरों में काठ की पादुका पहिर कर विमान के दण्डों को हाथ में लिये हुए ऐसे मालूम होते हैं जैसे यज्ञ दीक्षा का वेष बना कर वेद पण्डित हों तुलसी की माला गले में धारण की है तथा मस्तक पर तिलक लगाया है मानों परम वैष्णव है। अंगूठे जितने पुरुष को विमान में बिठा कर ले जा रहे हैं दूर चले गए इतना कह कर बालक ने मौन कर लिया।

दृष्टा मया हन्त सुरोतमार्वैलब्धः प्रसादो हृदयस्य भूयान् ।
जीवादपेतस्य गुरोस्तनोस्तु विलोकनादस्य पुनर्विषादः ॥ ५२ ॥
विलोक्यनिः संज्ञमिदं शरीरं बालस्य वाचं च निशम्य लोकः ।
प्राप्ता दशां या मतिखेदपूर्णां सा केनचिद्वर्णयितुं न शक्या ॥ ५३ ॥
बालेनदृष्टाः खलु पार्षदास्तेऽस्माभिस्तु नारादपिवर्तमानैः ।
सन्तः कृपां यत्र जने प्रसन्नाः कुर्वन्ति तं ते परितारयन्ति ॥ ५४ ॥
इत्यालपन्तो महतः प्रभावं संस्मृत्य संस्मृत्य च विस्मिताश्च ।
परस्परं संमिलित स्वरेण ते धन्यवादं सुतरां प्रचक्रुः ॥ ५५ ॥

आज बालक का मन देव दर्शन के कारण बहुत प्रसन्न हुआ किन्तु जीव से पृथक् शरीर को देखकर फिर दुःख हुआ संज्ञा हीन शरीर को देखकर वा बालक की वाणी सुनकर लोग किसी व्याकुलता में चले गए कहने लगे कि बालक ने तो देवों का दर्शन किया हमने नहीं किया यह सब संत जी का महत्त्व है इस प्रकार धन्यवाद करने लगे।

ततश्च शास्त्रोक्त विधिं शरीर दाहादि सम्बन्धितमादरन्तः ।
शोकाकुलान्तःकरणा जनास्ते गेहानगच्छंस्तु यथाकथंचित् ॥ ५६ ॥

स्वशिष्यवर्य्याद् भवभंजनादि दासाभिधानादधृत मंत्र दीक्षम् ।
बालं समाहूय च रामदासं वृद्धो महात्मा वचनं जगाद ॥ ५७ ॥

हे स्नेह पात्रेह वयः स्वकीयं विविक्तचेताः परिचिन्तयस्व ।
स्वाध्यायसक्तः सततं भवात्र शूश्रूषमाणो गुरुमण्डलानि ॥ ५८ ॥

यथा तवाज्ञेति शिशुर्बभाषे वृद्धो महात्मा प्रबबन्ध तस्मै ।
अध्यापको योग्यतमो नियुक्तः सुखं पपाठाथ स रामदासः ॥ ५९ ॥

प्रातः समुत्थाय विधाय कृत्यमध्यापकं चापि मुदा प्रणम्य ।
आशीर्वचस्तस्य ततो गृहीत्वा मनो दधाति स्म स पुस्तकेषु ॥ ६० ॥

इसके बाद शास्त्र विधि के अनुसार दाहसंस्कार किया। फिर वृद्ध महात्मा जी ने श्री भवभंजन दास जी से दीक्षा प्राप्त राम दास को बुलाकर कहा कि तुम ध्यान से विद्या पढ़ो। उनकी आज्ञानुसार राम दास ने लगन से पढ़ना शुरू किया प्रायः नित्य विधि करके गुरु का आर्शीवाद लेकर विद्या में मन लगाता था।

यो ज्ञात्वात्म समत्व मत्र निखिले विश्वे विधात्रा कृते ।
आत्मेवान्यहितं सदा समकरोत् मान्यो जगत्यां सताम् ॥
दीना दैवहतास्तुयेपि मनुजा यस्यात्मनश्चाधिकाः ।
तस्मै योगिवराय नः प्रतिपदं श्री स्वामिनेस्यान्नमः ॥ ६१ ॥

जो महापुरुष सारे विश्व में आत्मा का भाव देखते हुए सभी जीवों का आत्मा के समान हित करता रहा। दीन जन जिसे आत्मा से प्रिय थे उस पूज्य पुरुष के लिये नमस्कार हो।

इति पार्षद दर्शनं नाम विंशति सर्गः ।

---

# अथ विद्यालयादिसंस्थापनंनामैकविंशति सर्गः

आदेशतो वृद्धोगुरोरथायं समाहितैकान्तमना वरेण्याम् ।
विद्यां यथायोग्यतयाध्यगच्छत् विद्यागुरो रादिगुरोर्नियोगात् ॥ १ ॥

संप्रार्थित स्तेन ततो महात्मा गोपालदासो वरशिक्षकेन ।
आज्ञानुसारं भवतो दयालो संपाठितोऽयं शुभबुद्धिछात्रः ॥ २ ॥

मतिं विलोक्यास्य मनो मदीयं कृपानिधे तुष्टिशिखां प्रयाति ।
गृह्णाति विद्यां स्वयमेव बुद्धचा बालोऽल्पयत्नादपि पाठ्यमानः ॥ ३ ॥

सत्कृत्य तं विप्रवरं तदानीं योग्योपहारं च समर्प्य तस्मै ।
ऊचे समाहूय च रामदासं तस्योन्नतिं साधुतमांविधित्सुः ॥ ४ ॥

बड़े गुरु जी की आज्ञा से इस बालक ने अध्यापक के द्वारा ध्यान पूर्वक अध्ययन

किया इसके पश्चात् शिक्षक ने स्वा० जी से कहा कि आपका यह विद्यार्थी पढ़ चुका है इसकी मति देखकर मुझे बहुत आनन्द होता है क्योंकि यह संकेत मात्र से ही शास्त्र ग्रहण कर लेता है शिक्षक के यह शब्द सुनकर महात्मा जी ने सत्कार किया योग्य उपहार भी दिया फिर रामदास को बुलाकर कहा।

हे भद्र काश्यां पठितुं प्रयाहि स्वाध्यायवेला किल वर्ततेते ।
सनातनीं त्वं पठ वेद विद्यां प्रचारणायाथ भवे सुरीत्या ॥ ५ ॥
आज्ञानुसारं स गुरोस्तदानीं गत्वा हरिद्वार पुरीं सुरम्याम् ।
श्री जाह्नवी तीर मुपाश्रितश्च विद्वत्प्रधानैः परिसेव्यमानम् ॥ ६ ॥
पुष्पै स्तथा चारुफलैः प्रपूर्णैः संतोषकैर्द्दृष्टिमतां नराणाम् ।
कीरादिकानां सुविहंगमानां संघैरगण्यैश्च समावृतैर्वै ॥ ७ ॥
शाखाग्रभागैर्फलभारनम्रैः संचालितैर्मन्द मरूत्सुयोगात् ।
पार्श्वगतानां किल संविधातुं प्रवर्तमानैरिव शिष्टकृत्यम् ॥ ८ ॥
बिल्वाम्रनिम्बामलकीशिरीष जम्बीरजम्बूबटशाल्मलीभिः ।
अन्यैरनेकैः परितो लसद्भिः वृक्षैर्विशेषात्परिशोभमानम् ॥ ९ ॥

कि हे भद्र अब अध्ययन के कारण काशी जाओ वहां सनातन विद्या का अध्ययन करो फिर सनातन का प्रचार करना इनकी आज्ञा से वह पहिले हरिद्वार पुरी में गया जहां पुष्प-फल-विहगों के झुण्डों से संयुक्त कई प्रकार के वृक्ष जोकि फल भार से झुकी हुई शाखाओं से आने वालों के प्रति शिष्टाचार करते दिखाई देते हैं ऐसे वृक्षों से जो सुन्दरतम बना हुआ है।

धावद्भिरेवैवमितस्ततश्च सेतोः प्रवाहे प्रपतद्भिरेव ।
कृष्णास्य कीशैरति चंचलैश्च क्रीड़ा प्रसक्तैः परिसेव्यमानम् ॥ १० ॥
साक्षाद्विधानाय परेश्वरस्य योगेन चेतो बशतां नयद्भिः ।
योगक्रिया पालित मानसैश्च बिराजमानं खलु योगिवर्य्यैः ॥ ११ ॥
वेदं तदा कारक पुस्तकानि छात्रैः प्रसक्त्या सततं पठद्भिः ।
जातीयताभ्युन्नतिकार्य रक्तैः सुशोभितं धर्मधुरं वहद्भिः ॥ १२ ॥
स्थूलैर्मठाधीश महान्तवर्यैः नाथैरुदासीन कबीरपान्थैः ।
सदण्ड सन्यासि मतानुगैश्च शोभामपूर्वमभितो दधानम् ॥ १३ ॥

इधर उधर दौड़ते हुए लंगूरों से जो सेव्य मान है भगवान् का दर्शन करने के कारण चित को एकाग्र करके योगाभ्यास करने में लीन योगिजनों से जो सुशोभित है वेद तथा तदनुकूल पुस्तकों में लीन धर्म शिक्षा में प्रवृत छात्रों से जो रमणीय बना हुआ

है स्थूल काय महंत-नाथ-उदासी संन्यासी आदि वर्ग से जो परिपूर्ण है ऐसे गंगातट पर पहुंचा ।

देशान्तरेभ्यश्च समागतानां तद्दर्शनार्थं ननु सज्जनानाम् ।
नानाविधानां भ्रमतां यथेष्टं समावृतं चारुतरैः समूहैः ॥ १४ ॥

देशीय सेवार्थ परायणानां सौभाग्य संयोग शुभेच्छुकानाम् ।
नानात्मका सन्ति सभा वरेण्या देशे कृता धर्ममये तथास्मिन् ॥ १५ ॥

शास्त्रीयधर्मस्य सुबोधहेतोः तद्यात्रि वर्गस्य सुखेन तावत् ।
व्याख्यानरक्तैर्हि महानुभावैः धर्म्याकथाकार्यपरैः परीतम् ॥ १६ ॥

श्री गंगा जी के दर्शन के कारण दूर २ से आए यात्रि गणों से जो घिरा हुआ है देश सेवी भाग्यवान् लोगों की जहां कई सभाएं हैं सनातन धर्म के ज्ञान के वास्ते व्याख्यान वा कथा करने वाले महानुभावों से जो तट व्याप्त है ।

आकाश मानं शिखरै विधातु गच्छभिरूर्ध्वं किल सानुमद्भिः ।
उद्योगयुक्तैरिव दृश्यमानैः सिंहादि गेहैः परिरक्ष्यमाणम् ॥ १७ ॥

श्री रामदासेन समग्र शास्त्र सारोपदेशे कुशलान् श्रयित्वा ।
तत्रैव सौभाग्य फलायमाने गंगातटेऽधीयत वेद विद्या ॥ १८ ॥

काशीं ततः पुण्यतमां जगाम विद्यामयीं विश्वसृजा प्रणीताम् ।
विद्यावतां तत्र विधाय सेवां विद्यां स्वसंबोधकरीं पपाठ ॥ १९ ॥

वर्षाण्ययं द्वादशचात्म विद्यां वेदान्तशब्दादि शरीरिणीं च ।
लग्नस्तथाध्यैत किल शुद्धिबुद्धिर्यथा शरीरेऽस्य लयं गता सा ॥ २० ॥

आकाश में माप लेने वास्ते ऊँचे २ शिखरों के द्वारा चारों ओर स्थित पहाड़ों से जिन की गुफ़ाओं में सिंह आदि वास करते हैं जो तट सुरक्षित है रामदास ने वहीं कुशल विद्वानों के सहारे से अध्ययन किया फिर काशी में इसी हेतु से जाकर विद्वानों के सहारे से अध्ययन किया विद्वान लोगों की सेवा करके विद्या पढ़ी बारह वर्ष लगन से अध्ययन किया !

नत्वा ततौऽध्यापक वृन्द मेष संपूज्य गंगां जननीमिव स्वाम् ।
संप्रस्थितश्चाथ गुरोः समीपं तद्दर्शनोत्कण्ठमना मनस्वी ॥ २१ ॥

प्राप्तस्ततो वृद्धगुरोः सकाशं मार्गं समाप्याथ कियच्चिरेण ।
तस्यांघ्रियुग्मं शिरसा प्रणम्यह्यु पाविशद्भूमितले पुरस्तात् ॥ २२ ॥

तेनाथपृष्टः कुशलादिकं सः तपस्विना सत्यसहायकेन ।
हे सौम्य विद्यामपठः सुखेन स्वास्थ्यं किमस्तीह तनौत्वदीये ॥ २३ ॥

वाक्यं तदा नम्रतरं जगाद तदग्रगोऽसौ सरल स्वभाव: ।
शुभाशिषाते कुशलं कृपालो स्वस्थोऽस्मि सर्वाङ्गतया च नाथ ॥ २४ ॥

अध्ययन के बाद विद्वानों को तथा श्री गंगा जी को प्रणाम करके गुरु जी के दर्शन की भावना से उनकी ओर यात्रा की और कुछ देर पीछे आकर नमस्कार पूर्वक उनके सामने भूमितल पर बैठा श्री वृद्ध गुरु जी ने पूछा कि शरीर में कुशल तो है क्या तब वह नम्र वाणी से कहने लगा कि महाराज आप की कृपा से पूर्णतया सकुशल हूं ।

शुश्रूषयाहं विदुषां सकाशात् शास्त्राण्य नेकान्यपठं सुरीत्या ।
भागीरथी तीर निवासतश्च मतिर्मदीयामलता मवाप ॥ २५ ॥
आज्ञाप्यतां सम्प्रति किं विधेयं सार्थं यतो जन्म भवेन्ममेदम् ।
विद्यामधीत्येह समागतोऽस्मि संदिश्यतां कार्यं मतः परं किम् ॥२६॥
बुद्धि तथोत्साह मथाऽवलोक्य पूज्यो गुरुस्तं पुनरेव माह ।
कार्यं तवाहं कथयामि सौम्य शृणुष्व वाक्यं हितकारि यन्मे ॥ २७ ॥
प्राप्ते तु देहे मनुजस्य पुंसा जातीय वृद्धिः सततं विधेया ।
शिक्षा विधानं किल तत्र मुख्यं तदेव यत्नेन विधेहि वत्स ॥ २८ ॥

विद्वानों की सेवा करके मैंने विद्या प्राप्त की है श्री गंगा जी के पास निवास होने से मति भी विमल हुई है । अब आप आज्ञा दें मैं आप की आज्ञा का पालन करने के लिये तत्पर हूं । इस की बुद्धि वा उत्साह देखकर वह बोले कि सुनो तुम्हारा कर्तव्य क्या है । मानव को जीवन में जाति की उन्नति करनी चाहिये इसके लिये शिक्षा मुख्य साधन है अतः शिक्षा का प्रसार करो ।

ग्रामेषु सर्वेषु सनातनस्य धर्मस्य वै रम्यतमाः पताकाः ।
आरोपणीयाभवता तथाहि कल्याणहेतो र्जगतीगतानाम् ॥ २९ ॥
सुप्तान् समुत्थापय भारतीयान् समुत्थितान् बोधय चात्मरूपम् ।
प्रबोधमाप्तान् गमयाशुभूति मार्गेषु सन्देशमिमं शृणुष्व ॥ ३० ॥
ग्रामानुरूपाणि तथा विधेहि स्थानानि धर्मस्य सनातनस्य ।
पाश्चात्य रीतिश्च यथा कथंचि दुन्मूलनीया जगतः समूलम् ॥ ३१ ॥
आज्ञा मिमां वृद्धगुरो रवाप्य कल्याण मूलां सुतरां प्रसन्नः ।
ओमेतदुक्त्वा प्रणिपत्यचार्यं गुरुं तदा तं पुनरेव माह ॥ ३२ ॥

हर गांव में सनातन धर्म की ध्वजा फहरा दो जिस से जनता का कल्याण हो

सोते भारतीयों को जगाओ जागे हुओं को आत्म ज्ञान की प्रेरणा दो सब को कल्याण मार्ग में प्रवृत करो गाँव गांव में सनातन धर्म के शुभ स्थान बनावो पश्चिम प्रथा को मिटावो ऐसी आज्ञा प्राप्त करके बहुत प्रसन्न हुआ तथा स्वीकार कर फ़िर उनसे नम्र होकर कहा ।

स्वामिन् विवक्षु स्त्वहम स्मि किंचित् मदीय वाक्यं कृपया वधेहि ।
आधार भूता गुरवो यतोऽत्र बालाभिलाषावचसां भवन्ति ॥ ३३ ॥
जातीय शिक्षां विविधै रुपायै देंशे प्रचाराय नियोजितोऽस्मि ।
जातीय विद्या जनजीवनाय प्राणा इवैवास्ति च वोधितोस्मि ॥ ३४ ॥
आज्ञा वशोत्पन्न मनोरथं स्वं स्वामिन् पुरस्तेऽद्य निवेदयामि ।
कार्यानुकूलोयदिमे भवेत् सः पूर्णों विधेयः कृपया तदानीम् ॥ ३५ ॥

स्वामी जी कुछ कहना चाहता हूं कृपा करके सुनो कारण कि बालकों के मनोरथ का आधार तो गुरु ही होते हैं देश में शिक्षा प्रचार की आज्ञा मुझे आप ने दी है शिक्षा को जाति का प्राण भी कहा है इस समय कोई संकल्प मेरे मन में आया है आप पूर्ण करें ।

मन्ये तु भूलोकनिवासि जीवान् संसारयत्येव जगत्प्रसिद्धा ।
भागीरथी शुद्ध जल प्रवाहा नाना तरंगैः परि शोभमाना ॥ ३६ ॥
प्रर्वतिता पाद नखाज्जगत्यां सत्यस्य विष्णोर्जगदाश्रयस्य ।
भूलोक भागेषु समाचरन्ती विनाशयन्ती जनपाप पुञ्जम् ॥ ३७ ॥
संत्रोड्य संसार कराल बन्धं नित्यं सुखं प्रापयतीह गंगा ।
पापात्मकं घोर तमो विहन्तुं विद्युत्समा या प्रतिभाति भूमौ ॥ ३८ ॥
विष्णु स्वरूपस्य तथा गुरोस्ते शिक्षा शरीरा रमणीय गंगा ।
पादाब्जयुग्मात्तमसान्धजीवान् प्रवर्ततां तारयितुं महात्मन् ॥ ३९ ॥
देशे चरन्ती च ततो यथेष्टं सर्वत्र सर्वान् परिपावयन्ती ।
मनःस्थितं मोहतमो विनाश्य ज्योतिंजनानां तनुतां मनस्सु ॥ ४० ॥

मेरा विचार है कि जैसे श्री गंगा जी विष्णु जी के चरणों से जन्म लेकर लोगों को तार रही है सब पापसंचय का नाश करती है संसार का बन्धन तोड़कर अमर पद प्रदान करती है इसी प्रकार से शिक्षा रूपी गंगा आप से ही प्रारंभ होकर संसारी जीवों का तम नाश करके तारने वास्ते प्रवृत्त हो आप कृपा करके अपने स्थान का कुछ भाग प्रदान करें जहां मैं—विद्यालय की स्थापना करूं क्योंकि पवित्र स्थान में प्रारंभ की गई विद्या जल्दी विकास को प्राप्त करेगी ।

स्व स्थान भागं कृपयाद्य देहि, यत्रारभेयं किल वि धेयम् ।
सुस्थान मूला हि यतोऽत्र शिक्षा, देशे परामुन्नति मेष्यतीति ॥ ४१ ॥
तदा समार्कण्य विचित्र युक्ति हर्षं परं प्राप महानुभावः ।
प्रेम्णा तमाहाथ तथा करोमि यथाभिलाषा मनसस्तवास्ति ॥ ४२ ॥
स्थानैक भागे च समारभस्व विद्यालयं त्वं स्वमनोऽनुसारम् ।
विद्यां यतो बोधकरीं सुखेन पठन्तु विद्यार्थिगणा यथेष्टम् ॥ ४३ ॥
पर्याप्तभूमिं च ददामि भद्र विद्यालयारंभनिमित्तमद्य ।
स्थानं सुरम्यं क्रमशस्तदर्थं स्वाध्याय योग्यं कुशलोविधेहि ॥ ४४ ॥
तुष्टेन तेनाथ गुरो र्निदेशात् कार्यानुकूलं समयं विचार्य ।
विद्वानथो कोपि महानुभावो वृद्धः समाहूयत कर्मदक्षः ॥ ४५ ॥

इस सुन्दर बात को सुन कर महात्मा जी बहुत प्रसन्न हुए प्रेम से कहा कि तुम्हारी अभिलाषा पूर्ण करता हूं, स्थान में एक ओर विद्यालय का प्रारंभ कर लो जहां सुख से छात्र गण विद्या पढ़ें पर्याप्त भूमि भी इस कार्य वास्ते देता हूँ जहां पर विद्या भवन का निर्माण करो ऐसा सुन कर वह बहुत प्रसन्न हुआ तथा समय विचार कर एक कर्म योगी पंडित जी को बुलाया ।

आज्ञां गृहीत्वाथ महात्मनोऽपि जनेषु सर्वेषु विलोकयत्सु ।
उपाक्रमत्स स्वगुरूक्तकार्यं लोकोपकारैक फलं तु यस्य ॥ ४६ ॥
लम्बोदरादि ग्रहवर्ग पूजा शास्त्रानुसारं विहिता तदानीम् ।
श्री शारदाराधनमप्यमुष्मिन् काले विधानैर्विविधैः कृतं तैः ॥ ४७ ॥
मांगल्य कार्यस्य शुभस्य कर्ता विद्वद्वरः पंडित मेघराजः ।
वृद्धस्तथाप्युच्चगिरा सुमन्त्रान् वेदस्य विद्यार्थिषु गायति स्म ॥ ४८ ॥
अध्यापनारम्भ विधानमेवं विद्वद्वरेण्येन कृतं हि तेन ।
बालास्तु केचित्किल पंच सप्त ग्राम्यास्तदा पाठयितुं गृहीताः ॥ ४९ ॥
वेदादि सच्छास्त्र गिरामभिज्ञः सदा सदाचार विचार युक्तः ।
कश्चित् कुतश्चित् सरल स्वभावः सता समाहूय ततो नियुक्तः ॥ ५० ॥

मान्य वर गुरु जी की आज्ञा से सब के सामने विद्यालय का आरंभ हुआ गणेश आदि का पूजन हुआ श्री सरस्वती देवी की पूजा भी की इस मंगल कार्य का कर्ता पं० मेघ राज था वृद्ध होने पर भी ऊंचे स्वर से वेद पाठ किया ५-७ छात्र ग्राम से लेकर पाठशाला का आरंभ हुआ फिर एक सदाचारी प्रकाण्ड विद्वान् को नियुक्ति की ।

विद्यां पठन्ति स्म सुखेन छात्राः संध्यादिकं धर्मविधिं तथाहि ।
सुशिक्षितास्तेन सुशिक्षकेन ते देव विद्या कुशला बभूवुः ॥ ५१ ॥
पठत्सु बालेष्वनिशं सुरीत्या वरीयसी मात्म हिताय विद्याम् ।
बभूव वातावरणं तु तादृग् यतो जनाः संस्कृति मापु रार्षीम् ॥ ५२ ॥
निशावसाने सति सुप्रभाते यथा जना जाग्रति कर्मशीलाः ।
तथैव विद्यालय दर्शनेन गता नरा धार्मिक जागृतिं हि ॥ ५३ ॥
सर्वे मिलित्वा खलु तत्र छात्रा निवेदयामासु रिति प्रसह्य ।
विद्यालयोद्घाटयितार मेते स्वामिन् वचो नः कृपयावधेहि ॥ ५४ ॥

वहां छात्रों ने सुख से धर्म विद्या पढ़ते हुए बहुत सफलता प्राप्त की। पढ़ने वालों के प्रभाव से बने वातावरण से लोगों के हृदय में भी भारतीय संस्कृति प्रगट होने लगी।

जैसे रात के जाने पर प्रभात के आने पर लोग जाग जाते हैं वैसे ही विद्यालय के कारण लोग धर्म के मार्ग में जाग गए। इस समय सब छात्रों ने विद्यालय के निर्माता से निवेदन किया।

विद्यालयस्यास्य नवा प्रतिष्ठा सन्मूल भाषा परिचायकस्य ।
वृद्धिं द्वितीयेन्दुनिभां सदैव वांछाम एते हि वयं नितान्तम् ॥ ५५ ॥
द्रष्टुं हरिद्वार सुरापगाँ तां गंगां मनोऽत्युत्सुकतां दधाति ।
यात्रा भवेन्नो भवता सहेयम् कांक्षास्मदीये हृदये किलैषा ॥ ५६ ॥
साहाय्य मासाद्य दयानिधे ते द्रक्ष्याम दृश्यं सकलं सुखेन ।
इत्थं निवेद्याथ गुरुं समस्ता श्छात्राः समं तेन ययुः सहर्षम् ॥ ५७ ॥
विद्यार्थिन स्तत्र गतास्ततश्च स्नात्वा तथा ध्यानविधिं विधाय ।
दृष्ट्वा निवेद्यं विनिवेद्य पश्चात् प्रत्यागताः पूर्वं निवास भूमिम् ॥ ५८ ॥
प्रभावतोऽस्याश्च सुरापगाया बुद्धिं परां प्रापु रिमे समस्ताः ।
पवित्र चेष्टासु रता यतोऽमी नवां समाजस्य मुदं वितेनुः ॥ ५९ ॥

तब सब छात्रों ने निवेदन किया कि यह विद्यालय का प्रथम वर्ष है हम सब निरंतर इस की वृद्धि की कामना करते हैं। इसी कारण आप के सहयोग से श्री गंगा जी का दर्शन करना चाहते हैं आप हमारी प्रार्थना स्वीकार करें इस के बाद वे छात्र आचार्य जी के साथ हरिद्वार में गए वहां दर्शन स्नान ध्यान आदि के द्वारा तृप्त हो कर पुनः निवास भूमि में वापस आ गए। श्री गंगा जी की कृपा से पवित्र बुद्धि वाले छात्रों ने अपनी शुभ क्रियाओं से समाज में महान् हर्ष तथा संतोष का संचार किया।

संचालक श्चेतसि देशसेवी व्यचिन्तयत्तद्विषये पुनः सः ।
विद्यालयेऽस्मिन् विरला पठन्ति छात्रा स्वभाषां निजधर्म मूलाम् ॥ ६० ॥
कराल काल प्रसरेण मुग्धा नेच्छन्ति भाषां पठितुं स्वकीयाम् ।
पाठ्यप्रणालींच ततस्तदर्थं विध्यन्तरेणैव तु चालयेयम् ॥ ६१ ॥

विद्यालयेऽस्मिन् विहिता तदानीं भाषान्तराणामपि सुव्यवस्था ।
समाययु स्तत्र ततः सहर्षं ग्रामान्तरेभ्योऽपि सुयोग्य बालाः ॥ ६२ ॥

एवंविधस्तेन कृतः प्रबन्धः शिक्षा प्रचाराय कृतोद्यमेन ।
संख्याधिकाहर्निशमाबभूव विद्यार्थिनां सम्पठतां तदानीम् ॥ ६३ ॥

संचालक ने फिर विचार किया कि विद्यालय में देववाणी के पढ़ने वाले तो विरले छात्र हैं समय की प्रेरणावश यह मूल भाषा में रुचि नहीं करते इस कारण और भाषाओं का प्रबंध करना उचित है ऐसा करने पर इधर उधर मे बहुत छात्र वहां प्रविष्ट दुए लगातार संख्या अधिक होती गई ।

केचित्ततो नागरिका मनुष्याः समागताः प्रेमपरा मिलित्वा ।
प्रेम्णा नमोवाद विधिं विधाय संप्रार्थयामासुरिमं विनम्राः ॥ ६४ ॥

स्वामिन्निदानीं भवतः पुरस्तात् मनोगतं स्वस्य निवेदयामः ।
ध्यानेन वाक्यं कृपया शृणुष्व तदद्योतकं संवदतां वरेण्य ॥ ६५ ॥

भवाञ्जगत्या हितमीहमानः विद्या प्रबन्धं कृतवान् दयालो ।
बाला यतो नो हि सुखेन विद्यां धर्म्यां मनोमोद करीं पठेयुः ॥ ६६ ॥

सेवामिमां पुण्यतमां विधातुं जाता समीहा खलु नौ मनस्सु ।
भवच्चरित्रं सुचिरं विलोक्य मनोरथो नोऽभवदेष भाग्यात् ॥ ६७ ॥

मार्गोपदेश स्तु कृतो भवद्भिः जन्मास्मदीयं सफलं यतः स्यात् ।
प्रेम्णा विनिर्दिष्ट पथा तवैव शिक्षा प्रबन्धं करवाम सम्यक् ॥ ६८ ॥

तब कुछ नगर के लोगों ने आकर इन से प्रार्थना की कि महाराज अपना मनोरथ आप के सामने प्रस्तुत करते हैं आप ध्यान से सुनें आप ने सब की हित कामना से यह शिक्षा का कार्य प्रारंभ किया है जहां बालक शुभ विद्या पढ़ेंगे हम चाहते हैं कि यह कार्य हम स्वयं आप की आज्ञानुसार करें जिस से हमारा जीवन सफल हो आप की शुभ प्रवृति देखकर यह विचार पैदा हुआ है ।

तेषां वच स्तत्तु निशम्य तुष्टः प्रीत्या महात्मा समुवाच तेभ्यः ।
सौभाग्य मेतद्भवतां प्रशंस्यं सेवां चिकीर्षन्ति यतो भवन्तः ॥ ६९ ॥

ग्राह्यं सहर्षं खलु कार्यजातं शिक्षा प्रबन्धादि भवद्भिरद्य ।
सर्वेषु कार्येषु सहायकोऽस्मि श्रीशोऽपि व। कार्यं सहायकः स्यात् ॥ ७० ॥

एतावदुक्त्वा किल कार्यं भारं तेभ्योऽपर्यत्साशिषमागतेभ्यः ।
अन्योन्यरक्ताश्च तथा जनास्ते सर्वे व्यवस्थां सुतरामकुर्वन् ॥ ७१ ॥

यत्नेन भव्यां रचनां विधाय ग्रामेषु सर्वेषु च मन्दिराणाम् ।
आरभ्यतैतेषु जगद्धिताय पौराणिकैर्भागवतीः कथाद्याः ॥ ७२ ॥

उन लोगों के कथन से संतुष्ट महात्मा जी ने कहा कि आप तो प्रशंसनीय हो जो यह शुभ मनोरथ ले कर आए हो सहर्ष यह कार्य करो मैं भी सहायक हूं भगवान् आप की सहायता करेंगे इतना कह कर के कार्य उनके प्रति सौंप दिया वे लोग सानंद उस विद्यालय की सेवा में लगे इस के पश्चात् यत्न पूर्वक गांव गांव में मन्दिरों का निर्माण कर के-कथा वार्ता की व्यवस्था की ।

रामायणादीनि च पुस्तकानि श्रद्धालवो यत्र पठन्ति भक्त्या ।
संकीर्तनं प्रेममयं तथाहि संगत्य कुर्वन्ति जना सवाद्याः ॥ ७३ ॥

दैवाद्भ्रमन्तो हि दिशासु सन्तः यत्रागता प्रेमपरा उषित्वा ।
धारा सुवाचां च मनोहरां ये सुधामयीं संतत मावहन्ति ॥ ७४ ॥

प्रचाररूपं च तथावलम्ब्य स साधनं शुद्धतमं समन्तात् ।
संयोजयामास विचारशीलान् ग्रामेषु सर्वेषु हिताय तेषाम् ॥ ७५ ॥

तेषां सभाः पुण्यतमाश्चकार धर्मं प्रचाराय च वैष्णवोऽसौ ।
यासां प्रबन्धेन शुभे मनुष्याः मार्गे सुखं धर्ममये प्रवृत्ताः ॥ ७६ ॥

धार्मिक मन्दिरों में श्री रामायण आदि उत्तम पुस्तक प्रेमी लोग पढ़ते थे तथा मिलकर संकीर्तन का आनंद लेते दैव वश यात्रा करते करते कई सन्त जन इस ओर आकर यहीं ठहरते तथा अपनी पवित्र वाणी द्वारा कल्याण करते प्रचार का साधन लेकर सभी गांवों में लोगों को संगठित किया तथा संगठन के द्वारा सभाओं का निर्माण किया जिस के द्वारा सार्वजनिक जीवन बनाया जा सके तथा कर्तव्य का बोध हो ।

विशेष वेलासु च जातु जातु संभूय तत्रागत मानवानाम् ।
याऽपूर्व शोभा परि दृश्यते स्म बाचा मगम्या किल वाग्मिनां सा ॥ ७७॥

एवं प्रकारेण समाहितेन महात्मानेन भुवस्तलेऽस्मिन् ।
प्रवर्तिता धर्ममयी प्रणाली पाश्चात्य रीतिश्च निराकृतेति ॥ ७८ ॥

इतस्ततो वै वसतां जनानां महात्मनोऽस्य श्रवणेन वाचाम् ।
सत्यात्कदाचिन्न मनोविशुद्धं भोगा हि संचालयितुं समर्थाः ॥ ७६ ॥

ब्रह्मानन्द पयोनिधिं गमयितुं प्रायो लघून् प्राणिनः ।
आत्मज्ञान कला प्रयोगविधिना विद्या सरिच्चालिता ।
यस्यादेश सुधां निपीय मनुजा याताःसुरत्वं सुखम् ।
तस्मै मे नतयो लसन्तु सततं श्री स्वामिने सर्वदा ॥ ८० ॥

विशेष अवसरों पर गांवों के लोग जब संमिलित होकर आते थे तब अपूर्व शोभा का दृश्य होता था । इसी प्रकार पूज्य महाराज ने धार्मिक रीति का प्रचार किया तथा पश्चिम रीति का निराकरण किया । इनके उपदेश से सबका मन अचल था । ब्रह्मानंद सागर में जाने वास्ते विद्या सरित का संचालन किया जिनके उपदेशामृत से मांनव देव बने ऐसे महापुरुष को वार वार नमस्कार हो ।

इति विद्यालयादि संस्थापनो नामैकविंशति सर्गः ।

---

# अथान्तिमोपदेश प्रदानो नाम द्वाविंशति सर्गः

तस्यात्मरामस्य तपोमयस्य लोकोपकारैक परायणस्य ।
देहस्य कालेन नियन्त्रितस्य शेषस्तदैको दिवसोऽवशिष्टः ॥ १ ॥

श्रीशेन सृष्टो नियमो यतोऽयं नोलंधने कश्चिदमुष्य शक्तः ।
यो जायते स म्रियतेऽप्यवश्यं संयुज्यते यः स वियुज्यतेऽपि ॥ २ ॥

तपोनिधि लोक सेवी आत्मदर्शी महात्मा जी की आयु का एक दिन शेष रह गया भगवान् के इस नियम का उलंघन कोई नहीं कर सकता जन्म के साथ मरण तथा संयोग से साथ वियोग होता ही है ।

साकेत लोकं नियतं यियासोर्मायामयीं देहदशां जिहासोः ।
तत्प्रेरणा संरत रामदासो गुरोः पुरस्तात् सहसा जगाम ॥ ३ ॥

पादाब्ज मूले प्रणतं विनम्रं सौभाग्य वन्तं सरलस्वभावम् ।
युवान मालोक्य कृपादृशातं श्रेयोऽभिवाञ्छन् वचनं जगाद ॥ ४ ॥

आगच्छ हे भद्र कुशाग्रबुद्धे त्वं स्मर्यसे मे मनसा सदैव ।
इत्यादि सस्नेह गिरोपवेश्य पार्श्वे कथा मिष्टतमा मुवाच ॥ ५ ॥

हे प्रेमपात्रातिविचारशील संकल्पकश्चेतसि कस्तवास्ति ।
आयासि हे भद्र कुतोऽधुना त्वं काते विधित्सा हृदयेऽद्य ब्रूहि ॥ ६ ॥

साकेत लोक में जाने वाले महापुरुष के सामने इस समय उनकी प्रेरणा से कार्यरत रामदास वहां आ पहुंचा चरणों में झुके हुए उसे देखकर इसका सतत कल्याण चाहते हुए वे बोले हे धीमन् आओ मन से में तुम्हें स्मरण कर रहा हूं इस प्रकार प्रेम से बिठा कर कहा इस समय तुम क्या करना चाहते हो क्या संकल्प है कहां से आ रहे हो बताओ।

प्रसन्न गम्भीर पदां च वाणी माकर्ण्य देवस्य गुरोर्मुखाब्जात् ।
वाचं तदासौ समयानुकूलां प्राहात्ममग्नाय महात्मनेऽयम् ॥ ७ ॥
स्वामिन् कियद्दूरमितोऽस्ति रम्यो ग्रामोवरो गौहर बालनामा ।
सुशोभमानो दिशि पश्चिमास्यां विप्रा विशश्चापि वसन्ति यत्र ॥ ८ ॥
खण्डा स्तरूणां किल पीलुकानां यं सर्वतः पंक्तिगता लसन्ति ।
तैर्वेष्ट्यमानः स धनैरनेकै र्भातीव दुर्गावृत राजधानी ॥ ९ ॥
तत्रत्यहिन्दू जनता विचारः संघात्मकत्वे जनितोऽतिपुण्यात् ।
मां तत्र नेतुं मनुजो तु कौचित् समागतौ नाथ दिशस्तु तस्याः ॥ १० ॥
तावत्र नो मन्दिर मस्तु धर्मं प्रचारणायेति निवेदयेते ।
आज्ञाप्यतां हे भगवन्निदानीं प्रत्युत्तरं तौ किमहं वदानि ॥ ११ ॥

पूज्य स्वा० जी की मधुर वाणी सुनकर समय के अनुसार उसने कहा कि महाराज जी यहां से कुछ दूर पश्चिम दिशा में गौहर वाल नामक गांव है वहां के लोगों का विचार हुआ है कि हमारे गांव में धर्म प्रचार के निमित एक मन्दिर का निर्माण हो तथा दो व्यक्ति मुझे लेने वास्ते यहां आए हैं आप आज्ञा दें इस समय मैं उन दोनों से क्या कहूँ।

वृद्धो महात्मा गमनोत्सुकं तं वात्सल्य भावेन हसन् जगाद ।
तत्रत्य यात्रां विजहीहि भद्र विशेष हेतुः खलु कश्चिदस्ति ॥ १२ ॥
पुनः कदाचित्तु गमिष्यसित्वं कार्यं समुद्दिश्य जनानुरूपम् ।
कालान्तरेऽवश्य मिदं विधेयं पूर्णं सुखेनैव भविष्यतीति ॥ १३ ॥
एतां तदाज्ञाँ सुतराँ निशम्य नरौ समाहूय स तावुवाच ।
तत्रागमिष्यामि पुनः कदाचित् मनोरथः सेत्स्यतिवोऽप्यवश्यम् ॥ १४ ॥
तथास्त्वितीमौ शिरसा प्रणम्य महाजनौ ग्रामदिशं प्रयातौ ।
विविक्त देशं च समाश्रितस्य तस्याग्रतः सोऽप्युपविष्ट आसीत् ॥ १५ ॥

यात्रा में तैयार इसे देख कर हंसते हंसते महात्मा जी बोले आज न जाओ कोई विशेष कारण है फिर कभी जाना यह काम अवश्य पूर्ण होगा इस प्रकार आज्ञा मिलने पर उन दोनों को बुलाकर कहा गया कि फिर किसी समय आप के गांव में इस कार्य से आना होगा वे दोनों भी स्वीकार कर के प्रणाम करके ग्राम की ओर गए तथा एकान्त में विराजमान वृद्धगुरु जी के पास राम दास भी बैठ गया।

श्री स्वामि वर्येण पुरःस्थितोऽसौ पादाग्र भागाहित नेत्र युग्मः ।
कृपापरीतेन हृदः रहस्यं विज्ञापितोऽभूत् वचनैर्मनोज्ञैः ॥ १६ ॥

कुले विशुद्धेऽस्ति जनिस्त्वदीया काश्यां सुविद्या मपठस्तथा त्वम् ।
बाल्याद्विधेयोऽसि मयोचितेषु कार्येषु विज्ञानफलेषु भद्र ॥ १७ ॥

योग्योपपदेशेष्वधिकारिणं त्वां मत्वा रहस्यं कथयामि किंचित् ।
शृणुष्व चैकाग्रमना मदुक्ति चित्ते समाकर्ण्य च धारयस्व ॥ १८ ॥

रामस्य भव्या मनपायिनीं च भक्ति जगन्मुक्ति करीं विधेहि ।
भक्तयैव लभ्यो भगवान् खरारिः पापौघ हानिस्तत एव सिद्धा ॥ १६ ॥

श्रेयो विधानाय जनस्य लोके बहूनि सन्त्यत्र सुसाधनानि ।
सर्वाणि तान्येव तथापि भक्ते र्नाहन्ति साम्यं परिसंगतानि ॥ २० ॥

श्री स्वा० जी ने इस के सामने पवित्र वाणी से हृदय का भाव प्रगट किया तुम्हारा जन्म शुद्धवंश में है काशी में विद्या भी पढ़ी है बालपने से उचित मार्ग की प्रेरणा मैंने दी है उपदेश का पात्र जानकर मैं कुछ कहता हूं सुनो जीवन काल में भगवान् राम की अनायिनी भक्ति करना भक्ति से भगवान् का दर्शन तथा पाप का क्षय होता है मनुष्य के कल्याण के साधन बहुत हैं परन्तु भक्ति का स्थान मुख्य है।

प्राप्तोऽचलं मान्यपदं ध्रुवोऽपि भक्त्यैव हित्वात्रसमस्त भावान् ।
प्रह्लाद भक्तोऽप्यनयाजयत्ताः प्राप्ता महाघोरतरापदाश्च ॥ २१ ॥

भजंस्तथा दाशरथिं परेशं वाय्वात्मजोऽनन्यगति र्महात्मा ।
यातोऽमरत्वं भवरोगहीनं बभूव सेव्यो जगतस्तथायम् ॥ २२ ॥

वनेचरो दोष परीतदेहो हिंसादि संलग्नमनाः कुबुद्धिः ।
बाल्मीकि रस्यां निरतोहि भक्तौ सर्वैः सदा पूज्यतमो बभूव ॥ २३ ॥

भक्तस्य भक्त्या भगवान् प्रसन्नो मातेव बालं सततं स पाति ।
विलोकते तस्य रुचिं यथैव तथाविधां कार्य कलां करोति ॥ २४ ॥

ध्रुव नेभक्ति से ही अचल पद का लाभ लिया तथा प्रह्लाद ने भी भी इसी के बल से घोर आपदाओं पर विजय प्राप्त की भगवान् राम की विमल भक्ति के द्वारा

हनुमान अमर हुए तथा पूज्य देव बने वनवासी हिंसा प्रिय बाल्मीकी भक्ति के द्वारा लोक पूज्य हुए भगवान् भक्ति से प्रसन्न हो कर भक्त की कामना पूर्ण करता है तथा सदा रक्षा करता है।

सर्वेषु संसारि जनेषु योग्यां साधौ विशेषेण विरक्त रूपे ।
पुण्याप्यमानुष्य फलायमानां स्वतंत्रतां त्वं हृदि भावयस्व ॥ २५ ॥

ज्ञेया द्विधा सा व्यवहार रूपा ह्येकापरा तत्वमयी च बोध्या ।
पूर्वा स्वदेहे सति सर्व योग्या देहावसाने तु मता द्वितीया ॥ २६ ॥

स्वातन्त्र्य मेवास्ति सुखं सदैव दुःखं परं या परतंत्रतास्ति ।
यत्नेन केनापि ततोऽस्ति साध्यं स्वातन्त्र्य मेवेह यथाकथंचित् ॥ २७ ॥

जीवत्सु दैत्येषु दुरात्मकेषु पौलस्त्य मुख्येषु भुवस्तलेऽस्मिन् ।
सिंहासनं नैव ततो गृहीतं रामेण धर्मार्थि शरीरभाजा ॥ २८ ॥

भूत्वातितिक्षुः पृथिवी मटन् सन् हत्वा समूलं खरदूषणादीन् ।
निशाचरान् देश मिमं स्वतन्त्रं विधाय सिंहासन माश्रयत्सः ॥ २९ ॥

सभी जीवों के लिए विशेष कर विरक्त साधु के लिए जीवन का फल स्वतंत्रता का होना आवश्यक है वह २ प्रकार की है शरीर के समय में एक तथा शरीर त्याग के बाद दूसरी। किसी भी यत्न से इसको प्राप्त करना चाहिए-स्वतंन्त्रता को सुख जानो परंतन्त्रता को दुःख जानो भगवान् राम ने राक्षसों के जीते २ कभी भी राज्य पद नहीं लिया सब का समूल नाश कर के ही सिंहासन स्वीकार किया।

तस्यैव देवस्य गुणालयस्य साकारतां विश्वकृते गतस्य ।
रामस्य चर्यादिशतीह जीवान् स्वतंत्रतैव मनुजस्य लक्ष्यम् ॥ ३० ॥

आध्यात्मिकी यातु मया द्वितीया स्वतंत्रता ते कथितास्ति सौम्य ।
विषादहर्षादि विकार शून्या रामेण चादर्शि पदे पदे सा ॥ ३१ ॥

त्वयाऽपि यत्नस्तु तथा विधेयः प्रवर्तमानेन जगत्क्रियासु ।
स्वतन्त्रता ते द्विविधापि येन भवेन्महानन्द करी भवेऽस्मिन् ॥ ३२ ॥

कृत्वा वशेस्वेन्द्रियवर्गमाशु शक्ति परां प्राप्नुहि चात्मनित्वम् ।
सिद्धा भवेयुर्हि मनोरथास्ते यस्याः प्रभावात् पृथिवी तलेऽस्मिन् ॥ ३३ ॥

सदा स्वशक्त्या परिरक्षणीयो देहो यतोऽसौ करणेषु मुख्यः ।
धर्मस्य विश्वेशविनिर्मितस्य श्रेयस्करस्येह परत्र चापि ॥ ३४ ॥

भगवान राम की कृति निर्देश करती है कि स्वतंत्रता आवश्यक है दूसरी आध्यात्मिक स्वतंत्रता मानी गई है जो हर्ष शोक आदि से रहित भगवान् ने

प्रदर्शित की है, तुम भी ऐसा यत्न करो जिस से दोनों प्रकार की स्वतंत्रता प्राप्त कर सको, इन्द्रिय गण को वश में करो इसी से सभी मनोरथ सफल करने की शक्ति मिलेगी शरीर रक्षा का ध्यान भी करना क्यों कि यह धर्म का मुख्य साधन है।

सदास्वसर्वस्व समर्पणेन सर्वैः प्रयत्नैः परिपलनीयाः ।
ये केऽपि सन्तीह शरीर मन्तो दैवेन दीना द्रविणेन हीनाः ॥ ३५ ॥

मान्याश्रमं वै प्रथमेतरंच सर्वाश्रयं सेवयितुं प्रवृत्ताः ।
ये दैव गत्या रिक्ता भवन्तः शक्ता न तं चालयितुं कथंचित् ॥ ३६ ॥

कन्या विवाहं किल निर्धनोऽह मध्यापनं कापि तथा सुतानाम् ।
अकिंचनो दैव हतोऽस्त भाग्यः कथं करिष्ये भरणं स्वध्वाः ॥ ३७ ॥

शीतोष्ण रक्षा वरणं तथास्य गोप्याङ्ग वर्गस्य कथं भवेन्मे ।
जीर्णानि वस्त्राणि नवक्रयं तु द्रव्ये विनष्टे च कथं करोमि ॥ ३८ ॥

तन मन धन से निर्धन हीन लोगों की सेवा करो जो गरीब गृहस्थी है जिन को रात दिन चिन्ता सताती है कि कन्या विवाह कैसे करूं बालकों को कैसे पढ़ाऊं तथा शरीर रक्षा के लिए वस्त्र कहां से लाऊं क्योंकि मैं निर्धन हूँ, धन के बिना जोवन के यह कार्य सब नहीं हो सकते अपनी तकदीर को ही जो सदा सोचते रहते है उनकी सेवा सब प्रकार से करना।

क्षुधातुरा मे पृथुका रुदन्ति द्वार्यागतो भिक्षुगणो बुभुक्षुः ।
पश्यामि गेहेऽन्नकणंन किंचित् हा देव जीवामि कथंवद त्वम् ॥ ३९ ॥

एवं विधा चेतसि यस्य चिन्ता क्षणं क्षणं जन्म नवं दधाति ।
नद्यां वहन्त्यां पवनेरितायां तरंगमालेव विचित्र रूपा ॥ ४० ॥

केनाऽप्युपायेन यथोचितेन धनेन शक्त्या समुपार्जितेन ।
तेषां जनानां च सहानुभूति दानेन मानेन सदा विधेहि ॥ ४१ ॥

सर्वान्तरस्थो जगतां विधाता विश्वंभरो दीन जनाश्रयः सः ।
एवं विधानैः परि तपणीयो धर्मो यतोऽकिंचन दीनरक्षा ॥ ४२ ॥

धृत्वा तनुं मानवतानुरूपां करोति यो नोपकृतिं जगत्याम् ।
निरर्थकं जन्म मतं तदीयं विनिन्दनीयं विदुषां समाजे ॥ ४३ ॥

मेरे बाल भूखे हैं भिखारी द्वार पर भीख मांगते हैं घर में अन्न का दाना नहीं है मैं कैसे प्राण धारण करूं इस प्रकार की चिन्ता से जो ग्रस्त है किसी भी प्रकार से उन की रक्षा करना आवश्यक है सब के भीतर बसने वाला भगवान् इस से प्रसन्न होता है यही परम धर्म है मानव जन्म लेकर जो सेवा नहीं करता उस का जन्म व्यर्थ है।

रागो विधेयो न तमोमयेषु भावेषु रागं कुरु सात्विकेषु ।
हित्वा परेषां गुण दोष वार्ता वैराग्य शीलो भवशान्त चेताः ॥ ४४ ॥
वेदेषु तद्धार्मिक पुस्तकेषु विधेहि यत्नेन सदा प्रवृत्तिम् ।
एवं विधं शास्त्र रहस्य मुक्त्वा पूज्यो महात्मा विरराम वाचः ॥ ४५ ॥
स्वामिन्नहं भाग्यमयोऽस्मि जातः कृता कृतार्थो भवता दयालो ।
कृतज्ञता मेव मसौ प्रदर्श्य तत्संनिधावेव मुदोप तस्थौ ॥ ४६ ॥

हित्वा भूमि तलं यियासुरवरं लोकं पर ब्रह्मणः ।
बाञ्छन् लोकहितं सुधा सम रसं यः सूपदेशं ददौ ॥
रामासक्तमना धनं भवतमो हन्तुं तु भानूपमः ।
तेनादिष्ट पथा प्रयातु सततं चैतोऽस्मदीयं खलु ॥ ४७ ॥

तामस भावों का त्याग कर सात्विक भावों को अपनाया करना संसार में वैराग्य के द्वारा तटस्थ भाव से रहना, वेद तथा वेद के अनुकूल पुस्तकों का सदा स्वाध्याय करना इस प्रकार उपदेश दे उन्हों ने वाणी का बिराम किया। मैं कृतार्थ हूँ इसी प्रकार कृतज्ञता प्रकट कर के राम दास भी पास में बैठ गया। यहां से परलोक जाते समय जिन्हों ने अमृत सा उपदेश दिया जो अज्ञान अन्धकार को मिटाने वास्ते सूर्य के समान थे उन के बताए गए मार्ग पर सदा हमारी प्रवृत्ति हो।

इति अन्तिमोपदेश प्रदानो नाम द्वाविंशति सर्गः।

---

# अथ परलोक प्रयाण वर्णनो नाम त्रयोविंशति सर्गः ।

ग्रामाद्बहिस्तार्णकुटीरवासी सन्मार्गनेता खलु मानवानाम् ।
गोपाल दासः सुचिरं महात्मा भूमण्डलालं करणं वभूव ॥ १ ॥

स्वामी जी ने इस प्रकार लोगों को धर्म के मार्ग पर चलने की प्रेरणा देते हुए चिर काल तक भूमि को सुशोभित किया।

कुर्वंस्तपस्यां करणानि रुन्धन् रामस्य सीतानुज संयुतस्य ।
मूर्तिं पराभक्ति पुरस्सरंच संपूजयन्नेव मुवासतत्र ॥ २ ॥
स वादयन् झरझरकादिवाद्यान् सूर्योदये प्रेममयोऽथ सायम् ।
स्थित्वा पुरस्तस्य सुरेश्वरस्य संकीर्तनं संकुरुते स्म नित्यम् ॥ ३ ॥

ग्रामान्तराहूत विशेष योग्यो हस्तांगुली वाद्य कला प्रवीणः ।
वाद्यान्तरेष्वप्यति मात्र दक्षो माधुर्य भावान्वित शब्दवर्षी ॥ ४ ॥
संकीर्तनं प्रेममयं विधातुं गानं तथा भक्तिपरं हि गातुम् ।
आराधनायैव परेश्वरस्य स्वसंनिधौ गीति पटुर्नियुक्तः ॥ ५ ॥
नीराजनायाः समये द्विसन्ध्यं तेनैव योग्येन सुगीयमानाः ।
भव्या मनस्तोष करीः सुगीतीः श्रृण्वन्नसौ प्रेमनिधौ ममज्ज ॥ ६ ॥

श्री स्वामी जी ने तपस्या की सन्मार्ग का प्रदर्शन किया तथा नियम से भगवान राम की मूर्तिका का पूजन करते रहे बाजे बजा कर नित्य कीर्तन भी करते थे दूसरे गांव से एक संगीत गाने वाला योग्य व्यक्ति पास रखा हुआ था जिस के द्वारा संकीर्तन का क्रम सुन्दर हो सायं प्रातः उसी के द्वारा सुन्दर २ गीत सुन कर मन का आनंद लेते रहे।

श्री रामदासेथगते निपीय गुरूपदेशामृत माशुतृप्ते ।
सीतापतिं चेतसि चिन्तयन्तं तेजोभिरापूरित दिग्दिगन्तम् ॥ ७ ॥
तं गीति विज्ञः स दिदृक्षुरागात् तस्य स्वरूपं हृदये दधानः ।
गायन् मनस्येव तदीय कीर्तिं महीसुराग्र्यः प्रणतिं चकार ॥ ८ ॥
स्थितं तथा तं पुरतोऽवलोक्य नम्राननं विप्रकुलावतंसम् ।
पप्रच्छ स स्नेहगिरा महात्मा तत्सेवया लब्धबहुप्रसारः ॥ ९ ॥

राम दास के उपदेश सुनकर जाने पर वह गायक दर्शन के कारण स्वा० जी के पास आया तथा वन्दना की इस समय यह अपने देव चिन्तन में बैठे थे सामने आए हुए इस गायक को देख, उसकी सेवा से प्रसन्न महात्मा जी ने प्रेम पूर्वक कहा।

हे भद्र संगीत कला प्रवीण सद्ध्येय विश्वेश दयैक पात्र ।
देहे गृहे वा कुशलं तवास्ति समागतः केन हि कारणेन ॥ १० ॥

श्री स्वामी जी ने प्रेम पूर्वक कुशल मंगल पूछा तथा आने का कारण पूछा कि हे गायक वर क्या चाहते हो।

यो विद्यतेतेऽद्य मनोरथ स्स स्पष्टं पुरोमे समुदीरणीयः ।
श्री रामनामामृत तृप्त चित्त संकोच भावंत्यज शुद्धबुद्धे ॥ ११ ॥
आज्ञापितस्तेनमहात्मनेत्थंनिवेदयामास तदा स विप्रः ।
भक्ति भवद्दर्शन कांक्षिणीमां सम्प्रेर्यधीमन्निह चाऽऽनिनाय ॥ १२ ॥
विषायमानैः परिणामदुःखैः क्षुब्धं जगज्जालविलोलभावैः ।
चेतो न कस्यैति विशेषशान्तिं भवादृशां पावन दर्शनेन ॥ १३ ॥

साधारणानां जगतीगतानां कल्याण योगो भगवन् कथं स्यात् ।
सक्षात्कृतिः पापमलापहर्त्री भवादृशां ब्रह्मविदां न चेत्स्यात् ॥ १४ ॥

एवं निवेद्याथ स गीतिविज्ञः मौनं समाश्रित्य तदावतस्थे ।
लीला करोऽसावपि साधुवर्य्यः तस्मै जगादेति वचस्तदानीम् ॥ १५ ॥

तब उस से महात्मा जी ने कहा आज इस समय आना कैसे हुआ जो भाव हो स्पष्ट करो ऐसी आज्ञा होने पर वह बोला कि महाराज दर्शन की भावना से आया हूँ क्योंकि इसके बिना तो संसारी जीव का कल्याण है ही नहीं इतना कह कर गायक ने मौन कर लिया तब संत जी ने फिर कहा सुनो।

हे सौम्य नित्यं ललितां सुभावां कृत्वा नवीनां कविता महीनाम् ।
चेतः पराह्लादविधायिनीं च सुखावहां भक्तिरसेन पूर्णाम् ॥ १६ ॥

मनोविनोदाय सदा यथेष्टं युक्तोधिया श्रावयसीह नित्यम् ।
प्रायो जनानां हृदयेषु तस्मात् विराजसे गीति कला प्रवीण ॥ १७ ॥

ये सन्ति लोके किल देहिनोऽस्मिन् कालेन सर्वे जहतीह देहम् ।
योऽयं स्वभावो रचितो विधात्रा सोऽयं न केनापि विलंघनीयः ॥ १८ ॥

हित्वेह जीर्णानि यथा मनुष्यो वस्त्राणि गृह्णाति सु नूतनानि ।
कर्मानुसारेण तथा शरीरी हित्वा शरीराणि नवानि धत्ते ॥ १९ ॥

श्री स्वा० जी ने कहा कि तुम रोज़ नई २ कविता सुनाते हो इसी कारण सब के प्रिय हो आप की कविता से बड़ा आनंद मिलता है, आज एक कविता विशेष प्रकार से करो, तुम जानते हो कि यहां कोई सदा नहीं रहता शरीर छोड़ना पड़ता है जैसे पुराने कपड़े उतार कर नए धारण किये जाते हैं वैसे शरीर भी कर्म के अनुसार बदलते रहते हैं।

गतोऽस्मि साकेत पुरीमितोऽहं लोके सशोकामवनीं विहाय ।
इतीव मत्वा कवितां विधेहि स्वरेण तालेन च तां सुगाय ॥ २० ॥

दृष्ट्वा त्वदीयां कविता प्रवृत्तिं जाताभिलाषा मनसीयमद्य ।
वाद्यं समानीय च तत्परस्त्वं संश्रावयोर्वी सुरवंश चन्द्र ॥ २१ ॥

वाचं निशम्येति महात्मनोऽसौ भीतस्तथा विस्मितमानसश्च ।
विद्वत्प्रशंस्यः कविता प्रवीणो भूदेव वर्योऽयमचिन्तयत्सः ॥ २२ ॥

हास्यं मया किं कुरुते महात्मा सत्यं वचो मामथवा ब्रवीति ।
व्यथाकरीं श्रोत्रमतां कदाचित् वाचं न वाचंयम एष वक्ति ॥ २३ ॥

महात्मा जी ने कहा कि मैं शरीर छोड़ कर परलोक में चला गया हूं ऐसा मान

कर कविता बना कर सुनाओ आप की कविता कला देखकर यह विचार उत्पन्न हुआ है बाजा ला कर यह सुनाओ यह आज्ञा सुनकर वह गायक बहुत डरा तथा हैरान हुआ कि क्या यह मेरे साथ उपहास कर रहे हैं कभी भी मन को दुःखाने वाली, बात इन्हों ने नहीं की। तो आज यह ऐसी बात क्यों करते हैं।

तूष्णीं विचिन्त्येति मनोऽवकाशे सगद्गदं तं स जगाद विप्रः ।
हे नाथ पीड़ा जननीं कटूक्ति ब्रूषे कथं मे शरणागताय ॥ २४ ॥

बालोऽधुना ते शरणागतोऽस्मि नान्या गतिर्मेऽस्ति विना भवन्तम् ।
श्रोतुं न शक्यं हि मया कथंचित् वाक्यं कथं तद्वदसीह नाथ ॥ २५ ॥

प्राणायमानोऽसि जगज्जनानां श्रेयो विधायी करुणा प्रधानः ।
मातेव सर्वान् परिरक्षमाणः कथं त्वमीदृग्वचनं ब्रवीषि ॥ २६ ॥

वेदोपदेशं च भवत्सकाशात् शृण्वन्ति लोका भगवन् यथेष्टम् ।
येनास्य लोकस्य परस्य चापि सिद्धिः स्वतः स्याद्ध्रुव मानवानाम् ॥ २७ ॥

संजायते दर्शन मेव नित्यं लोकोतराणां सततं मुनीनाम् ।
स्वात्मावबोधैकफलाय सम्यक् यत्नं विना ते कृपया दयालो ॥ २८ ॥

चुप करके मन में बहुत विचार करके वह बोला कि महाराज यह कटु वाणी आप ने कैसे कह दी मैं तो आपका बालक हूं मैं ऐसी बात सुनने में असमर्थ हूं आप तो जगत् के रक्षक हैं दयालु हैं आप के मुख से सभी लोग वेद का उपदेश सुनते हैं जिससे दोनों लोक सुधर जाते हैं आप के कारण अनेक यति मुनि बिना यत्न के हमारे दृष्टि गोचर होते हैं।

यद्दर्शनं यत्नपरै रपीह प्रायो मनुष्यै रति दुर्लभं च ।
राज्ञा मपीहा शतसिद्धि लानां भवन्त्य कस्मा दिह दर्शनानि ॥ २९ ॥

यहां तो अपने आप दुर्लभ सत्पुरुषों के दर्शन हो जाते हैं तथा इसी कारण परम सिद्धि भी प्राप्त होती है।

महीतलेऽस्मिंस्त्वयि वर्तमाने क्रान्ता महोर्वी यवनैरपीयम् ।
अजायमाना प्रतिभाति नाथ भक्ति प्रचारेण सुधामयेन ॥ ३० ॥

स्वप्ने वियोगो भवतो जनेन द्रष्टुं न शक्योऽस्ति वदामि सत्यम् ।
समीपवासी भवतस्तथाहं वार्ता वियोगस्य कथं नु गास्ये ॥ ३१ ॥

भावं किमालोकयसे मदीयं वाचानया वा परिहास पूर्वम् ।
धैर्यं न मे चेतसि वर्ततेऽद्य श्रुत्वाश्रुतं प्राक् वचनं त्वदीयम् ॥ ३२ ॥

याचे क्षमां ते पुरतो नतोऽहं स्वामिन्नशक्तोऽस्मि यतोऽत्र कार्ये ।
गच्छामि मूर्छां श्रवणेन यस्य तस्येह वाचः कथनं कथं स्यात् ॥ ३३ ॥

एवं प्रकारेण निवेद्य तस्मै सद्यः समुद्भूत विषादपूरः ।
मौनं विधायाथ सुगीतिकारी विनाम्य शीर्षं पुरतोऽस्य तस्थौ ॥ ३४ ॥

भूमि पर आपके होते हुए यवनों से घिरी भी भूमि ब्रज भूमि जैसी लगती है आप का वियोग तो कोई भी स्वप्न में नहीं देख सकता फिर मैं वियोग का गाना कैसे गाऊं क्या मेरी परीक्षा लेने वास्ते उपहास किया है मेरा तो धैर्य टूट गया है क्षमा चाहता हूँ यह कार्य मेरे से नहीं हो सकता इस प्रकार निवेदन करके दुःखी मन से वह गायक मौन करके बैठ गया।

एतास्तदुक्तीर्हृदयेऽवधाय स्वामी विहस्येति जगाद तस्मै ।
चिन्ता न कार्या भवता तु काचित् यथारुचिस्तेस्ति तथा कुरुष्व ॥ ३५ ॥

स्वाभाविकीयं कथिता कथाद्य नावश्यकी शान्तमनाः भव त्वम् ।
चेतस्त्वदीयं व्यथितं भवेच्चेत् न श्रावयेमां कवितामिदानीम् ॥ ३६ ॥

संतोष्य चेतोऽस्य गिरानयाथ वाक्यान्तरैश्चापि तथा महात्मा ।
श्रोत्रा तराह्लादमयीं सभावां तत्याज वाचां सहसा प्रवृत्तिम् ॥ ३७ ॥

गायक की बात को सुनकर हंसते हंसते महात्मा जी बोले चिन्ता न करो जैसी रुचि हो वैसे करो यह मेरी बात आवश्यक नहीं तुम्हारा दिल दुःखता है तो कविता न सुनाओ इस प्रकार के शब्दों द्वारा उसके मन को संतुष्ट किया फिर वाणी का विराम किया।

संगीत विद्या कुशलोऽपि तस्य तदा प्रसंगान्तरवेगमग्नः ।
स्वास्थ्यं स्वतः प्राप्यविहाय चिंतां हास्यं विजानन् प्रथम तदुक्तम् ॥ ३८ ॥

शृण्वन् वचांस्यस्य मनोहराणि स्थित्वा तथा तत्र कियच्चिरेण ।
तपस्विनं कार्य विशेष हेतोर्नत्वा समुत्थाय गतो यथेष्टम् ॥ ३९ ॥

स वासरः क्वापि गतः स सूर्यः प्राप्तात्रियामा सहसा सचन्द्रा ।
दैवी विचित्रा घटना तदा भूत् बलीयसी वारयितुं न शक्या ॥ ४० ॥

स्वामी त्वकस्मात्स्वतनुं जिहासुः साकेतलोकं प्रति गन्तुकामः ।
स्थित्वा कुटीरेऽसुगतिं नियम्य सत्यस्वरूपाहितदिव्य दृष्टिः ॥ ४१ ॥

सम्यक् प्रकारेण समाधि माप्तः संसार विक्षेप विनाश हेतुम् ।
चेतः समाधाय बलेन सत्ये स्वल्पेन कालेन लयं जगाम ॥ ४२ ॥

तब गायक दूसरी बातों में मग्न हो गया पूर्वबात को केवल उपहास जान कर निश्चिन्त हो कर कुछ समय के बाद नमस्कार करके चला गया वह दिन बीत गया रात आ गई कोई दैव लीला क्या बनी कि अकस्मात् श्री स्वा० जी ने कुटिया में बैठे २ प्राणायाम कर के समाधि दशा में प्रस्थान किया जरा देर में परलोक यात्रा कर ली।

सहस्ररश्मिर्भुवनं प्रकाश्य नभः प्रदेशस्थिति मादधानः ।
यथा तमो लोकगतं विनाश्य दैवाद सावस्तगिरिं प्रयाति ॥ ४३ ॥
गोपालदासोऽपि तथा महात्मा विज्ञान मार्गं सुतरां प्रदर्श्य ।
तमस्तथा मोहमयं विनाश्य स्वेचित्स्वरूपे विलयं प्रयातः ।४४ ॥
ईशाम्बराकाशकराप्त संख्या जाते शुभाब्दे किल भौमवारे ।
एकादशी वासर षट्तिलायां शीतर्तुपौषेऽथ निशीथकाले ॥ ४५ ॥
तिष्ठत्सु पार्श्वैकिल सेवकेषु विमानमारुह्य सुरेशदत्तम् ।
संस्तूयमानो दिविजैरितोऽसौ संप्रस्थितो देवनिवास भूमिम् ॥ ४६ ॥

जैसे सूर्य प्रकाश करके अस्त हो जाता है वैसे ही श्री स्वामी जी भी विज्ञान का प्रकाश करके आज दैववश अन्तर्धान हो गए २००१ सं० भौमवार षट्तिला एकादशी के दिन विमान द्वारा देवलोक को प्रयाण किया पौष मास था भक्त लोग पास थे जब प्रयाण किया।

श्रुत्वा पुरः गीतिकरोऽथ दृष्ट्वा श्री स्वामिनो वृत्तमिदं विचित्रम् ।
धाराप्रवाहैः करुणा जलैश्च भूमिं रुदन् सन् व्यथितः सिषिञ्च ॥ ४७ ॥
संयम्य नेत्राश्रुजलं कथंचित् गतः पुनस्तत्र महाविषादम् ।
प्रणम्य निर्जीव शरीरमेष वाक्यं जगौ गद्गद कण्ठ युक्तः ॥ ४८ ॥
हे नाथ हे भक्तजनाश्रयाहं मूढोऽस्मि संगीतकरोऽस्त भाग्यः ।
मां श्रावयेः देहवियोगगीति माज्ञा त्वदीया न पुरा कृतेति ॥ ४९ ॥
नैच्छं विधातुं खलु यद्विधेयं आज्ञप्त एवापि पुरा त्वयेह ।
सोऽहं महा शक्तिमता नियुक्तो दैवेन गानं विवशः करोमि ॥ ५० ॥

गायक ने जब यह समाचार सुना तथा आकर देखा तो रोते-रोते भूमि को सींचा फिर निर्जीव शरीर को वन्दना करके बोला कि जो काम आप की आज्ञा से मैंने नहीं किया था सो अब बली दैव के वश में आ करने लगा हूँ।

इमामनाथा मवनीं विधाय यातोऽसि हे नाथ कथं परत्र ।
कस्याश्रयेणाद्य विषाद पूर्णा भूरेष्यतीयं प्रशमं महात्मन् ॥ ५१ ॥

वर्षाम्बुवाहैः परितश्चलद्भिः सर्वासु रथ्यासु तथा बहिश्च ।
सोढुं न शक्तो भवतो वियोगं नेत्राश्रुपूरं परि मुंचतीयम् ॥ ५२ ॥

कस्मै समर्प्याद्य कृपानिधेस्मान् पादाब्ज भक्तान् शरणागतान् वै ।
साकेतलोकं प्रगतोऽसि देव प्राचीनगेहं भगवनितस्त्वम् ॥ ५३ ॥

वेदाङ्गतपाश विनाश हेतून लोकान् समध्याप्य यथा कथंचित् ।
दिशासु सर्वासु भवांस्तताान तनिष्यते कोऽद्य विना भवन्तम् ॥ ५४ ॥

कस्त्रास्यते तांस्भवति प्रयाते वेदैकरक्षाव्रतदीक्षितेद्य ।
तेषां प्रचारे कृशतां गते च जनाः पतिष्यन्ति महान्धकारे ॥ ५५ ॥

इस भूमि को अनाथ बनाकर आप परलोक गए हो अब यह किस के सहारे रहेगी वर्षा से चारों ओर बहते प्रवाह से नेत्रों द्वारा आंसु प्रवाह छोड़ती हुई भूमि दिखाई देती है वियोग नहीं सह सकी हमको किसे सौंप कर आप चले हैं बेदों का विस्तार आप ने किया अब कौन करेगा वेद के प्रचार के बिना लोग अंधेरे में पड़ेंगे ।

विद्वज्जनाना मनुकूलमानं कस्त्वांविना मान्य विधास्यतीह ॥
तेषां तिरस्कार कृतिर्महात्मन् संसारि वर्गस्य विनाश हेतुः ॥ ५६ ॥

प्राणान्त कालाहि विषाक्त लोकान् मूर्छा दशां मोहमयी मवाप्तान् ॥
कस्त्रास्यते देव विना भवन्तं हाधिग् वियुक्तान् भवतो दयालो ॥ ५७ ॥

आप के बिना विद्वानों का मान कौन करेगा और उन का अपमान लोक के नाश का कारण है विषम काल से दूषित लोगों की रक्षा आप के बिना अब कौन करेगा आप के वियोग को पाने वाले हम को धिक्कार है ।

सर्वे रुदन्तीह विमुक्तकण्ठं स्मृत्वा परार्थान् भवतः प्रयासान् ॥
अद्योपकारस्य समाश्रयः स्यात् कः प्रस्थिते देवपुरीं त्वयीतः ॥ ५८ ॥

श्री शारदा पुण्यमयी त्विदानीं कमाश्रितोर्व्यामिहवत्स्यतीयम् ॥
स्वामिन् वियोगाद्भवतोऽसहाया रोदिष्यति हन्त विमुक्त कण्ठा ॥ ५९ ॥

आकस्मिकीं वक्रदशां गतानां कार्पण्यदोषोपहतात्मनांच ॥
कर्तव्यतामूढ़धियां हि वामाद् दैवान्महाखेद मुपश्रितानाम् ॥ ६० ॥
को धैर्य शान्तिप्रतिपादकैर्हि वार्त्ता प्रवाहैः मधुरैः सुधोत्थैः ॥
मनस्सु [illegible]मोदं बितनिष्यतीतिकृपापरो दीनजनार्तिहारी ॥ ६१ ॥

सभी जन आपके उपकारों का स्मरण करते-करते रोते हैं आप के चले जाने पर अब उपकार कहां रहेगा श्री शारदा देवी अब पृथ्वी पर अब किसके आश्रय में रहेगी। अचानक विषम दशा आने पर कर्तव्यका ज्ञान न रहने पर दुःखी जनों को धैर्य वा शान्ति कौन प्रदान करेगा।

विद्यार्थिनो ये मनसः स्मरन्तः श्रद्धालवस्त्वां सततं पठन्ति ॥
तेषां गतिः कास्ति विना भवन्तं शाम्यन्तु केनाद्य मनांसि तेषाम् ॥ ६२ ॥

माता त्वमेवासि पिता त्वमेव बन्धुस्तथा नः सकलं त्वमेव ॥
पादाब्जमूलं हि समागतास्म रोगार्त देहा धनहीनगेहाः ॥६३॥

सम्बन्ध मात्रान्तविषायमानात् रोगादितस्त्वं परिमोचयास्मान् ॥
नित्यं प्रणीतं वचनं निशम्य द्वार्यागतानां गदविह्वलानाम् ॥ ६४ ॥

कृत्वा चिकित्सा मनुकूलरुपां शुल्कादिहीनां सकलोपकारिन् ॥
को रम्यवाणीं मधुरांवदन्सन् मोक्षं कुरोगात्वमिवाद्य कर्ता ॥ ६५ ॥

बाला क्षुधानो भगवन् व्यथन्ते भोक्तुं किमप्यादरणीय देहि ॥
एवं विधानांक्षुधया युतानां समागतानांखलु को विना त्वाम् ॥ ६६ ॥

विमल मन से आप को याद करते जो जो छात्र विद्या पढ़ते थे आप के बिना अब उनका क्या होगा आप माता-पिता सब कुछ हो हम आप की शरण में हैं महारोग से पीड़ित हैं इस प्रकार के दीन वचन सुनकर अनुकूल दवाई देकर उनको कौन रोग से मुक्त करेगा मेरे बालक भूखे हैं खाने के लिए कुछ देदो ऐसे भूखे लोगों का सहारा आप के बिना आज कौन है।

हित्वा निमेषं किल धेनवोवै विलोकयामासु रहो रहो यम् ॥
खाद्यं ततोऽखादनिमाश्च नित्यं तासां दशा काद्य भविष्यतीति ॥ ६७ ॥

गावोऽद्य वत्सै र्निजमातरश्च गते प्रिये सम्प्रति विस्मृताताश्च ॥
गोभिश्च वत्सा स्वशारीर जाताः वियोगतस्ते नहि संस्मिग्रयन्ते ॥६८॥

विस्फार्यं नेत्राणि दिशोवकाशान् गोपाल संदर्शन तीव्रभावाः ॥
पश्यन्ति शून्यं च यदा तदा वै तासां दशा वर्णयितुं न शक्या ॥६९॥

भोज्यं पुरस्तात् निहितं विषण्णाः पश्यन्ति नेता नयनाश्रुवत्यः ॥
नासाग्रभागैः खलु दीर्घवेगां हुंकारधारां सततं वहन्ति ॥ ७० ॥

लगातार जो गोएं आप का दर्शन करती थीं तथा चारा बाद में खातीं थीं आज उनकी क्या दशा होगी आज बछड़े अपनी माता गौओं को तथा गोएं अपने

बछड़ों को भूल गई हैं आंखें फैलाकर आप के दर्शन वास्ते इधर उधर दिशाओं को देखती हैं दिशाओं को शून्य देख कर व्याकुल होतीं हैं सामने भोजन रखा है परन्तु यह नहीं खातीं आसु बहाती हैं नासा से दीर्घश्वास लेती हैं।

सिहायमाने त्वयिविद्यमाने लोकाश्चरन्तिस्म न पापकृत्ये ॥
पूर्वं गते सम्प्रति देवदेशं नराश्चरिष्यन्ति यथेष्ट लीलाम् ॥ ७१ ॥
हा हन्त धर्मः सुखसिद्धिवर्षी तापत्रयस्याथ विनाश हेतुः ॥
स्वर्गंप्रयातेऽद्य महानुभावे निर्देक्ष्यते केन जगज्जनेषु ॥ ७२ ॥
हिंसा प्रधानैः किल हन्यमानाः साधुस्वभावा मनुजास्तथैते ॥
दौर्बल्यवन्तोऽसति साधुमौलौरक्ष्या भविष्यन्ति जनेनकेन ॥ ७३ ॥
कान्तार संचार निवासशीला व्याधैर्न शक्याहि निरीक्षितुं ये ॥
अद्याऽभये व्याधगणे कथं ते नेष्यन्ति कालं किलपक्षिणोऽपि ॥ ७४ ॥
यासां न भर्ता न च कोऽपि बालो निराश्रयास्ता अबलाः पृथिव्याम् ॥
दानेन मानेन भवत्सुगुप्ताः कमाश्रयिष्यन्ति दयालुचित्तम् ॥ ७५ ॥

आप के होते हुए लोग पाप नहीं करते थे अब आप के चले जाने पर मन चले लोग पाप करेंगे सुख देने वाला धर्म अब आप के बिना किस के द्वारा लोगो में प्रासारित होवेगा हिंसक लोगों से सताए गए भले मनुष्यों की रक्षा अब आप के बिना कौन करेगा वन के पक्षी जो आप के होते २ निर्भय थे अब उनकी रक्षा कौन करेगा जिनका पति वा पुत्र नहीं है आश्रय हीन हैं ऐसी देवियों की सहायता अब कौन करेगा।

गच्छामि साकेतपदं स्वतन्त्रं जन्मादिषट् भावविकार हीनम् ॥
एतावदप्यत्र न सूचिताः स्मो ह्यावंचितास्मः परधामयात्रिन् ॥ ७६ ॥
गच्छन्नितस्तत्र गुरो परत्र सर्वं सुधर्माद्यनयः समं किम् ॥
शून्यं जगज्जाल मिदं बिभाति शून्यं त्वयैकेन महानुभाव ॥ ७७ ॥
हेमन्तवर्षोपलयोगजातं जातं जगच्छीततरं ततश्च ॥
अनुष्णमेतद्भवता वियुक्तं शवायमानं प्रतिभाति नाथ ॥ ७८ ॥
अद्यैष वर्षोपलवर्षणेन संसार एतः सकलोऽपि शैत्यम् ॥
सदा दृढाभ्यासवशेन मन्ये यान्तं किलत्वामनुयाति सौऽयम् ॥ ७९ ॥

मैं साकेतलोक की यात्रा कर रहा हूं इतनी सूचना भी नहीं दी यह वंचना हमारे साथ होगई है परलोक जाते समय सब कुछ साथ ले गए हो क्योंकि आप के बिना यह संसार सूना हो गया है, वर्षा बर्फ़ के कारण शीत हुआ-हुआ जगत आप का अनुसरण करता दिखाई देता है।

मन्दांगतिं स्वां पवनो विहाय तीव्रामयं चक्रगतिं प्रपन्नः ॥
सोढुं न शक्तो भवतो वियोग मुन्माद रोगीव विभाति देव ॥ ८० ॥

वियोग रूपेण विषेण युक्ता चैतन्य भावावरकेन नाथ ॥
सर्वे मरिष्यन्ति विना भवन्तं न रोचते जीवन मेतदद्य ॥ ८१ ॥

काष्ठानि संगृह्य तु नीरसानि विधाय दीप्तां चितिकां चतूर्णाम् ॥
मनांसि ते पाद युगे निधाय पतंगता मेव वयं सरामः ॥ ८२ ॥

भुजायमानाँश्च तरंगवेगान् नद्यो मरुत्प्रेरणया क्षिपन्त्यः ॥
मृते प्रिये बाहुलता प्रसार्य वामा इवेमा विलपन्ति सर्वाः ॥ ८३ ॥

दग्धा मरिष्यन्ति मया विनैते वियोग वह्नौ शलमायमानाः ॥
साकेत लोकं भवतो यियासो जाता न चिन्ता हृदये किमेषा ॥ ८४ ॥

पवन मन्द गति को त्याग कर चक्र की तरह चलता हुआ आप के वियोग के कारण उन्माद रोग से पीड़ित मालूम होता है वियोग रूपी विष के कारण सब मर जावेगे अब जीने की इच्छा नहीं है सूखी लकड़ी की चिता बनाकर आप का मन में स्मरण करते २ पतग की भांति सब जल मरेंगे नदियां पवन से प्रेरित तरगों को इधर उधर फ़ेंकती हुई विछोड़े वाली औरतों की तरह विलाप करती हैं साकेत की यात्रा करते समय आप ने नहीं सोचा कि यह सब मेरे बिना समाप्त हो जावेंगे ।

मनस्तु नस्तत्र भवत्समीपे गतं महावेगवदद्य नाथ ।
शून्यस्य देहस्य दशा ततो या वक्तुं न शक्या खलु कीदृशीह ॥ ८५ ॥

असह्य शोकावृत मानसस्य सबाष्प कण्ठाधिक गद्गदस्य ।
कण्ठे हि शब्दः स्थिति मापतस्य कपोतवाचेव विषादजन्यः ॥ ८६ ॥

क्रूरेण केनापि ग्रहेण सूर्यो ग्रस्तो यथा दीप्तिततिं जहाति ।
भवद्वियुक्तस्य दशा तथास्य प्रसाद शून्या जगतो विभाति ॥ ८७ ॥

कर्णामृतैर्यो वचनैर्महात्मा सत्यस्य मार्गं प्रदिदेश तुष्टः ।
दैवादभावे खलु तस्य जाते भ्रष्टा पथोऽसतयवने भ्रमामः ॥ ८८ ॥

हम सब का मन तो वेग से आप के पास चला गया है शून्य-शरीर की दशा कुछ कहने के योग्य भी नहीं रही इस प्रकार गायक का शब्द अधिक गद्गद के कारण गले में ही रुक गया जैसे कपोत का शब्द गले में रहता है जैसे ग्रह ग्रस्त सूर्य प्रकाश हीन होता है वैसे ही आज यह जगत शून्य सा बन गया है जो महात्मा मीठे २ शब्दों से सत्य का मार्ग कहते थे वह चले गए इस कारण हम सब मार्ग भ्रष्ट हो गए हैं ।

शोक प्रपूर्णे भगवन् शरीरे स्वकार्य चिताग्रसितेऽतिमूढ़े ।
स्वल्पाव काशोऽपि न दृश्यतेनः रस्यान्नपानग्रहणस्य नाथ ॥ ८९ ॥

एवं विधेकष्ट मये पुरःस्थे बिषायमाने किल विद्यमाने ।
कालेऽपि देहंनहिनोत्यजन्ति प्राणा मृतिदैववशा किलेयम् ॥ ९० ॥

प्रयोजनं नास्ति धनादिकेन पदार्थ जातेन किलास्मदीयम् ।
विहायसर्वं तु तदद्य नाथ भवन्त मेवानु सराम सद्यः ॥ ९१ ॥

संसार संवार परान् पुराऽस्मान् नाम्ना भवानांह्वयतिस्म भूयः ।
तानेव हाहेति विलाप युक्तान् समीक्षसे नाद्य कथं महात्मन् ॥ ९२ ॥

यथा नृशंसाहतमातृकाः स्युः वत्सा महाशोक समुद्रमग्नाः ।
तथा यमेनाद्य वयं विगाधे शोकाम्बुधौ सम्प्रति मज्जिताः स्म ॥ ९३ ॥

महान् शोक से पूर्ण शरीर के लिए अब अन्न पान की आवश्यकता नहीं रही ऐसे भयानक समय में भी यदि प्राण नहीं निकलते तो इसलिए कि मौत दैव के हाथ में है हमारा धन आदि से कोई प्रयोजन नहीं रहा सब कुछ त्याग कर हम आप का अनुसरण करेंगे पहिले तो आप हमारा नाम लेकर बुलाते थे परन्तु अब हम विलाप करते हैं तब भी आप देखते भी नहीं क्या कारण है जैसे गाय के मरने पर बछड़ों की दशा होती है वैसे ही हम सब की दुःख मयी दशा है ।

कुठारघाताहत मूलकस्य तरोर्यथा पत्र फलादि वर्गः ।
देहाङ्ग वर्गस्तु तथा स्मदीयो भवद्वियोगाद भवद्विशीर्णः ॥ ९४ ॥

शशांक बिम्बेन निशा वियुक्ता सरोज संघेन विना तटाकः ।
त्वया विहीना किल मेदिनीयं दुर्दृश्य रूपा प्रतिभाति तद्वत् ॥ ९५ ॥

सहस्ररश्मौहि यथा गतेऽस्तं घनं तमो वै जगदावृणोति ।
मोहान्धकारेण तथावृतं न श्चेतोगतेऽन्यत्र ननु त्वयीतः ॥ ९६ ॥

आसन् पुराये सुखदायिनो नः पुत्रादयो वै त्वयि विद्यमाने ।
ते सम्प्रतीतोऽन्यपदं प्रयाते त्वयीह दुःखास्पदतां प्रयाताः ॥ ९७ ॥

धिगस्ति भूमि भवतो विहीनां तद्वासिनो वास्ति तथा धिगस्मान् ।
धन्योऽधुना धन्यतमोऽस्ति लोकः स्वर्गस्त्वया योऽद्य वृतो वरेण्य ॥ ९८ ॥

तेज कुठार से मूल कट जाने पर जैसे पेड़ के फल पत्र सब सूख जाते हैं वैसे ही हमारे सब अंगों की दशा है चांद से बिना रात तथा कमल के बिना तालाब की तरह आप के बिना भूमि की दशा है सूर्य के अस्त होने पर जगत में तम ही तम होता है जैसे वैसे हमारा चित भी तम से पूर्ण हो गया है जो पुत्र आदि आप के

होते २ सुखदायी थे वह भी अब दुःखदायी हैं आप के बिना भूमि को वा हम को धिकार है तथा स्वर्ग धन्य है जहां आप गए हैं।

शाखाभिरेते तरवो महात्मन् त्वदाश्रमीया परिलम्बिताभिः ।
कूजद्विहंगौध समावृताभिः पृच्छन्त उर्वी मिव भान्ति त्वां तु ॥ ९९ ॥

एवं प्रकारेण विषण्ण चेता वाष्पावृतो गद्गदकण्ठयुक्तः ।
स गायको गीतितर्ति प्रगायन् मूर्छां गतो भूमि तले पपात ॥ १०० ॥

कारुण्यपूर्णा मथ शोकगीतिं तात्कालिकीं तां प्रतिपद्य सद्यः ।
व्यावृत्त सर्वेन्द्रियवृत्तिमन्तो निःस्तब्धतामायुरिमे विषण्णाः ॥ १०१ ॥

चीत्कार शब्दैः करुणं रुदन्तो धिक् जीवनं तेन विना स्मदीयम् ।
हा हेति वाचा सदिगन्तरालं द्यावापृथिव्योरुदरं विवव्रुः ॥ १०२ ॥

यह आश्रम के पेड़ लंबी २ शाखाओं से पक्षियों की बोली द्वारा भूमि को आप के लिए पूछते हुए प्रतीत होते हैं इस प्रकार वह गायक विषाद से मूर्छा खा कर गिर पड़ा तथा इस की करुणा भरी गीति को सुनकर सभी लोग चित्र की तरह हो गए फिर रोने लगे कहने लगे कि उनके बिना जीवन निन्द्य है इस प्रकार सारा आकाश रोने की ध्वनि से भर गया।

सर्वे तदा नागरिका मनुष्या आबालवृद्धा यवनाश्च सिखाः ।
आरण्यकाः पक्षिमृगादयस्तु तुरंगगोजोष्ट्र मुखाश्च जीवाः ॥ १०३ ॥

उस समय वियोग के दुःख को नगर वासी लोग तथा बन के सब पशु पक्षी आदि जीव सहन न कर सके।

आकस्मिकं प्राप्य तु तद्वियोगं तज्जेन शोकेन तदातितप्ताः ।
सोढुं न शक्ता करुणातिवेगान् अश्रु प्रबाहैर्जलदा इवासन् ॥ १०४ ॥

धारा प्रवाहेण तु नेत्र मार्गात् पयःप्रवाहं सततं किरन्तः ।
ते स्नापयन् भूमितनुं तदानीं सर्वे सशोका जननी मिव स्वाम् ॥ १०५ ॥

वृद्धा युवानः शिशवः समन्तात् नराश्च नार्यश्च भृशंविषण्णाः ।
नैवोद्विज्यन्त तृषादिवेगैः प्राप्ता अवर्ण्यां विषमामवस्थाम् ॥ १०६ ॥

अथाभ्यषिञ्चन् सलिलेन केचिदवीजयस्तं व्यजनैस्तथान्ये ।
बहूपचारैः पुनराप्त संज्ञः स गायक स्तं विललाप भूयः ॥ १०७ ॥

गुणाढ्यैश्चम्बाद्यैः स्थलकमलमुख्यैश्चकुसुमैः ।
रमानाथं रामं सनियमममिमं यः स्म यजते ॥

दिवा रात्रौ यः स्वानुपदिशति च स्माभयपदम् ।
यदीयं सन्नामस्थिरमिह स यातोऽन्य भुवनम् ॥ १०८ ॥

मानवतथा जंगल के पशु पक्षी जीव अचानक इनके वियोग को पाकर आंसु बहाते-बहाते बादल जैसे बन वए आंसु की धारा से भूमि को सींचा, वृद्ध जवान बालक किसी को भूख प्यास नहीं लगी इस समय गायक को किसी ने पानी से सींचा किसी ने पंखा किया चिर के बाद वह होश में आया फिर रोने लगा । कई जल स्थल पुष्पों से जो भगवान् का पूजन करते थे दिन रात जो अभय पद का उपदेश देते थे जिस का नाम सदा स्थिर है वह परलोक में पधारे ।

इति परलोक प्रस्थान कथनं नाम त्रयोविंशति सर्गः ।

---

# अथ प्रयाणकालिकोत्सव वर्णनं नाम चतुर्विंशति सर्गः ।

तस्मिन् प्रयाते खलु देवलोकं भूलोकलोकैर्विहितं तदानीम् ।
विस्मापकं दृष्टि मतां विधानं वाच्यं न वैवाग्भि रुदार वाचाम् ॥ १ ॥
हस्त्युष्ट्र कादींश्च पशून् विभूष्य ग्रैवेयकाद्यैर्बहु भूषणौघैः ।
आरुह्य तानेव मृदंग दुन्दुभ्यादीननेकान् प्रतिजघ्नु रेते ॥ २ ॥
पुष्पैः करण्डान् भरितांस्तथान्ये शिरस्सु संस्थाप्य जना समन्तात् ।
श्रद्धाभरेणानत कन्धरास्ते ववर्षु रोर्यस्य शवेऽति भव्ये ॥ ३ ॥
काषायरक्तैर्हरितैवलक्षै र्नानाविधै रश्मिनिबद्धवंशैः ।
ध्वजैर्जना व्योमनि नैकवर्णां चन्द्रश्रियं विस्मयदां वितेनुः ॥ ४ ॥
संन्यासिनो बैष्णव सम्प्रदाया सन्तस्तथान्येऽपि विरक्तचिताः ।
समागतास्तस्यगुणान् स्मरन्तः श्रद्धापरा योग्यविधिं विधातुम् ॥ ५ ॥

उन की परलोक यात्रा के समय जो महोत्सव किया गया । वह बिस्मय जनक था । भूषणों से सजे हाथी घोड़ों पर लोग दमामे बजाते जा रहे थे । विमान पर पुष्प बरसा रहे थे । कई रंग के ध्वजों से आकाश की शोभा बढ़ा रहे थे । सभी संप्रदायों के संत इस समय शामिल हुए ।

श्रुत्वा तदा वृत्तमिदंत्वकस्मात् विषण्णचित्ता बहवो मनुष्याः ।
ग्रामान्तरेभ्यः परिवृद्ध शोकाः संप्रस्थिताः स्वान् प्रविहायगेहान् ॥ ६ ॥

नामाक्षरा पूरितकेतवस्ते वंशाग्र बद्धान् दधतः करैस्तान् ।
ग्रामस्य दूरादपि दर्शकानां स्वोद्देश्यबोधं जनयन्तईयुः ॥ ७ ॥

क्वचिद्ध्वजेऽभूल्लिखितं सुवर्णैः श्रीकृष्णलोलाकरमंडलीति ।
जयो स्तु वज्रांग बलेस्तथेति क्वचित्स्म पृथ्वालिखितं विभाति ॥ ८ ॥

शास्त्रीय विज्ञान कला प्रवीणा समागता स्तत्र च शास्त्रिणोऽपि ।
योग्यं विधिं ज्ञापयितुं तदानीं पूर्वोपकारैर्हृदये कृतज्ञाः ॥ ९ ॥

इस दुःखद समाचार को सुन कर दूसरे गांवों के लोग भी आ गए। ध्वजा पर लिखे नाम से वे अपना उद्देश्य बता रहे थे। किसी ध्वजा पर श्री कृष्ण लीला मंडली लिखा था। किसी पर बजरंग बली की जय लिखा था। विद्वान् जन भी बहुत आए थे।

संगीत कार्ये कुशलास्तु केचित् प्रान्तान्तर प्राप्त महायशस्काः ।
मार्गव्यथाया गणनामकृत्वा समागता कर्तु मिहार्ह सेवाम् ॥ १० ॥

संख्यामतीता इतरेऽपि विज्ञाः समागता दूरदिगन्तरेभ्यः ।
आकस्मिकं दैवकृतं चरित्रं विचिन्तयन्तो हृदयेषु तस्य ॥ ११ ॥

शास्त्रीय रीतिर्विहिता तदानी मन्त्येष्टि पिण्डादि विधान दृष्टा ।
द्रष्टुं न शक्ता अपि दृश्यमेतत् दैवस्य दुर्वारतयाऽभ्यपश्यन् ॥ १२ ॥

प्राप्ते चतुर्थे दिवसे श्मशाने पुष्पाणि चित्वाथ चिताप्रदेशात् ।
तूर्यादि वाद्येषु वदत्सु तत्र पठत्सु वर्णिष्वपि शान्ति पाठम् ॥ १३ ॥

मधुर गाने वाले योग्य जन भी वहां पर आए तथा और भी बहुत लोग आए हृदय में दैव लीला का ध्यान कर रहे थे। शास्त्र रीति से अन्तिम संस्कार किया गया दैव वश इस दृश्य को लोगों ने विवश होकर देखा चौथे दिन बाजे बजाते हुए चिता से पुष्पों का चयन किया गया।

वर्षत्सु लोकेषु सुपुष्प वर्षा महात्मनस्तस्य बुधाः प्रशिष्यम् ।
भागीरथी वारिणि पुष्प पुञ्ज मुत्स्रष्टु माज्ञापित वन्त एनम् ॥ १४ ॥

मातेव जग्राह चिरागतं तं सा स्नेह सोल्लास तरंग हस्तैः ।
स चापि तां पुत्रवदेव भक्ति श्रद्धा समुत्फुल्ल हृदा ननाम ॥ १५ ॥

विप्रैर्विधिज्ञैरथ सांगतार्थं विद्वद्भिराचार्यवरैः समानम् ।
मांगल्य होमो विहितस्तदानीं शास्त्रोक्तरीती रनु सृत्य तावत् ॥ १६ ॥

पुष्प वर्षा हो रही थी तब सब जनों ने मिल कर पूज्य महात्मा जी के प्रशिष्य रामदास को श्री गंगा जी में पुष्पप्रवाह वास्ते कहा।

वहां श्री गंगा जी के पास जा कर इस ने श्रद्धा भक्ति से पूर्ण हृदय से प्रणाम किया श्री गंगा माता ने भी चिर से इसे अपने पास आया देखकर तरल तरंग रुपी हाथों से आलिंगन किया। इस अवसर पर विद्वान् आचार्य लोगों ने शास्त्र विधि के अनुसार मंगल मय होम किया।

विद्यार्थिवर्गेण सुशिक्षितेन श्री स्वामिनस्तस्य कृपाकरस्य ।
प्रदर्श्यते स्मेह कृतज्ञता या सा वर्णनीया विदुषामथापि ॥ १७ ॥
रामायणस्याथ कृतैरखन्ड पाठैर्नवाहैश्च तथा स्वतन्त्रैः ।
गीतादि पाठैश्च पुराण साप्तैर्भूमि तदा पाठमयी मकुर्वन् ॥ १८ ॥
वेदादि विद्याभ्यसनेषु लग्नैर्बालै स्तथा गीति कला प्रवीणैः ।
असीम शोक प्रसरावनद्धा प्रास्थानिको गीतिरभूत् प्रयुक्ता ॥ १९ ॥

सुशिक्षित विद्यार्थियों ने उस समय अद्भुत कृतज्ञता प्रगट को श्री रामायण जी के अखंड नवाह पाठ श्री गीतापाठ पुराण सप्ताह से भूमि को पाठमयी कर दिया, विद्या अभ्यास करने वाले छोटे बालकों ने शोक के वेग से पूर्ण प्रयाण कालिक गीति को गाया। जिस से शोक का प्रसार अधिक बढ गया।

विस्मापिकां श्रोत्रमतां नराणां भावैरनेकैः परिपूर्णगात्रा ।
सा गीति रागीयत बस्तुतस्तु नानात्मकं तैस्तु मनोऽर्प्यते स्म ॥ २० ॥
शिष्योत्तमोऽस्य भवभंजनदासनामा, श्रद्धापरः शमदमादि गुणानुरक्तः ।
साकेत लोक गत मान्य गुरोर्निमित्त चक्रे कृतिं किल परां जनता प्रशंस्याम् ॥
श्रद्धाप्रधानेन तथाहि तेन मिष्टान्नपानैर्विविधैस्तदानीम् ।
देशान्तरानीत फलैर्यथेष्टं संतोषिता विप्रकुलावतसाः ॥ २२ ॥
यज्ञो महानारचितश्च तेन सन्तोष्य विप्रान् बहुदक्षिणाभिः ।
विद्यार्थिनो मान्यविपश्चितश्च दानेन मानेन च सोऽभ्ययष्ट ॥ २३ ॥

योग्य छात्रों ने गीति का प्रयोग कर के उस समय अपने शुद्ध मन को उनके समर्पित कर दिया जिनके दर्शन से दर्शन करने वाले के मन में परम शांति होती है ऐसे उनके शिष्य श्री भवभंजन दास जी ने अद्भुत कार्य किया श्रद्धा से अन्न फलों के द्वारा ब्राह्मणों को तृप्त किया दक्षिणा दीं छात्र तथा विद्वानों का मान किया।

यज्ञे तदा शान्ति मये प्रणीते कार्यान्तराणि प्रविहाय सर्वैः ।
समर्पितो यज्ञविधौ निजात्मा यतीशरूपंहृदये दधानैः ॥ २४ ॥

इस महान् शान्ति यज्ञ में अपने सब काम भुला कर लोगों ने सेवा करते २ श्री संत जी के प्रति कृतज्ञताप्रगट की।

करण्ड पात्रेषु निधाय सद्यः सर्व्वजनापूर्णमुखान् पदार्थान् ।।
सेवा महान् धर्म इतीह धन्यं स्वात्मानमेते खलु मन्वतेस्म ।। २५ ।।

स्निग्धान् मनस्तोषकरान् जनानां सुखंडखाद्यानथ मोदकादीन् ।
विधातु मन्योन्य धृतानुरागाः लग्ना अभूवन् निपुणा मनुष्याः ।। २६ ।।

आच्छादनाहारकृताभिलाषा ये येऽर्थिनस्तत्र समागताश्च ।।
तेभ्यः प्रदातुं तदभीष्टमेके बभूवुरुद्युक्त तरा उदाराः ।। २७ ।।

सेवा विधानाय च दर्शनाय तथा कथायाः श्रवणाय तत्र ।
समागताना मुचितादरार्थं प्राग्द्वारि केचिच्च समासते स्म ।। २८ ।।

केचिच्च भक्ताः मनुजा अगाधात् रज्वा समाकृष्य जलं सुकूपात् ।
नाना प्रकारैः रजतादिपात्रै रपेक्षितं वारि समानयश्च ।। २९ ।।

यज्ञ के समय सबने मिलकर सेवा की टोकरों में अन्न भर २ कर ले जाते हुए सेवा के कारण लोगों ने अपने को धन्य जाना अनुराग से सुन्दर २ पक्वान्न तयार किये जो जो अर्थी आशा लेकर द्वार पर आए उनका यथायोग्य सत्कार किया गया सेवा दर्शन श्रवण के कारण आने वालों का भी उचित आदर किया गया कई भक्तों ने रस्सी के सहारे कूएं से पानी खींच कर कार्य के लिए ला कर दिया ।

कार्यस्थली मार्जन लेपनादि कार्य प्रसक्ता नगर स्त्रियोऽपि ।
परोप कारैक परे सतोत्थं संदर्शयामासु रतीव भक्तिम् ।। ३० ।।

यज्ञ भूमि का मार्जन लेपन आदि सेवा के द्वारा देवियों ने पूज्य महात्मा जी के प्रति कृतज्ञता प्रगट की ।

यज्ञे जनानां कृत योजनानां पात्राणि भक्त्या परिमार्जयन्ती ।
धन्यं स्वमात्मान ममन्यतैका सेवा सुधीनामपि कामनीया ।। ३१ ।।

शान्त्याश्रमस्यागत शान्तिदस्य संचालिके योग्यतमे च देव्यौ ।
श्री जीवनी देव्यनयोरथैका श्रौ केशरावत्यपरा गुणाढ्या ।। ३२ ।।

ताभ्या मुभाभ्यामितरान्विताभ्यां संकीर्तनं प्रेममयं प्रणीतम् ।
शोकावृता येन जना समस्ता मनोगतां शान्ति शिखामवापुः ।। ३३ ।।

संकीर्तने तत्र तथा प्रणीतेऽन्योन्यं स्वरं चारुतरं नियोज्य ।
वृन्दावनं रामपुरी किमेषा भ्रान्तिं गता केऽपि जनास्तदानीम् ।। ३४ ।।

रामं रमेशं सततं जपन्त्यौ मातृस्तथान्या अपि जापयन्त्यौ ।
भूमिं तथा काशतलं समन्तात् श्री रामनाम्ना समपूरयेताम् ।। ३५ ।।

यज्ञ में भोजन करने वालों के पात्र साफ करके किसी देवी ने अपना सौभाग्य

जाना क्योंकि सेवा तो परम धर्म है। शान्ति आश्रम की २ देवियां श्री केशरां देवी ने वा श्री जीवनी देवी ने उस समय संकीर्तन कराया जिससे शोकाकुल जनता को परम शान्ति मिली संमिलित संकीर्तन के होने से वृन्दावन वा अयुध्या का दृश्य बन गया भूमि वा आकाश श्री राम नाम से पूर्ण थे।

चेतो वचः काय बिधेय वर्गे हित्वाखिलं यत्प्रिय मेकमस्ति ।
गोसेवनं केवलमद्वितीयं लक्ष्यं परं यद्विदितं नराणाम् ॥ ३६ ॥

सर्वेषु भूतेषु चराचरेषु भावैरनेकैः समुपावृतेषु ।
एका समा शान्ति मयी विभाति दृष्टिर्मनोहर्षकरीयदीया ॥ ३७ ॥

गण्यो महाज्ञानिषु यो जगत्यां नृसिंहदासाख्य महानुभावः ।
साकेतयातस्य कृतेऽकरोद्यत् वाचामगम्यं खलुतज्जनानाम् ॥ ३८ ॥

अपने मन बाक् कर्म से सब त्याग कर एक गो सेवा ही जिस को प्रिय रही सभी प्राणियों में जो समदर्शी रहे इस प्रकार के महात्मा श्री नृसिंह दास जी ने जो अद्भुत भाव प्रगट किया वह भी अनिर्वचनीय हैं।

श्री स्वामिना साधुतयोपनीतो मान्यो महात्मा जयरामदासः ।
सिन्धूपभूभाग निवासकारी बाल्येऽप्यसौ बुद्धि विवेक शीलः ॥ ३९ ॥

आराधयत्येष सदाज्ञनेथं नियम्य सर्वाणि निजेन्द्रियाणि ।
यतस्ततस्तत्कृपया महात्मा पुरस्सरः शक्तिमतां बभूव ॥ ४० ॥

श्रुत्वागतं देव गतिं तमेवं प्रदर्शकं साधु पथोऽस्य खिन्नः ।
श्रद्धां पुरस्कृत्य समागतोऽसौ तदाश्रमं क्षुब्ध मनोऽवकाशः ॥ ४१ ॥

अदर्शनात् वृद्ध महात्मनोऽसौ दोदूय मानो मनसापि कामम् ।
धैर्येण संस्तभ्य मनस्तदीया मर्चां यथायोग्यतया चकार ॥ ४२ ॥

श्री स्वामी जी के द्वारा जिस ने साधु मार्ग अपनाया था वह श्री जय रामदास जी भी सिन्धु नदी के पास से वहां आए वृद्ध महा पुरुष के दर्शन नहीं हुए चित में संताप तो हुआ परन्तु धैर्यसे मन को टिका कर यथायोग्य पूजा की।

श्राद्धादि कर्मास्य यथोचितं ते महात्मनो देवगतिं गतस्य ।
कृत्वा परां भक्ति मुपाश्रयन्तः सर्वेऽपि तस्य स्मरणेऽवदध्युः ॥ ४३ ॥

सामुद्रे सलिले चरन् जलचरः शक्त्येति दूरं कियत् ।
आकाशे विहग स्तथा परिचरन् देशं मितं गच्छति ॥

पूज्यस्यास्य महात्मनः सुचरितं ज्ञातुं न गातुं तथा ।
शक्यं मद्विधमानवेन कथितं किंचिद्भवेच्छ्रेयसे ॥ ४४ ॥

साकेत वासी पूज्य महापुरुष के प्रति सब ने श्रद्धापूर्वक कर्तव्य का पालन किया इस के बाद ध्यान से उनका स्मरण किया । सागर में जलचर शक्ति के अनुसार विचरता है तथा आकाश में पक्षी भी कुछ दूर तक उड़ता है इसी प्रकार सागर का पानी वा आकाश की तरह श्रीसंत जी का चरित अनंत है मेरे जैसे साधारण बुद्धि वाले से कहा गया थोड़ा सा चरित कल्याण कारी हो ।

इति प्रयाण कालिकोत्सव वर्णनो नाम चतुर्विंशति सर्गः ।

---

# अथोत्तराधिकारीनिरूपणो नाम पंचविंशति सर्गः ।

देहावसानोर्ध्वं विधिं विधाय शास्त्रीय रीतिं परि पालयन्त. ।
संचिन्तयन्ति स्म परस्परं ते समेत्य भक्ताः पुरुषाः स्त्रियश्च ॥ १ ॥
त्यागं सदा कालिक मद्य कृत्वा सिद्धो महात्मा गतवान् परत्र ।
अतोऽस्मदीयं किल जीवनं नु कमाश्रयं गच्छतु तद्वियुक्तम् ॥ २ ॥

शिष्यं तु तस्य भवभंजनदास मेते सर्वे गता निज हिताय हितैषिणंतम् । ३ ।
दीक्षां यतो यतिवरात्किल रामदासः प्राप्तोऽभवत् सफलतामिह संविधातुम् ॥

वृद्ध गुरु जी के देह के बाद उचित कर्म पूर्ण होने पर सब ने विचार किया कि वे महापुरुष सदा के हमें छोड़ कर चले गए अब हमारे जीवन का आश्रय कौन हो । ऐसा विचार करने पर उनका ध्यान श्री स्वामी भवभंजन दास जी की ओर गया जिन से श्री रामदास ने दीक्षा प्राप्त की थी ।

तथाविधं तं हृदयेऽवधार्य जिज्ञासवस्तस्य पदारविन्दे ।
प्राप्ताः स्वकल्याण मभीप्सवश्च समर्पयामासु रिमे मनांसि ॥ ४ ॥
तेजस्विनं तं पुरतोऽवलोक्य पद्मासनस्थं सुखसिंधुमग्नम् ।
श्रद्धा भरेणावनतोत्तमांगा स्तुतिं परा मीयुरभूत पूर्वाम् ॥ ५ ॥

तब सब जिज्ञासु जन अपने कल्याण के लिए उन की शरण में गए और श्रद्धा से सिर झुका कर प्रणाम किया ।

तानागतान् भक्त जनान् पुरःस्थान् प्रीत्या महात्मेति वचो बभाषे ।
भो भाग्यवन्तो मिलिताहि सन्तः प्राप्ता पुरो मेऽद्य कथं भवन्तः ॥ ६ ॥
एतत्समाकर्ण्य कृपावचस्तत् तस्यातिमान्यस्य महात्मनस्ते ।
भावं स्वकीयं जगदुः पुरस्तात् स्पष्टं जगत्क्षेम विधायकस्य ॥ ७ ॥

तस्मिन् प्रयाते परलोक वासं भवाश्रयोऽस्तीति भवान् महात्मन् ।
आशा स्मदीया किल कापि जाता तां त्वं दयालो सफलां विधेहि ॥ ८ ॥

इन सब को सामने देख कर संत जी ने आने का कारण पूछा तब सब ने अपने मन का भाव संत जी के सामने प्रगट करते हुए कहा। हे संत जी वृद्ध गुरू जी तो साकेत में गए अब आप ही हमारा आश्रय हो।

प्राणस्य योगेन यथा शरीरं सर्वं करोत्येव निजेष्टकार्यम् ।
त्यक्तं तथा तेन यथा कथंचित् तज्जायते कार्यं कला विहीनम् ॥ ९ ॥
राज्ञीह राज्ये सति विद्यमाने सर्वत्र शान्तिः परिदृश्यतेऽत्र ।
राज्यं वियुक्तं तु ततः कदाचित् शान्तेरभावं ननु शीघ्र मेति ॥ १० ॥
अधिष्ठिता देव महानुभावैः प्रजा भवेद्धर्म परा तथेह ।
धर्मस्य भावो हृदये नराणां तद्दर्शनादेव यतोऽभ्युदेति ॥ ११ ॥

सबने कहा कि जैसे प्राण के संयोग से शरीर कार्य करता है अन्यथा नहीं अथवा जैसे राजा के होने से राज्य में शान्ति होती है अन्यथा नहीं वैसे ही महापुरुषों के द्वारा ही जनता का जीवन पवित्र होता है अन्यथा नहीं।

लोकं ह्यधिष्ठाय विधाय पुण्यं साकेत लौकालयमेव यातः ।
वृद्धो महात्मा विदुषां वरेण्यः पश्चाच्छरण्योऽसि भवाञ्जगत्याः ॥ १२ ॥
वाञ्छा ततो ह्यस्ति शुभास्मदीया त्वदाश्रितं जीवन मेतदस्तु ।
संरक्षणीया भवतापि नाथ सर्वे यथा योग्यतया प्रपन्नाः ॥ १३ ॥
गुणालयाः शान्ति परीतचित्ता विराजमाना स्तपसा पृथिव्याम् ।
परोपकारैक परा महान्ताः केचित् क्वचिद्वै प्रभवन्ति सन्तः ॥ १४ ॥

चिरकाल तक इस लोक को पवित्र करके पूज्य महाराज परलोक चले गए अब हम जाहते हैं कि आप हमारी रक्षा करें क्योंकि कहीं २ कभी २ परोपकारी सन्त प्रगट होते हैं।

तेषां निशम्येति वचो महात्मा संचिन्तयामास विधाय मौनम् ।
वाक्यं यदेते कथयन्तिमह्यं युक्तं विचारेण विभावयामि ॥ १५ ॥
आयाति वृद्धेषु दिवंगतेषु कार्यस्य भारः कुल वर्द्धकेषु ।
लोक प्रणाली मनुसृत्य चेमां कुर्यां जनाना मनुकूल सेवाम् ॥ १६ ॥
विचार्य चैवं हृदये स्वकीये स्पष्टं वचः प्राह हिताभिलाषी ।
अस्त्वेवमिच्छन्ति यथा भवन्त स्तथा करिष्यामि भवद्धिताय ॥ १७ ॥

उन की ऐसी बात सुनकर संत जी ने सोचा कि इन की बात उचित मालूम होती है यह एक प्राचीन लोक रीति है कि वृद्धों के जाने पर कार्य का भार उनके वंशजों पर होता है। ऐसा विचार कर स्पष्ट कहा कि जैसा आप सब कहते हैं वैसे होगा।

श्रुत्वा तदा ता मनुकूल बाचं सर्वे परां तुष्टिमितास्तदानीम् ।
धन्योऽस्ति धन्योऽस्ति भवानितीमे महात्मने धन्यगिरं तदाहुः ॥ १८ ॥
आशासु सर्वासु निवासिनो ये मनुष्यतोत्थान विधान लक्ष्याः ।
तमेव माधार मिता जनास्ते कालं नयन्ति स्म सुखेन सर्वे ॥ १९ ॥

पूज्य संत जी की ऐसी वाणी सुन कर सब ने प्रसन्न होकर बार २ उनका धन्यवाद किया और संत जी का आधार पा कर सभी का धार्मिक जीवन परिपूर्ण हुआ।

प्राप्ते वसन्ते तरवो लताश्च पूर्णं विकासं सुतरां लभन्ते ।
चेतांसि तुष्टानि तथा समेषां श्रुत्वा गिरं तस्य सतोऽनुकूलाम् ॥ २० ॥

एतावदुक्त्वाथ समागतेभ्यः प्रवर्तते स्मोक्त विधौ महात्मा ।
ततः परं तस्य तपः प्रभावात् सर्वा दिशः शान्ति शिखा मवापुः ॥ २१ ॥

शुद्धं तदा काशतलं चकाशे वाता मनो हर्ष करा ववुश्च ।
शुद्धाम्बुबिन्दूनवमन् पयोदा नौचैर्गतास्ते नभसि भ्रमन्तः ॥ २२ ॥

हितेप्सवः शास्त्रविदस्तथाहि धर्म्यां प्रवृत्तिं मनसाऽऽद्रियन्तः ।
ज्वलन्त मग्निं जुहुवुर्यथेष्टं संप्रेरितास्तेन महात्मनैते ॥ २३ ॥

विद्यार्थिनः पाठ विधौ तदानीं धृतिं समालम्ब्य सुखं प्रवृत्ताः ।
यतो जनाना मनुकूल योगात् तुष्टिः समेषां जनिता नवीना ॥ २४ ॥

वसंत के प्रभाव से जैसे पादपों में विकास आता है ऐसे ही संत जी की वाणी से लोक प्रसन्न हुए इस के बाद संत जी ने पूर्णरूप से लोक सेवा शुरु की जिस से सब को शान्ति मिली आकाश निर्मल था पवन अनुकूल बनकर चला मेघों ने विरले २ बिन्दु बरसाए विद्वानों ने मंगल होम किया तथा छात्र गण अपने स्वाध्याय में लगे एक प्रकार से नवीन जीवन का लाभ हुआ।

मान्यास्ततो वैष्णव साधवोऽपि धर्म्यां सदाचार गतिं जगत्याम् ।
विस्तारयामासु रतीव युक्ताः प्रणोदितास्तेन महात्मनेत्थम् ॥ २५ ॥

कल्याण हेतोर्हरि चन्दनस्य धृष्टस्य पाषाण शिलातलेषु ।
दधुः ललाटेषु जना प्रसक्ता गताः प्रभाते शुभनित्य चर्याम् ॥ २६ ॥

माला स्तुलस्या स्तनु पावनाय धृताः स्वकण्ठेषु विवेक शीलैः ।
पुण्येषु कार्येषु सुखं प्रवृत्तैः पापानि तैरत्र न चिन्तितानि ॥ २९ ॥
प्रसून माला खलु गन्ध पूर्णाः श्रद्धानुसारं रचिता। सुरीत्या ।
करैर्गृहीत्वा सकला सुभाग्याः समर्पयंस्तस्य नरोत्तमस्य ॥ १८ ॥

श्री संत जी की प्रेरणा से वैष्णव संप्रदाय के संतों ने भी विस्तार से धर्म प्रचार किया लोग मस्तक पर रोज़ तिलक लगाते थे तुलसी की माला पहिरते थे तथा पाप का ध्यान किसी को नहीं था सुन्दर फूलों की माला बनाकर नित्य संत जी को अर्पण करते थे ।

सर्वे जना नागरिका स्तथान्ये तुष्टाः समुद्दिश्य कृतिं तदीयाम् ।
कृतै स्तदर्थं जयकार शब्दैः संपूरयन्ति स्म दिशावकाशान् ॥ २९ ॥

स्वभावतः सोऽपि परोपकारी श्रद्धां परांचाथ विलोक्य तेषाम् ।
तथा करोद्यत्न मयं यतीशो यतो जनानां सुख सिद्धि रस्तु ॥ ३० ॥
दिने दिने तस्य कृतिं निरीक्ष्य महात्मनः संयम शालिनस्ते ।
गोपालदासं भुवि वर्तमानं जना अमन्यन्त मुदा प्रपूर्णाः ॥ ३१ ॥

सभी लोग पूज्य संत जी की कृपा से प्रसन्न थे सथा उनके जय कारे लगा कर दिशाओं को गुंजा देते थे । संत जी स्वयं परोपकारी थे परन्तु भक्तों की श्रद्धा देख कर और अधिक ध्यान से उनका कल्याण करने लगे । अब लोगों ने जाना कि श्री गोपालदास जी मानों यही हैं ।

वेदाभि विज्ञानबता च तेन संसारि कल्याण चिकीर्षुणाच ।
प्रीत्या मनुष्येषु यथाकथंचित् विस्तारिता धर्ममयी प्रणाली ॥ ३२ ॥
पूजां परेशस्य स योग युक्तो भक्त्या करोदव्यभिचारवत्या ।
वश्यो यथास्यापि जगन्नियन्ता रामः स्वयं मासहितो बभूव ॥ ३३ ॥
गावोऽस्य सेवाविधिना प्रसन्ना भोज्यान्नपानादि पदार्थदातुः ।
गोपाल कृष्णस्य यथा कदाचिद् वृन्दावनान्तः परिचर्ययासन् ॥ ३४ ॥

ज्ञानवान् लोक हितकारी संत जी ने प्रेम से सब में धार्मिक भावना पैदा की अपनी निरंतर पूजा के द्वारा भगवान् राम को अपने वश में कर लिया गौएं ऐसे प्रसन्न थी जैसे वृन्दावन में भगवान् श्री कृष्ण जी सेवा से प्रसन्न थीं ।

क्षमा दया शान्ति गुणालयोऽयं कामान्नराणां खलु संविधत्ते ।
तस्योपकारेण भवे परीताः प्रायोऽसुमन्तः प्रतिभान्ति सर्वे ॥ ३५ ॥

संपूर्णशक्तिर्भगवानिवायं सर्वत्र साम्येन हि वर्तमानः ।
ररक्ष भूलोक निवासि जीवान् तन्वन् सुशिक्षां सुखसिद्धिमूलाम् ॥ ३६ ॥

आकाशवत्सूक्ष्मतया महात्मा शीलेन चेतस्सु नृणां प्रविष्टः ।
तद्दर्शनेनापि मुदं ययुस्ते चन्द्रं चकोरा इव भालयन्तः ॥ ३७ ॥

अपने शुभ गुणों के द्वारा संत जी ने सब जीवों का उपकार किया पूज्य संत जी ने धर्म शिक्षा का प्रचार किया जिस से जनता अपने जीवन में परम सुख प्राप्त कर सके। सभी लोग इनके दर्शन से ऐसे आनंद पाते थे जैसे चांद को देखकर चकोर आनंद पाते हैं।

एकांत मास्थाय कदाचिदेवं शास्त्राणि चेतः परिमार्जकानि ।
पूर्वैः प्रणीतानि जगद्धिताय विचार शीलो विचिनोति बुद्धया ॥ ३८ ॥

समागतान् भक्तजनान् कदाचित् श्रद्धानुसारं पुरतः स्थितांश्च ।
शास्त्रीय भावैर्हृदयंगमैश्च स्वात्माव बोधं प्रगटी करोति ॥ ३९ ॥

नित्यं कथां धार्मिक पुस्तकानां शुभां प्रभाते कुरुतेऽथ सायम् ।
पुष्टानि चेतांसि यतो नराणां विकार हीनानि भवन्ति सद्यः ॥ ४० ॥

एकांत में बैठकर यह यतिवर कभी २ शास्त्रों का मनन करते थे। फिर अपने पास आने वाले जिज्ञासु वृन्द के सामने शास्त्रों का रहस्य प्रगट करते थे। प्रभात में तथा सायंकाल में रोज पवित्र ग्रन्थों की कथा करते थे। जिस के द्वारा लोगों के मन निर्मल हो जाते थे।

तस्य प्रभाबेण विचंचलानि स्थैर्यं प्रयातानि मनांस्ययत्नम् ।
लोकस्य सन्तो हि यतो भवाब्धौ मग्नान्मनुष्यान् परितारयन्ति ॥ ४१ ॥

एवं प्रकारेण चरञ्जगत्यां सदा जनानां हित मीहमानः ।
रजस्तमोभाव मपास्य सम्यक्, सर्वं जगत् सत्वमयं चकार ॥ ४२ ॥

संत जी के प्रभाव से लोगों के चंचल मन स्थिर हो गए थे क्योंकि संतों का आगमन ही लोगों को तारने वास्ते होता है।

बंबूल नंबांसगु रंगपुर रोडा जमाल्याधि चनादिकाद्याः ।
ग्रामो वरो झारकलाभिधानः चान्यस्तथा गौहरवाल नामा ॥ ४३ ॥

पूर्णो जनैर्धर्ममयैस्तु दुल्हे वालाभिधोऽन्यो हरनोलिनामा ।
प्रभाविताास्तस्य गुणैः समन्तात् प्राप्ताः परां धर्मदिशं समस्ताः ॥ ४४ ॥

बंबूल-नंबांसगु रंगपूर-रोडा-जमाली आधि चन झरकल गौहर वाला दुल्हेवाला हरनोलि आदि सब ग्रांम इनके प्रभाव से धर्म मार्ग में प्रवृत्त हो गए।

सेवारामः शमदम मयो भूतपूर्वो महात्मा ।
गानाचार्यो द्विजदितनरामोऽमृतासार वर्षी ।
नाम्ना दासो ह्यनुगत गरीबाख्य शब्दस्तु थस्य ।
सर्वे सन्तः स्मृति गतिगताः तत्प्रभावाज्जनानाम् ॥ ४५ ॥

श्री सेवाराम सती संगीत आचार्य पंण्डित श्री दितनराम जी महाराज तथा संत गरीबदास जी आदि सब पूर्व बर्ती महा पुरुष संत भवमंजन दास जी के प्रभाव के कारण लोगों की स्मृति में आते थे ।

सर्वाणि कर्माणि कृतानि तेन, निष्काम भावेन महात्मनेह ।
मनः स्वकीयं तु नियम्य हृश्यात् समर्पितं विश्वविधानमूले ॥ ४६ ॥
भाग्याद्भुवे स्वादुतमो गृहीतः रसस्तु यैः राममयो मनुष्यैः ।
ते लौकिकानन्दमसार मेतं मत्वा न मज्जन्ति कदाविदस्मिन् ॥ ४७ ॥

संत जी ने सभी कर्म निष्काम भावना से किये उनका मन सदा भगवान् में लीन रहता था । सौभाग्यवश जिन्हों ने राम का रस पी लिया वे पुनः संसार के सुख की कामना कभी नहीं करते ।

युद्धोत्तरं कौरव पांडवानां दुर्दैवतो भारतभूमिरेषा ।
रत्नप्रसूर्या चिरतः प्रसिद्धा दौर्बल्य माप्ता विषमज्वरेव ॥ ४८ ॥
विच्छिन्न मूला मिह राज सत्तां परस्पर द्वेषवशाद्विपन्नाम् ।
विलोक्य राज्ञामिह भारतानां समाययुर्बाह्यजनाः प्रकामम् ॥ ४९ ॥
शनैः शनैः स्वात्मकुलाभिमानं नष्टं नृपाणां तु तदात्व कालात् ।
यदात्व कालाद्यवनांगलानां व्याप्तं प्रभुत्वं बहुभिः प्रकारैः ॥ ५० ॥
सर्वो जनः संस्कृति मात्मनीनां स्व सभ्यतां चापि विहाय मौर्ख्यात् ।
गन्तुं प्रवृत्तो हतमन्दभाग्यः गृहे बहिर्वापि न यस्य मानम् ॥ ५१ ॥

कौरव तथा पाण्डवों के युद्ध के बाद यह भारत देश बहुत दुर्बल हुआ राजसत्ता परस्पर के द्वेष से छिन्न भिन्न सी हो गई तब बाहर के लोगों ने प्रवेश किया धीमे २ यवन जाति का शासन हो गया और भारतीयों का आत्माभिमान चला गया । आम लोगों ने अपनी संस्कृति को भुला दिया तथा मूर्खतावश कुमार्ग को अपना लिया ।

देशं चिरं तुर्कगणाः शशासुः तैः पीड़िता भारतभूमि रासीत् ।
गौराङ्गिनो राज्यपदेऽधिरूढ़ा देशस्य हानिं महती मकुर्वन् ॥ ५२ ॥
दृष्ट्वा दशां कष्टमयीं तदानीं क्षुब्धा भृशं भावुक भारतीयाः ।
शत्रूंस्तदोन्मूलयितुं समूलं संगत्य संघर्षं कृतौ विलग्नाः ॥ ५३ ॥

गान्धेः सुभाषस्य जवाहरस्य शास्त्र्यादिकानां च परिश्रमेण ।
सर्वेद्विषोऽत्यन्तभियाविषण्णा त्यक्तुं त्वरा भारतवर्ष मैच्छन् ॥ ५४ ॥

महर्षिवेदाङ्क शिवांगलाब्दे मध्येत्रगस्तस्य निशीथ काले ।
मुक्ति गतो भारतवर्ष देशः छित्वा दृढ़ं कूट विरोधि जालम् ॥ ५५ ॥

चिरतक तुर्क जाति ने भारत पर शासन किया फिर अंग्रेज जाति ने अपने खासन काल में वहुत हानि की इस से भारतीयों को सोच हुआ श्री गान्धी जी सुभाष जी पं० जवाहर लाल जी आदि के परिश्रम से १९४७ अगस्त १५ के दिन भारत स्वतन्त्र हो गया।

द्विषस्तु चिंता चिति दह्यमाना भीता निजाघैः परि कम्पमानाः ।
संपन्नदेशं विवशा स्त्यजन्तो देशं तदानीं व्यभंजश्छलेन ॥ ५६ ॥
कृत्वाग्रतो धर्म विभीषिकांते चक्रुर्विभागं खलु भारतस्य ।
स्नेहेन सर्वेऽपि पुरा वसन्तः परस्परं द्वेष मुपागतास्ते ॥ ५७ ॥
संघर्ष मन्योन्यमिता विमूढ़ा हिंसा कृतौ ते निरता यदानीम् ।
देशे जनानां वसतां तदानीं वासोऽपि हा व्यत्यय माजगाम ॥ ५८ ॥
मान्यो महात्मापि ततो विहाय तां वासभूमिं यवनैर्गृहीताम् ।
दैवस्य लीलेयमिति प्रचार्य समाययौ भारत भूमि मेताम् ॥ ५९ ॥

शत्रु गण चिंता की चिता में जल रहे थे अपने पुराने पापों से कांप रहे थे संपन्न देश को लाचारी से छोड़ते समय दो भागों में बांट दिया। धर्म का भय दिखा कर देश का बटवारा किया। तब लोगों का आपस में द्वेष हो गया आपस में हिंसा होने लगी ऐसी दशा में फिर देश वासी जनता का परिवर्तन करना पड़ा। मान्य संत जी भी ऐसी दैव लीला को देखकर वहां से इस ओर आ गए।

विख्यात घग्घर नदी पुलिने प्रशान्ते प्रच्छाय भूमिरुह पुञ्ज वृतेऽतिरम्ये ।
वासं चकार तपसा पृथिवीं कृतार्थां कुर्वंश्चिरं सकल लोक हिताभिलाषी ॥६०॥
दैवादयं गदगतिं च गतो कदाचिदन्नोदकादि परिवर्तन योगतश्च ।
तस्मादिमां गुणिगणै रुषितां वरामं बालापुरीं सुखमयीं च समाजगाम ॥६१॥
तत्रस्थितातु जनता च तदा विलोक्य तं स्वामिनं भगवतः पदपद्म भृंगम् ॥
मेने वरं सुकृतपुञ्जफलाभिपूर्णं स्वं जीवनं सकल साधुजनैः प्रशंस्यम् ॥६२॥
कृत्यं चिरं लोक हिताय कृत्वा देवाय तत् सकल कर्म तति समर्प्य ।
गत्या च लोक गतया स महानुभावो लोके परे गमन बुद्धि मवाप सद्यः ॥६३॥

संवत्सरे नृपति विक्रमतो प्रवृत्ते भूतेशखाक्षि गणनागणिते शुभेऽब्दे ।
साकेत लोक गमनं स मुदा चकार. पक्षेऽसिते बलितिथौ किल मार्गशीर्षे ।।६४।।

पूज्य संत जी ने इस ओर आकर सुन्दर घघर नहीं के तीर पर निवास किया तथा तपस्या के द्वारा जनता में शान्ति का संचार किया। दैववश एक समय शरीर में कुछ रोग हुआ अन्न जल भी बदला तो वे वहां से यहां अम्बाला नगरी में आ गए, यहां की जनता संत जी के अद्भुत दर्शन से बहुत प्रसन्न हुई। तथा अपने जीवन को धन्य माना। चिरकाल लोकसेवा करके तथा सभी कर्म भगवान् के अर्पण करके लोग रीति के अनुसार पर लोक जाने का विचार किया। विक्रम संवत् २०१५ में कृष्ण पक्ष ५ तिथि मार्गशिर मास १ दिसंबर १९५८ में स्वर्गवास हुआ।

गच्छन् परं लोक मसौ तदानीं शेषां कृतिं लोक हितेऽवशिष्टाम् ।
कर्तुं स्वशिष्यं ननु रामदास माज्ञापयामास महामनाः सः ।। ६५ ।।
तत्प्रेरितो सा वपि चेतसि स्वं निमित मात्रं खलु मन्यमानः ।
गुरो रनुज्ञां पुरतो निधाय लोकस्य सेवां कुर्वन्निवास्ते ।। ६६ ।।

श्रद्धेयवर स्वामी श्री भवभंजनदास जी ने प्रयाण काल में सार्वजनिक हित के निमित शेष कृति को पूर्ण करने के लिए अपने शिष्य रामदास को आज्ञा दी। उन की आज्ञानुसार उसने भी अपने को निमित मानकर लोक सेवा का व्रत लिया।

गोरक्ष टीला हरिमन्दिरश्च नौरंग कासार परिक्रमायाम् ।
श्री लभ्भु रामाख्य सरोवरस्य तीरे स्थितान्यानि च मन्दिराणि ।।६७।।
धर्म प्रचारार्थ मनेकवारं श्री रामभक्तैर्भवताप तप्तैः ।
आमंत्रितोऽसौ सततं प्रयाति, श्रद्धानु रूपं सुलभः स्वभावात् ।। ६८ ।।
श्री रामलीला ललित प्रसंगां संश्राव्य संश्राव्य दिवानिशं सः ।
कर्तव्य शिक्षां प्रददाति भव्यां येनात्म शुद्धिर्भवताज्जनानाम् ।। ६९ ।।
धर्मोपदेशैः पुरुषाः स्त्रियश्च यस्यात्मशुद्धि सुतरां लभन्ते ।
लब्ध्वा तदाभेदविधेरशून्यं शुद्धात्म रूपं परि शीलयन्ति ।। ७० ।।

परम पूज्य गुरु जी की प्रेरणा पाकर इस के द्वारा श्री गोरख टीला हरिमन्दिर नौरंग तलाब के आस पास वाले मन्दिर श्री लभुराम सर के तट पर बने मन्दिरों में समय-समय पर जाकर भगवान् राम की वार्ता सुनाकर धर्म की प्रेरणा दी जाती है जिस से सत्य का यथार्थ ज्ञान सब में प्रगट होता है।

भवे सन्तः सन्तो विविध सुकृता पूर्ण हृदयाः ।
विधातारस्तुष्टेर्निखिल जनतायाः सुकृतिभिः ॥

नयन्तो वै नाशं मनुज मति हारीहतिमिरम् ।
जयन्त्येवैतस्मिन् जगति विविधाकारकलिते ॥ ७१ ॥

यतो देवी गंगाऽघटित घटनोद्घाटन पटोः ।
प्रभूता भूतानां पतित चय मुद्धर्तु मवनौ ॥

जनाः यस्यां स्नात्वा परम पदवीं यान्ति विमलाम् ।
स नेता साधूना मपि च भगवान् यातु विजयम् ॥ ७२ ॥

निशेश भानू नभसीह यावत् विराजमानौ कुरुतः प्रकाशम् ।
तावज्जागर्त्यां जनता हिताय प्रवर्ततां काव्य मिदं मनोज्ञम् ॥ ७३ ॥

जो पवित्र हृदय वाले संत जन अपने पवित्र कर्मों के द्वारा सदा जनता में संतोष का संचार करते हैं तथा अज्ञान तम का नाश करते हैं ऐसे संत जन संचार में विजयी हों।

सारे जीवों का उद्धार करने वाली श्री गंगा जी का जन्म जिस से हुआ जिस में स्नान करने पर लोग परमपद को पाते हैं योगिवरों का पूज्य वह भगवान् विजयी हों! जब तक सूर्य तथा चन्द्रमा आकाश में विराज मान हैं तब तक यह श्री गोपाल चरितं काव्यम् जनता के हित में प्रवृत रहे।

इत्युत्तराधिकारी निरूपणो नाम पंचविंशति सर्गः ।
इति श्री गोपाल चरितं काव्यं समाप्तम् ॥
॥ शमिति ॥

---

# प्रार्थना

हे योगिवर्य्य परिपूजित पादपद्म
वंशी निनाद परितोषित गोपवृन्द
हे धेनुपालक सतां सततं वरेण्य
हे रुक्मणीश वृषभानुसुतेश रक्ष ॥१॥
हे राम राघव कृपाकर दीन बन्धो
रक्षो विनाश कर हे यतिवृन्द सेव्य
हे सर्व लोक हितकारक जानकीश
मायेत मानव शरीर सदैव पाहि ॥२॥

पता ।—
७८५८/४
अम्बाला शहर ।